Kâvyapradîpa by Govinda with the Commentary Prabhâ by Vaidyanâtha ( N. S. Press ).

Kâvyaprakâs'a by Mammața ( Vâmanâchârya's edition ).

Kâvyâdars'a by Dandin ( Premachandra's Calcutta edition of S'aka 1803 ).

Kâvyâlankâra by Bhâmaha ( A Ms. )

Kâvyâlankâra by Rudrața with the commentary of Namisâdhu ( N. S. Press ).

Kâvyâlankârasûtra of Vâmana ( N. S. Press ).

Kelirahasya by Vaidya Vidyâdhara ( A Ms. in charge of the Royal Asiatic Society of Calcutta ).

Kirâtârjunîya of Bhâravi with the Ghanțâpatha of Mallinâtha.

Kumârasambhava of Kâlidâsa with the Sañjîvinî of Mallinâtha.

Kuvalayânanda of Appayya Dîkshita ( The Poona edition ).

Mahânâțaka of Hanumat ( Calcutta edition ).

Mâlatîmâdhava of Bhavabhûti ( Bombay Sanskrit Series ).

Mahâbhârata.

Mahâbhâshya of Patañjali ( Benares edition ).

Meghadûta of Kâlidâsa with the Sañjîvinî of Mallinâtha ( Prof. K. B. Pâthaka's edition ).

Mitâksharâ of Vijñânes'vara ( N. S. Press ).

Mîmâmsâdars'ana of Jaimini with the Bhâshya of S'abarasvâmin ( Calcutta edition ).

Muktâvalî of Vis'vanâtha Pañchânana ( Bombay edition of S'aka 1808 ).

Naishadha of S'rî Harsha with the Jîvâtu of Mallinâtha ( A Ms., Deccan College Library ).

Nâtyas'âstra of Bharata ( N. S. Press ).

Nyâyadars'ana of Gautama with Vâtsyâyana's Bhâshya ( Calcutta edition ).

Nyâyakosha ( S'astrî Bhîmâchârya's 2nd edition ).

Orissa by Dr. W. W. Hunter ( Elph. Coll. Library ).

Pratâparudrayas'obhûshaṇa of Vidyânâtha with the commentary Ratnâpaṇa of Kumârasvâmin ( A Ms. ).

Rasagaṅgâdhara of Pandit Jagannâtha with the commentary of Nâges'a Bhaṭṭa ( N. S. Press ).

Report on the Search for Sanskṛit Manuscripts in the Bombay Presidency for 1883-84 by Dr. R. G. Bhâṇḍârkar.

Do. Do. during the years 1887-88—1890-91.

Report on the Search for Sanskṛit Manuscripts for 1896-97 by Prof. M. S'eshagiri.

Sarasvatîkaṇṭhâbharaṇa of Bhoja ( Benares edition ).

Sarvadarśanasaṅgraha of Mâdhavâchârya ( Calcutta edition ).

Sâhityadarpaṇa of Vis'vanâtha ( Calcutta edition ).

Sâhityakaumudî by Vidyâbhûshaṇa ( N. S. Press ).

Setubandha of Pravarasena ( N. S. Press ).

Siddhântachandrodaya, a commentary on Tarkasaṅgraha ( Benares edition ).

Siddhântakaumudî of Bhaṭṭoji Dîkshita.

Surathotsava of Somadeva ( N. S. Press ).

S'is'upâlavadha of Mâgha with the Sarvaṅkashâ of Mallinâtha ( N. S. Press ).

S'ivamahimastotra of Pushpadanta.

Sketch of the Dynasties of Southern India by Mr. Robert Sewell ( Elphinstone College Library ).

Tantravârtika of Kumârila ( Published in the 'Pandit' ).

Tarkasaṅgraha of Annam Bhaṭṭa.

Târkikarakshâ of Varadarâja with the commentary Nishkaṇṭikâ of Mallinâtha ( A Ms. in the Deccan College Library ).

Udyota of Nâges'a on Kâvyapradîpa ( Prof. Chandorkar's edition ).

Upanishads ( Bombay edition ).

Uttarârâmacharita of Bhavabhûti.

Vairâgyas'ataka of Bhartṛihari.

Vâgbhaṭâlaṅkâra by Vâgbhaṭa ( N. S. Press ).

Vedântasâra of Sadânanda ( Col. Jacob's edition ).

Veṇisaṁhara of Nârâyaṇa ( Calcutta edition ).

Vikramorvas'î of Kâlidâsa.

Vṛittavârtika of Appayya Dîkshita ( N. S. Press ).

Yas'astilaka Champu ( N. S. Press ).

---

*N. B.*—**On page 537 L. 11 and L. 16 read** पद्मं तुल्यं मुखस्य **for** पद्मं तुल्यं मुखमस्य.

अथ

# श्रीविद्याधरकृतैकावली

## श्रीमल्लिनाथकृततरलाख्यटीकया समेता ।

### अथ प्रथमोन्मेषः ।

प्रालेयाचलकन्यकाकुचतटीपत्रावलीशिल्पिनः
प्रेङ्खद्भाल[1]विलोचनानलशिखानिष्पीत[2]चेतोभुवः ।
देवस्येन्दुविभूषणस्य सुचिरं[3] पादारविन्दद्वयं
युष्मान्पातु सुरासुरेश्वरशिरोरत्नांशुकिञ्जल्कितम् ॥

अग्रे कृत्वा प्रियसहचरीमन्तिकं संप्रयान्तीं
व्रीडाभारादवनतमुखीमम्बिकां[4]मादरेण ।
लीलापाङ्गं प्रणयमधुरं[5] लोचनान्तेन पश्य-
न्नन्तस्तुष्यन्नवतु भगवानम्बिकावल्लभो नः[6] ॥ १ ॥
अध्यारूढः कपर्दं[7] पितुरमरधुनीं हेलया गाहमानः
कर्षन् हर्षातिरेकात् कनक[8]कमलिनीषण्ड[9]मुद्दण्डवृत्त्या ।
अन्तर्मग्नं[10] कराग्रं फणिपतिशिरसि स्वैरमाधाय तोयं
मुञ्चन् सिञ्चन्नधस्तात् प्रमथपतिशिशुर्[11]भाति बालो गणेशः ॥ २ ॥

---

१ प्रेङ्खत्फाल° T., G., C., M., T'. २ °निष्ठ्यूत° C. ३ रुचिरं T., G., C., M., T'. ४ °मम्बिकावल्लभो वः D., B. ५ °मधुरां D. ६ वः D., B. ७ कपर्दी... नीहमानः D., क...र्दं पितुरमरधु....नीहमानः B. ८ कनकम° D., B. ९ °खण्ड° D., B १० अन्तर्मग्नः K. ११ शिशून् भाति D , B.

स्वीयैर्नित्यं गुणपरिगलैर्मोदयन्ती दिगन्ता-
न्नत्युद्दण्डैरमृतकिरणैरन्वयी लेखिकेव ।
सालंकारा सुललितपदा साधुवृत्ता सभावा
माता नित्यं मम भगवती भारती सन्निधत्ताम् ॥ ३ ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥

मल्लिनाथकविः सोऽयमेकावल्यामलंकृतौ ।
टीकारत्नं निबध्नाति तरलं नाम नामतः ॥ ५ ॥

एकावली गुणवतीयमलंक्रियापि
यद्वैशसादजनि कोशगृहेषु गुप्ता ।
तेनोज्ज्वलेन तरलेन समेत्य धन्यैः
कण्ठेषु चाद्य हृदयेषु च धार्यतां सा ॥ ६ ॥

शास्त्रारम्भे शिष्टाचारं प्रमाणयन् प्रारिप्सितस्याविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलकामनया विशिष्टदेवताप्रसादमाशास्ते । प्रालेयेत्यादिना श्लोकेन । वैशिष्ट्यं चेह देवताया वेदैकवेद्यत्वात् । इष्टत्वं चेष्टार्थवितरणताच्छील्यात् । तच्चोभयं भगवतः परमेश्वरस्य सर्वोपास्यत्वं प्रतिपादयता सुरासुरेत्यादिविशेषणेन सूच्यते । अन्यथा सर्वोपास्यत्वभङ्गात् । तेन जगत्स्थापकत्वमस्य ध्वनितम् । प्रालेयेत्यादिविशेषणेनास्य देव्या सह संभोगशृङ्गारं प्रतिपादयता जगज्जनकत्वं प्रेङ्खदित्यादिना तन्मूलभूतकामोपसंहारकत्वं प्रतिपादयता जगत्संहर्तृत्वं च द्योत्यत इति देवतायाः सर्वोत्कृष्टताध्वनिः । कामित्वकामहरत्वयोरेकत्रैकत्र विरोधस्यावभासमानस्य भगवतोऽत्यद्भुतमहिमतया परिहृतत्वेन विरोधाभासोऽलंकारः प्रथमार्धे । 'आभासत्वे विरोधस्य विरोधाभासता मता' इति तल्लक्षणात् । स च ध्वन्यते न तु वाच्यत इति वक्ष्यति । द्वितीयार्धे तु

१ रेखिकेव K. २ °दवाशासीच्च D., B. ३ वैयासकी° D., B. ४ °माकलयद्र° D., B. ५ °द्यदुपक्रमं च D., B. ६° नोज्ज्वलेन K. ७ धीयताम् D. ८ आरिप्सित° D., B. ९ D. omits इष्ट. १० K. omits तत्. ११ °भङ्गप्रसङ्गात् B. १२ K. omits काम. १३ K. omits प्रथमार्धे. १४ वाच्य D., B.

ननु नमस्कारात्मकं यत्[1] कर्म तत् किं शास्त्रस्याङ्गमिति प्रथमत एव क्रियते प्रधानमिति वा । अङ्गतयाङ्गी[2]क्रियमाणमपि संनिपत्यो-

---

रत्नांशुकिञ्जल्कि[3]तं पादारविन्दद्वयमिति समस्तवस्तुवि[4]षयं सावयवरूपकं बोध्यमेव । अन्यत् स्वयमेव दर्शयिष्यति । प्रलयादागतं प्रालेयं हिमम् । 'तुषारस्तुहिनं हिमं प्रालेयं मिहिका[5]' इत्यमरः । 'ततः आगतम्' इत्यण्प्रत्यये 'केकयमित्रयुप्रलयानां यादेरियः' इतीयादेशे गुण आदिवृद्धिः । प्रालेयाचलकन्यका[6] पार्वती तस्याः कुचतटीपत्त्रावलीनां शिल्पिनो निर्मातुः । एतेनास्य[8] नित्यकामुकत्वमुक्तम् । प्रेङ्खन्त्या दोलायमानया भा[7]लविलोचनानलस्य शिखया ज्वालया निष्पीतचेतोभुवो निर्दग्धकामस्य । एतेन नित्यवैराग्यमस्यो[9]क्तम् । विरोधस्तु निरस्त एव । सुचिरमिति सर्वदे[10]त्यर्थः ।'सुशब्दसामर्थ्यात् । रत्नांशुभिः किञ्जल्कितं संजातकिञ्जल्कम् । 'तदस्य संजातं तारकादिभ्य इतच्' । ईदृक्षं देवस्य पादारविन्दद्वयं युष्मान् सुचिरं पात्विति संबन्धः । पादावेवारविन्दे इति रूपकं रत्नांशूनां किञ्जल्क[11]त्वेन रूपणाल्लिङ्गात् । सुगममन्यत् ॥

ननु किमिदं ग्रन्थादौ सर्वेऽपि ग्रन्थकर्त्तारः प्रस्तुतमुपेक्ष्याप्रस्तुतं नमस्का[12]रादिकमाचरन्ति । तदनुपपन्नम् । 'वाजपेयस्तिष्ठतु शरद्वर्ण्यताम्' इतिवदसांगत्यादित्यभिप्रेत्य प्रत्यवतिष्ठते **नमस्कारात्मकमित्यादिना नमस्काराचरणप्रवृत्त्यभावप्रसङ्गादि**त्यन्तेन सं[13]दर्भेण । असांगत्यमभिव्य[14]ङ्क्तुं तावद्विकल्पयति । **नमस्कारात्मकमिति।** नमस्कारग्रहणमाशीर्वस्तुनिर्देशयोर[15]प्युपलक्षणम् । तथा चायमर्थः । यदेतच्छा[16]स्त्रादावनुष्ठीयमानमाशीर्नमस्क्रियावस्तुनिर्देशा[17]नामन्यतमात्मकं मङ्गलकर्म तत् किं[18] प्रयाजादिवत् प्राग[19]नुष्ठेयं शास्त्रस्याङ्गमु[20]त शरद्वसन्तादिनियतकालानुष्ठेयवाजपेयज्योतिष्टोमादिवत् तत्का[21]लनियतं पुरुषार्थसाधनं किंचित् प्रधानकर्मेति । तत्राद्यं द्वेधा विकल्पयति । **अङ्गतयेति** । द्विविधा[22]न्यङ्गानि । कानिचित् संनिपत्योपकारकाणि यथा करणशरी-

---

१ D. omits यत् and G. has कर्म यत. २ °तया क्रिय° D. ३ °किञ्जल्कितपा° D., B. ४ °विषयकं K. ५ मिहिका चाथ D., B. ६ K. omits पार्वती. ७ फाल° K. ८ K. drops अस्य. ९ अस्य विरो° K. १० सदे° K. ११ किञ्जल्केन K. १२ नमस्कारमा° K. १३ K. drops संदर्भेण. १४ °मभिव्यक्तं D., B. १५ B. drops अपि १६ °तद्ग्रन्थादा° D., B. १७ °र्वस्तुनिर्देशनमस्काराणा° D., B. १८ K. drops किं. १९ प्रयाजादिवदनुष्ठेयशास्त्र° D., B. २० D., and B. drop उत. २१ तत्कालपुरुषानियतार्थसाधनं K. २२ द्विधाविधा° K.

पकारकत्वेनेदमभिमत[1]मारादुपकारकत्वेन वा । नादिमः[2] पक्षः । द्वारा[3]-
भावात् । शास्त्रप्रतिबन्धकदुरितोच्छेद एव द्वारमिति चेन्न । उच्छे-
द्यस्य संदेहास्पदत्वे[4]नोच्छेदकानुष्ठानाभावप्रसङ्गात् । नापरः ।
अलौकिकस्य नमस्कारस्य लौकिकशास्त्रकर्माङ्गता[5]नुपपत्तेर्ग्राहक-

रनिर्वर्तनद्वारा[6] साक्षादुपकारकाणि द्रव्यदेवतादीनि । कानिचिदारा[7]दुपकारकाणि
यथा फलोपकारीणि प्रयाजादीनि । तत्रैतन्मङ्गलाचरणं शास्त्रस्य करण[8]शरीरनिर्वर्त-
नाङ्गं द्रव्यदेवतादिवत् यद्वा[9] फलोपकार्यङ्गं प्रयाजादिवदित्यर्थः । संनिपत्य संनिकृष्या[10]-
व्यवधानत[11] इति यावत् । आराद् दूराद्व्यवधानेन इति यावत् । तत्राद्यं दूषयति ।
नादिम[12] इति । तत्र हेतुमाह । द्वाराभावादिति । उपकारो हि द्वारं स चात्र किं
करणशरीरनिर्वर्तन[13]मन्यो वा । नाद्यः । शास्त्रशरीरस्य शब्दार्थैकनिर्वर्त्यत्वात् । न
द्वितीयः । अन्यस्यानुपलम्भादित्यर्थः । द्वारमाशङ्कते । शास्त्रप्रतिबन्धके[14]ति । तदु-
च्छेदमन्तरेण शास्त्रशरीरस्यानिवृत्तेरिति भावः । परिहरति । नेति । कुत इत्यत
आह । उच्छेद्यस्येति । प्रतिबन्धक[15]दुरितानां कार्यैकसमधिगम्यतया इदानीं तद-
निश्चये तदुच्छेदार्थं नमस्कारप्रवृत्तिरेव न संगच्छत इति मूले कुठार इत्यर्थः । एवं
संनिपत्योपकारक[16]पक्षं दूषयित्वारादुपकारकपक्षं दूषयति । नापर इति । का तत्रा[17]-
नुपपत्तिरित्यत आह[18] । अलौकिकस्ये[19]ति । विधिप्राप्तस्येत्यर्थः । शास्त्रनिर्माणं[20] तु रागतः
प्राप्तं न विधिप्राप्तमित्याशयेन विशिनष्टि । लौकिकेति । लौकिकालौकिकयोरङ्गाङ्गि[21]-
भावाभावे हेतुमाह । ग्राहकेति । गृह्णाति स्वशेषत्वेन स्वीकरोति स्वसंनिधिपठितमिति
ग्राहकं प्रकरणम् । प्रधानवाक्यमङ्गापेक्षमित्यर्थः । यथा समिदादिवाक्यसापेक्षं दर्श-
पूर्णमासवाक्यम् । तदुक्तम् । 'प्रधानवाक्यमङ्गोक्त्याकाङ्क्षं प्रकरणं मतम्' इति । तेन
ग्रहणं स्वीकारस्तदभावात् । अङ्गाङ्गिभावप्रयोजकस्य प्रकरणपाटक[22]स्य प्रकरणासं-

१ °मभिहित° T. २ नादिमपक्षः C. ३ द्वारत्व° C. ४ °स्पदत्वे उच्छेद° T., T'., G., C., M. ५ °कर्माङ्गत्वा° D. °शास्त्राङ्गता° M. ६ °द्वारास्योपकार° D., B. ७ कानिचित्त्वारा° D., B. ८ K. omit करण. ९ °शास्त्राद्वा D., B. १० संनिकृष्यापूर्वव्यव° K. ११ व्यवधानात् K. १२ नादिरिति K. १३ °निर्वृत्तिर° K. १४ °प्रतिबन्धेति K. १५ प्रतिबन्धदु° K. १६ °पकारपक्षं K. १७ K. omits अत्र. १८ D. and B. omit इति. १९ अलौ-किकस्य विधि° B. २० °निरूपणं K. २१ °रत्नाङ्गाङ्गि° K. २२ प्रकरणपाठस्य K.

ग्रहणाभावात्। अथ प्रधानं तर्हि[1] नित्यमिदं नैमित्तिकं[2] काम्यं वा। नाद्यः[3]। अहरहः संध्यामुपासीतेत्यादिवदस्य[4] नित्यत्वे प्रमाणाभावात्। अस्तु वा तथापि संध्यावन्दनादेरिवास्यापि ग्रन्थारम्भे करणीयत्वानुपपत्तेः। न द्वितीयः। उपरागे स्नायादितिवन्नमस्कारं प्रति ग्रन्थस्य निमित्तत्वेनासंकीर्त्तनात्। समाचारबलादेवमुन्नीयत[5] इति

---

भवेनासंभवादित्यर्थः। न च लौकिकस्य शास्त्रनिर्माण[6]कर्मणः किंचित् प्रकरणं नामास्ति। तस्मादनङ्गस्य नमस्कारस्यानङ्गिनं शास्त्रारम्भं प्रति नारादुपकारकत्वमप्याशापीत्यर्थः। एवमङ्गपक्षं प्रतिक्षिप्य प्रधानपक्षं प्रतिक्षेप्तुमुपादत्ते। **अथ प्रधानमिति**। तदेतद् दूषयितुं त्रेधा विकल्पयति। **नित्यमित्यादिना[7]**। कल्पान्तरं[8] तु खपुष्पकल्पत्वादनाशङ्कनीयमेवेति भावः। तत्राद्यं दूषयति। **नाद्य इति**। कुत इत्यत आह। **अहरहरित्यादिना[9]**। आदिशब्दात् 'यावज्जीवमग्निहोत्रं[10] जुहोति' इत्यादिसंग्रहः। अहरहरित्यादि वीप्सा। यावज्जीवादिश्रुतिर्हि[11] नित्यत्वे प्रमाणं तस्याभावादित्यर्थः[12]। ननु यन्निमित्तफलसंबन्धान्तरेण विहितं तन्नित्यं नमस्कारादौ च तयोरभावादस्तु नित्यत्वमित्याशङ्क्याभ्युपेत्यवादेन परिहरति। **अस्तु वेति**। नित्यत्वे च शास्त्रारम्भेऽनुष्ठेयं[13] न स्यात्। संध्यावन्दनादिवदेवानुष्ठीयते[14] एवं[15] नियमे तु शास्त्रारम्भे। तस्मान्न नित्यमित्यर्थः। नैमित्तिकपक्षं दूषयति। **न द्वितीय इति**। कुत इत्याशङ्क्य किमत्र शास्त्रारम्भ एव निमित्तमन्यद्वेति द्वेधा विकल्प्याद्यं दूषयति। **उपराग इति**। यथोपरागस्य स्नानं प्रति निमित्तत्वमुक्तं तथा नमस्कारं[16] प्रति शास्त्रारम्भस्य[17] निमित्त[18]त्वप्रतिपादकवचनाभावादित्यर्थः। ननु शास्त्रारम्भं निमित्तीकृत्यानुष्ठानदर्शनात् तन्निमित्तकर्तव्यं[19] समाचारादेवोन्नीयत इति शङ्कते। **समाचारबलादिति**। सत्यमाचारोऽन्यस्य च नैमित्तिकान्तरस्य सद्भावे[20] दृष्टान्तबलादेवमुन्नेष्यामः[21]। तदेव नास्ती-

---

१ G. omits it. २ T. adds वा after नैमित्तिकं. ३ नादिमः T., न प्रथमः G. M. and C. omit नाद्यः. ४ °सीतेतिवद° T., G., M. ५ समयाचार° G. ६ °निर्माणस्य K. ७ तर्हि निमित्तमित्यादिना K. ८ पक्षान्तरं B. ९ अहरहःसंध्येति D., B. १० °होत्रपरिग्रहः। अह° K. ११ °श्रुतिश्च K. १२ °भावात् K. १३ °ऽनुष्ठेयतया D., B. १४ °वन्दनवदेवा° D., B. १५ °नुष्ठीयते नियमेन शास्त्रारम्भे° D., B. १६ नमस्कारस्य K. १७ शास्त्रारम्भे K. १८ निमित्तता° D., B. १९ °मित्तकत्वमाचारा° D., B. २० सद्भावेन D., B. २१ तद्दृष्टा° B.

**चेत्र । नैमित्तिकं कर्म [1]समाचारबलादन्यदुन्नेयं किमपि नास्तीति दृष्टान्ताभावात् । न तृतीयः । पुत्रादिकामना[2]या अधिकारिविशेष-**

---

स्याप्रामाणिकीयं कल्पनेति परिहरति । नेति । न दृष्टान्ताभावादित्यन्वयः । दृष्टान्ताभावे हेतुमाह । **नैमित्तिकमिति** । किमप्याचारबलादुन्नेयं नैमित्तिकमन्यन्नास्तीति हेतोर्दृष्टान्ताभावः । तदभावान्नमस्कारस्यापि नाचारान्नैमित्तिकत्वमुन्नेतुं शक्यत इत्यर्थः । किं च शास्त्रारम्भस्य निमित्तत्वे 'निमित्तानन्तरं नैमित्तिकम्' इति न्यायेन जाते[3]ष्ट्यामिव निमित्तानन्तर्येण नमस्कारस्य शास्त्रारम्भोत्तरकालमनुष्ठानापत्तौ प्रागनुष्ठानानुपपत्तिः । नापि द्वितीयः । अन्यनिमित्त[4]कस्य शास्त्रारम्भेऽनुष्ठानासंभवादिति । किं च किं[5] तन्निमित्तं प्रसिद्धमप्रसिद्धं वा । नाद्यः । अनुपलम्भात् । न द्वितीयः । अतिप्रसङ्गात् । [6]तस्मान्न नैमित्तिकत्वं युज्यते । नापि काम्यत्वमित्याह । **न तृतीय इति** । कुत इत्याशङ्क्य किं ज्योतिष्टोमादिवच्छ्रुतफलसंबन्धात् काम्यत्वं रात्रिसत्रवदर्थवादिकफलसंबन्धाद्वा विश्वजिन्न्यायेन सर्व[7]साधारणस्वर्गफलसंबन्धाद्वा नमस्कार्यदेवतामहिमपर्यालोचनया[8] स्वेच्छाप्राप्तफलसंबन्धाद्वा[9] सामर्थ्यप्राप्तयत्किंचित्फलसंबन्धाद्वा । नाद्यः । असंभवात् । यत्र[10] विधिरेव मृग्यस्तत्र का फलश्रुतिशङ्का । अत एव न द्वितीयः । असति विध्यावर्थवादस्यासति ग्रामे सीमाविवादवदनव[11]काशे का प्रत्याशा तदुपगम्ये[12] फले । न तृतीयः । स्वर्गार्थस्य कर्मणो ग्रन्थारम्भेऽनुष्ठानानुपपत्तेः । अत एव न तुरीय इत्याह । **पुत्रादीति** । पुत्रादिफलार्थस्य नमस्कारस्य शास्त्रारम्भे अनुष्ठानासंभव इत्यर्थः । अयमाशयः । कर्मणि ता[13]दर्थ्यबुद्धिरधिकारः । सोऽस्यास्तीत्यधिकारी । स चा[14]र्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तश्चेत्येवंविशेषणकः[15] स्यात्तत्रार्थित्वं नामानुष्ठेयकर्मसाध्यफलकामना । फलं चात्र श्रुतमार्थवादिकं साधारणं वा न संभवतीत्युक्तम् । किं[16] तु नमस्कार्यदेवताया निरङ्कुशशक्तिकतया यो यत् कामयते पुत्रादिकमन्यद्वा तत्सर्वं फलमिति पक्षोऽवशिष्टः । सोऽपि शास्त्रारम्भेऽनुष्ठानासंभवदूषणग्रा-

---

१ समाचारबलादेवमुन्नेयामिति दृष्टा° T., समयाचार° G., न समाचारबलादन्यदुन्नेयं नास्तीति दृष्टा° D., B. २ कामनावत् G. ३ जातेष्ट्यादिवन्निमि° D., B. ४ °निमित्तस्य K. ५ D. omits किं. ६ K. omits तस्मात्. ७ सर्वस्वसाधा° K. ८ °लोचनात् पूर्वस्वेच्छा° D., B. ९ °द्वात्रापि यत्किञ्चित्फलसंबन्धाद्वा सामर्थ्यप्राप्तफलसंबन्धाद्वा K. १० तत्र D. ११ °वदवकाशे D., B. १२ °तदवगम्यफले D. १३ दार्ढ्यबुद्धि° K. १४ चार्थी K. १५ °विशेषणकः नामा° D., B. १६ K. omits तु.

णोभावेन ग्रन्थारम्भे नमस्कार[2]करणानुपपत्तेः। प्रतिबन्धकोच्छेद[3]-कामनैवाधिकारिविशेषणत्वमस्त्व[4]ति चेन्न। प्रतिबन्धकसंदेहे त्व[5]-धिकारिसंदेह इति नमस्काराचरणप्रवृत्त्यभावप्रसङ्गात्। अत्रोच्यते। काम्यमेवेदं कर्म। ग्रन्थसमाप्तिकामनैवाधिकारिविशेषणम्[6]। तत्र न काचिद[7]नुपपत्तिरिति नीतिनेत्रा[8]चार्याः॥

---

सान्नावतिष्ठत इति पञ्चमपक्षमाशङ्कते। **प्रतिबन्धकोच्छेदेति**। सर्वैर्नियमेन शास्त्रारम्भे नमस्कारकरणान्यथानुपपत्त्या तत्प्रतिबन्धकोच्छेद एव फलमिति सामर्थ्यकल्पितफलसंबन्धात् काम्यत्वसिद्धिरित्यर्थः। परिहरति। **नेति**। कुत इत्यत आह। **प्रतिबन्धकेति**। प्रतिबन्धकादृष्टस्य कार्यैकसमधिगम्यतया संप्रति संदिग्धत्वात्तदुच्छेदकानुष्ठाने पाक्षिकवैफल्यशङ्काक[9]लिते प्रवृत्तिरेव न स्यादित्यर्थः। **अधिकारिसंदेह इति**। अधिकारिविशेषणभूतायाः प्रतिबन्धकोच्छेदकामनाया उच्छेद्यसंदेहे संदेहात् तद्विशिष्टोऽधिकार्यपि संदिग्ध इत्यर्थः। एवं पूर्वपक्षे प्राप्ते सिद्धान्तं प्रतिजानीते। **अत्रोच्यत इति**। किमत्रोच्यत[10] इत्याकाङ्क्षायां काम्यत्वमित्याह। **काम्यमेवेति**। एवकारो नित्यनैमित्तिकपक्षव्युदासार्थः। तथा च तत्तत्प[11]क्षोक्तदोषोद्धोषणमप्यङ्गीकारपराहतत्वादरण्यरुदितमेवेति भावः। काम्यत्वे किमत्राधिकारिविशेषणमित्या[12]काङ्क्षायां प्रतिबन्धकोच्छेदकामनेवेत्याह। **ग्रन्थसमाप्ति[13]कामनैवेति**। एवकारोऽवशिष्ट[14]विकल्पचतुष्टयनिरासार्थः। तथा च तत्प्रपञ्चनमनङ्गीकारपराहतेर्वृथा[15]गर्जनमिति भावः। नन्वत्राप्यधिकारिसंदेहादप्रवृत्तिरित्युक्तं[16] तत्राह। **तत्रेति**[17]। **नीतिनेत्राचार्योक्तः**[18] परिहारोऽत्र ग्राह्यः। विस्तरभयान्नास्माभिः प्रपञ्चित[19] इति भावः।

---

१ °विशेषणत्वे D., B.; °विशेषणभावेन T., C. २ नमस्कारस्य D., B.; नमस्कारणानुप° T. ३ °च्छेदकं विनैवा° D., B.; प्रतिबन्धोच्छेद° T., T′., G., M., C. ४ C. and M. drop अस्तु. ५ D. and B. drop तु. ६ C., T. and T′. insert अस्तु after विशेषणम्. ७ काचिदुप° D., B.; कदाचिदनुप° T. ८ C. and M. omit नीति; °नेत्राचाराः M., C. ९ °कलङ्किते K., °कुलिते B. १० K. omits किमत्रोच्यत इत्याकाङ्क्षायां. ११ तत्पक्षो° K. १२ °विशेषणं प्रतिबन्ध° K. १३ °समाप्तीति K. १४ °कारो विशिष्ट° D. १५ °प्रपञ्चनमपि वृथाकृतिरिति भावः K. १६ K. omits इत्युक्तं. १७ तत्र चेति K., B. १८ °योक्तपरिहारो° K. १९ प्रपञ्च्यत इति D., B.

अयं च ग्रन्थकारः स्वयं भगवतश्चन्द्रचूडामणेः प्रणामेन कलयन्नपि कृतार्थतामात्मनो[1] व्याख्यातृश्रोतॄणामपि निर्विघ्नव्याख्यानश्र-

---

इदमत्रानुसंधेयम्। लोके चोरव्याघ्रादिसंदेहेऽपि[2] संभावनामात्रेण तन्निवारणकारण-सामग्रीसंपादनदर्शनादिहापि[3] प्रतिबन्धकसंदेहेऽपि[4] संभावनयैव तदुच्छेदकामनाया अविरोधादधिकारिविशेषणसिद्धौ तदुच्छेदार्था[5] प्रवृत्तिरुपपद्यत एवेति न पाक्षिकवै-फल्यशङ्कापि सर्वप्रायश्चित्तप्रवृत्तिवत्। अत एवोक्तमाचार्यैः। 'तत्संदेहेऽपि[6] तदुपा-दानस्य[7] न्याय्यत्वादन्यथानुपस्थितपरिपन्थिभिः पार्थिवैर्द्विरदयूथपतयो[8] नाद्रियेरन्' इति। न च शाबरशाङ्करभाष्यादावकृतेऽपि नमस्कारे निर्विघ्नसमाप्तिसंप्रदायाविच्छेद-दर्शनात् किरणावलीकादम्बर्यादौ कृतेऽप्यसमाप्तिदर्शनाच्चानाश्वासः[9] कार्यः। 'विशु-द्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे। श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे॥' इत्यादिभट्टपादप्रभृतिसमाचारदर्शनाच्छबरशङ्करादिभिरपि[10] कृत एव नमस्कारः किं तु ग्रन्थे न लिखितः। लेखनस्यातन्त्रत्वात्। इति कार्यादवसेयम्। अथापि तेषां[11] विघ्नानादर इति साहसिकानां प्रलापः[12]। क्वचिदसमाप्तिस्तु क्रियावैगुण्यात्। अवैगुण्येऽप्युच्छेद्यप्राबल्याद्[13]विरोधस्तस्या एव प्रचितायास्तदुच्छेदकत्वसंभवात्। अप्रचितानां कुठारधारापातानां सारदारुच्छेदासामर्थ्येऽपि तेषामेव प्रचितानां तच्छे-दसामर्थ्यदर्शनात्। न चैवं[14] निर्मूलमनुष्ठानम् होलाकादिवदाचारमूलत्वात्। 'आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम्' इति संतोष्टव्यमित्यलं प्रसक्तानुप्रसक्त्या॥

नन्वेवमप्यस्य[15] ग्रन्थकारस्य स्वयं नमस्काराकरणादकृतार्थस्य युष्मान् पात्विति परपरित्राणाशंसनमसंगतमित्यत आह। अयं चेति। कलयन्नपि प्राप्नुवन्नपीत्यर्थः। निर्विघ्नव्याख्यानश्रवणमेव[16] संपत्तस्याः समासादनं प्राप्तिस्तत्समुचितत्वं चाशिषस्त-द्विषयत्वं तत्समर्थत्वं[17] वा। आशीरिच्छा तस्याः प्रकाशनं वाचा निवेदनम्। सांमुख्य-[18]माभिमुख्यमनुग्रहप्रावण्यमिति यावत्। एतदेव त्राणं चेति वक्ष्यति। तच्च सर्वग्रन्थसं-

---

१ कृतिमात्मनो G., कृतिमाख्यातृ° C., M.; D. omits आत्मनः. २ °संदेहेऽपि शङ्कितानिष्टपरिहारसामग्री° K. ३ °दिहात्रापि D., B. ४ °बन्धकसंदेहे तदुच्छेद° K. ५ तदुच्छेदादर्थप्रवृत्ति° D., B. ६ K. omits अपि. ७ °स्यान्याय्य° D., B. ८ पार्थैः° D., B. ९ °च्चानाश्वासः D., and B. १० D. drops अपि. ११ तेषामपि वि° D., B. १२ प्रवादः K. १३ प्राबल्यात्तस्या K. १४ चेदानीं D. १५ तथैव° D., B. १६ °श्रवणे श्रवणसंपत्तस्याः K. १७ समुचितेति पाठे तत्समर्थत्वम् D., B. १८ K. drops स्व.

[1]वर्णसंपत्समासादनं समुचिताशीःप्रकाशनद्वारा परमेश्वरस्य सांमुख्यं दर्शयन्[2]नाह । युष्मानिति । व्याख्यातृश्रोतॄन् । एषामेवात्र[3] संबोधनयोग्यत्वात् संबोधनप्रधानत्वाच्च[4] युष्मदर्थस्य । अभिलषितफलवितरणप्रवणत्वमत्र[5] त्राणमभिमतम् । एतस्य च[6] प्रत्यूहशमनेनैव[7] सिद्धिः । तच्चाभिमतदेवतानमस्कारजन्मना[8] परमपुण्येन[9] भवति ।

---

प्रदायाविच्छेदलाभात्मकमिति तदाशंसनं संगतमेवेत्यर्थः । ननु तथापि स्वग्रन्थव्याख्यातृश्रोतॄन् पात्विति प्रयोज्यं न तु युष्मानित्याशङ्क्य त एव युष्मच्छब्देन विवक्षिता इत्याह । व्याख्यातृश्रोतॄनिति । ननु कथमेषामप्रकृतानां युष्मच्छब्देन परामर्श इत्याशङ्क्याह[10] । एषामेवेति । व्याख्यानश्रवणसिद्ध्याशंसीया[11] व्याख्यातृश्रोतॄणामेवाप्रकृतानामपि संबोधनसामर्थ्यमित्यर्थः । नन्वाम्रान् पृष्टः कोविदारानाचष्टे भवान् यदेषां कथं युष्मदर्थत्वमित्यनुयोगे संबोधनयोग्यत्वमुच्यत[12] इत्यत्राह[13] । संबोधनप्रधानत्वात्[14] युष्मदर्थस्येति । संबोधनमाभिमुख्यकरणं तदेव युष्मच्छब्दार्थः । युक्तस्तेनैषां परामर्श इत्यर्थः । ननु पातेस्त्राणार्थत्वात् त्राणस्य च भयहेतूपाशनकत्वाद्भयहेतूनां[15] चेहानुपलम्भादसंभावितं त्राणं किमाशास्यते किं त्वेषां यदभिमतं तद्वितरणमेवाशास्यतामित्याशङ्क्याह । अभिलषितेति । तदभावे[16] भीरूणां तद्वितरणमेव त्राणमिति भावः । ननु देवताप्रणामस्य प्रतिबन्धकोच्छेदः फलमित्युक्तं प्राक् संप्रति संप्रदायाविच्छेदः फलत्वेनो[17]च्यत इति पूर्वापरविरोध इत्याशङ्क्य नेत्याह । एतस्य चेति । एतस्याभिमतलाभस्य प्रत्यूहशान्तिनान्तरीयकत्वात् तत्फलत्वोक्तिरविरुद्धेति भावः । ननु नमस्कारकर्मणः क्षणविध्वंसिनः कथं कालान्तरभाविफलसाधकत्वं तत्राह । तच्चेति । क्षणिकत्वेऽपि तज्जन्यापूर्वस्य श्रुतार्थापत्तिगम्यस्य फलभोगविनाश्यस्य फलजनकत्वमिति न काचिदनुपपत्तिरित्यर्थः । तस्मादस्माकमपि

---

१. °व्याख्याश्रवणसंपादनरूपसमुचिताशीःप्रकाशन° T.; °व्याख्याश्रवणसंपत्संपादनरूपाशीःसमुचितधीप्रकाशन° T′., M., C. २ दर्शयति C. ३ T. drops अत्र. ४ °प्राधान्याच्च C., M., G., T′. ५ °प्रवणत्वममृतादपि संमतम् C. ६ C., G., T′., and T. drop च. ७ प्रत्यूहप्रशमनेनैव T′. ८ °जन्येन T. ९ परपुण्येन G., T′. १० इत्यत आह K. ११ °शंसाभ्यां D. १२ संबोध्यत्वमु° K. १३ °च्यते तत्राह K. १४ °प्रधानत्वादिति K. १५ °हेतूपादानात्मकत्वा° D., B. १६ तदभावे भीरूणां D. १७ फलमुच्यत° K.

किं चात्र कामिनोऽपि कामरिपोरिति विरोधो ध्वन्यते। तेन लोकोत्तरं चरितमस्य ज्ञातुं न शक्यत इति वस्तु। तेन चाद्भुतरूपेण मध्यनिवेशितेन शृङ्गाररौद्रयोर्नैरन्तर्यकृत[1]विशेषपरिहारः। दे[2]व्यां देवस्य रतेरुपनिबन्धात् संभोगात्मा शृङ्गारः। देवताविषया रति-

---

देवतानमस्कारस्यावश्यकर्त्तव्यस्यैव कृतस्याप्रस्तुताचर[3]णं दोष इति भावः। इत्थं नमस्कारस्य कर्त्तव्यतां प्रतिपाद्य संप्रति श्लोकतात्पर्यं विविनक्ति किं चात्रेत्यादिना पाणिनिप्रमुखैरित्यतः प्राक्तनै[4]संदर्भेण। विरोधो ध्वन्यते व्यज्यत इत्यर्थः। विरोधस्वरूपमाह। कामिनोऽपि कामरिपोरिति। कामिन इति शृङ्गारोपलक्षणं कामरिपोरिति रौद्रोपलक्षणम्। तथा च प्रालेयेत्यादिविशेषणद्वयप्रति[5]पादिताभ्यां पत्रावलीनिर्माणकामदहनाभ्यां शृङ्गाररौद्रयोरेकदैकत्रावस्थानकृतो विरोधो ध्वन्यत इत्यर्थः। ननु तेजस्तिमिरयोरिव कथमनयोरेकत्रावस्थानमित्याशङ्क्य देवस्यालौकिकमहिमत्वादुपपद्यत इत्याशयेनाह। तेन लोकोत्तरमिति। वस्तु ध्वन्यत इत्यनुषङ्गः। त[6]तः किमत आह। तेन चेति। अद्भुतरूपेणेति। लौकिकपुरुषव्यसंभावितत्वादिति भावः। मध्यनिवेशितेन मध्ये स्थापितेन। शृङ्गाररौद्रापेक्षया चास्य माध्यस्थ्यम्। नैरन्तर्यमेकत्रानयोर्यौगपद्यम्। अयम[7]त्र समाधिः। लो[8]के कयोश्चित् कलहायमानयोरेकः कोऽपि[9] समर्थो माध्यस्थ्यमवलम्ब्य विरोधं समाधत्ते। एवमस्य महिमाप्यलौकिको माध्यस्थ्यमाश्रित्य शृङ्गाररौद्रयोरपि विरोधं शमयति। विरोधनिवर्त्तनादेवास्य माध्यस्थ्यव्यपदेशः। अलौकिकमहिमत्वादत्र न किंचिदसंभावितमस्तीति पिण्डितार्थः। तेन विरोधाभासालंकारोऽपि ध्वन्यत इति सिद्धम्। ननु शृङ्गाररौद्रयोरविरोध इत्युक्तं कश्चात्र शृङ्गारो विवक्षितः संभोगो विप्रलम्भो वे[10]त्यपेक्षायामाह। देव्यामिति। संभोगात्मकत्वे हेतुमाह। रतेरु[11]पनिबन्धादिति। अत्र रतिशब्देन पत्रावलीनिर्माणा[12]दिक्रीडाभिधीयते न तु रत्याख्यः स्थायीभावः। तस्य विप्र[13]लम्भेऽपि संभवात्। अथ न केवलं रौद्रशृङ्गारयोर्ध्वननाद्रसध्वनिरेव किं तु कवेर्देवताविषयाया रतेरपि ध्वननाद्भा-

---

१ कृतं विरोधं परिहरता T., C., G., M.; कृतविरोधं परिहरता T′. २ देव्या G., M., T′. ३ °चरणदोषः K. ४ प्राक्तनेन स° D. ५ °प्रतीताभ्यां K. ६ ततः किम् K. ७ अयमर्थः K. ८ यथा K. ९ D. drops अपि. १० वा अत आह K. ११ रतेरुपेति K. १२ °निर्माणादिना K. १३ प्रलयेऽपि D.

रिति भावश्च । तथाविधभक्तिश्रद्धाभरविधुरान्तःकरणतयैव नमस्कृतेः कृतत्वात् । अन्यथोपहासादावपि नमस्कारः संभवति । यथा

बिन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं
कर्मेति क्रमशिक्षितान्वयकला ये केऽपि तेभ्योऽञ्जलिः ।
ये तु ग्रन्थसहस्रशाणकषणत्रुटयत्कलङ्कैर्गिरा-
मुल्लेखैः कवयन्ति बिल्हणकविस्तेष्वेव संनह्यति ॥ २ ॥

बध्नविश्चेत्याह । देवताविषयेति । रतिरिह कवीनां राजदेवताचार्यविषयेष्वभीप्सितवस्तुष्विव विषयसौन्दर्यजन्मा कश्चिदभिरतिविशेषः । भावश्चेति । अन्यत इति शेषः । रतिसद्भावे विप्रतिपन्नं प्रति प्रमाणमाह । तथाविधेति । भक्तिः गुरुदेवतादौ पित्रादिष्विव प्रेमातिशयः । श्रद्धा तत्रैव विश्वासः । तत्र भक्तेस्तथाविधत्वं पूर्वोक्तरतिरूपत्वम् । कृतत्वात् कृतत्वानुमानादित्यर्थः । प्रयोगस्तु विमता नमस्कृतिः पूर्वोक्तरतिरूपभक्तिश्रद्धातिशयपूर्विका कृता विहितक्रियात्वात् संध्यावन्दनवदिति । श्रद्धाग्रहणं दृष्टान्तार्थं रतेरेवात्र सिषाधयिषितत्वात् । साध्यानङ्गीकारे बाधकं तर्कमाह । अन्यथेति । अतत्पूर्वकत्वे त्वौपहासिकनमस्कारवदनुष्ठानस्याफलमनुष्ठानं भवेत् विपरीतफलं वा स्यात् । उक्तं च । 'ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः' इति । औपहासिकनमस्कारमुदाहरति । यथेति । बिन्दुद्वन्द्वं विसर्गः । वृक्षस्तिष्ठतीत्यादौ सविसर्गस्य कर्तृत्वदर्शनाज्जलं पिबतीत्यादौ शिरोबिन्दुकस्य कर्मत्वदर्शनाच्च सर्वत्र तथात्वभ्रमः । तथा च पयः पिबति मुखं शोभत

१ °बन्धुर° T′. २ अन्यथा प्रहासादावपि T. ३ °न्वयगिरो C., M., G.; °न्वयकथा T′. ४ तेभ्यो नमः T., C., G., T′. ५ °पूर्वं कृता D. ६ बाधकतर्क° K. ७ कुर्यात् K. ८ मखः K. ९ वृष°.K. १० तथात्वोक्तः.K.

परमेश्वरः पुनरिह न परमभिमतं[1]दैवतमपि तु समुचितमपि भवति[2]। निखिलभुवननिर्माणकर्मठस्य भगवतः श्रीकण्ठस्य ग्रन्थनिर्माणावसरे[3] नमस्कर्त्तुमुचितत्वात्। किं चात्र वाक्यार्थी[4]भूतत्वाद्विश्रान्तिधामत्वेन[5] प्राधान्यमुपेयुषो भावध्वनेर्वस्त्वलंकाररसं[6]-

---

इत्यादौ पदस्य कर्तृत्वं मुख्यस्य कर्मत्वं च स्यादित्यर्थः । इत्यनेन क्रमेण शिक्षितः उपाध्यायै[7]रुपदिष्टो योऽन्वयः[8] पदसंसर्गः[9] पदार्थसंसर्गो वा स एव कला विद्या येषां ते तथोक्ता अव्युत्पन्ना इत्यर्थः। तेभ्योऽञ्जलिर्नमस्कार इत्यर्थः । ग्रन्थसहस्राण्येव शाणास्तेषु कषणेन त्रुट्यत्कलङ्कं भ्रंशद्दोषैर्बहुग्रन्थाभ्यासविशुद्धैरित्यर्थः । व्युत्पन्ना एव मे लक्ष्यं[10] नाव्युत्पन्ना इति श्लोकतात्पर्यम्[11] । तेभ्योऽञ्जलिरित्यव्युत्पन्ननमस्कार उपहासार्थः । परमार्थतस्तेषामनमस्कार्यत्वादिति[12] । इह न केवलमिन्दुभूषणस्येष्टत्वाविशिष्टत्वाभ्यामेवोपास्यत्वमपि त्वौचित्यादपीत्याह । परमेश्वरः पुनरिति। औचित्ये हेतुमाह । निखिलेति । निर्माणशक्तिकामे[13]रस्य तादृक्शक्ति[14]र्महेदेवताया एव नमस्कर्त्तुमुचितत्वादित्यर्थः। कर्मणि घटकः समर्थः कर्मठः। 'कर्मशूरस्तु[15] कर्मठः' इत्यमरः। "कर्मणि घटोऽठच्" इत्यठच्प्रत्ययः। "नस्तद्धिते" इति टिलोपः। अथेह पूर्वोक्तानां भावादिध्वनीनामुपपत्तिपूर्वकमुपस्कार्योपस्कारक[16]भावेनाङ्गाङ्गीभाव[17]संकरमाह । किं चात्रेत्यादिना सूचित एवेत्यन्तेन। अत्र भावः पूर्वोक्तो रत्याख्यः। वस्त्वलंकाररसाश्च पूर्वोक्ता एव देवताया अलौकिकमहिमत्वं विरोधाभासः शृङ्गाररौद्रौ च तेषां ध्वनिभिः सह भावध्वनेरस्त्येव संकर इति संबन्धः । अङ्गाङ्गीभावलक्षण इति शेषः। तत्र हेतुमाह। उपस्कार्येति। तत्र भावध्वनेरुपस्कार्यत्वादङ्गित्वमन्येषां तूपस्कारकत्वादङ्गत्वमिति विवेकः । तत्र भावध्वनेरुपस्कार्यत्वे हेतुमाह। प्राधान्यमुपेयुष इति। प्राधान्ये कारणमाह। विश्रान्तिधामत्वेनेति । पर्य-

---

१ °मतं देव° C. २ D. drops भवति. ३ °करणा° T., C., G., M. ४ °र्थेभूत° G. ५ °भानत्वेन C. ६ C. drops रस. ७ स्योपाध्यायै° K. ८ K. drops यः ९ पदसंसर्गो वा K. १० लक्ष्या K. ११ श्लोकार्थः K. १२ °दितीदं D. १३ °शक्तिकमस्य K. १४ तादृक्शक्तिदेवतायाः. १५ कर्मशीलस्तु K. १६ °मुपकार्योपकारक° K. १७ °भावेन संकर इत्याह K. १८ K. drops तु.

ध्वनिभिः सहास्त्येवोपस्कार्योपस्कारकभावेन संकर इति त्रिविधोऽपि[1] सूचित[2] एव ध्वनिः ॥

पाणिनिप्रमुखैस्तैस्तैः सर्वशास्त्रविशारदैः ।
इह तावत् त्रिधा शास्त्रमभ्यधीयत तत्र च ॥३॥
शब्दप्रधानं वेदाख्यं प्रभुसंमितमुच्यते ।
ईषत्पाठान्यथापाठे[3] प्रत्यवायस्य दर्शनात् ॥४॥

---

वसानभूमित्वेनेत्यर्थः । तत्रापि हेतुमाह । वाक्यार्थीभूतत्वादिति[4] । इति श्लोकं व्याख्याय संप्रति प्रेक्षावतां प्ररोचनार्थं[5] स्वग्रन्थप्रतिपाद्यमर्थं[6] प्रतिज्ञातुमादौ तदुपयोगितयोपदेशत्रैविध्यं तावदाह । पाणिनीत्यादिश्लोकचतुष्टयेन । शासनाच्छास्त्रमुपदेशः कर्त्तव्याकर्त्तव्यबोधकं पौरुषेयमपौरुषेयं वा वाक्यम् । तदुक्तम् ।

'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां[7] येनोपदिश्येत तच्छास्त्रमभिधीयते ॥'

इति । तच्छास्त्रं त्रिधा प्रभुसंमितं मित्रसंमितं[8] कान्तासंमितं चेति[9] । किमेषां[10] लक्षणमित्यपेक्षायामेकैकशो निरूपयति । तत्र चेति । तत्र त्रयाणां मध्ये यद्वेदाख्यं शास्त्रं तत्[11] प्रभुसंमितं राजतुल्यमित्यर्थः । एतद्वेदो[12]पपादयन्नस्य लक्षणमाह । शब्दप्रधानमिति । यत्र[13] शब्दप्रधानं शास्त्रं तत् प्रभुसंमितमित्यर्थः । यथा प्रभुर्वाङ्मात्रेण पुरुषं प्रवर्त्तयति निवर्त्तयति विपक्षे दण्डयति चैवं वेदोऽपि विधि[14]निषेधेनैव पुंसां प्रवृत्तिनिवृत्तिहेतुर्विपक्षे प्रत्यवायं चापादयति । शब्दप्रधानमित्यनेनार्थस्य प्राधान्यमात्रनिषेधः । स्वरूपनिषेधे तु[15]न्मत्तप्रलपितवदप्रवर्त्तकत्वापातात्[16] ।

---

१ T. drops अपि. २ सूच्य एव O. ३ ईषदप्यन्यथाभावे पाठस्य दुरितं यतः T., C., G., M. ४ वाक्यार्थभूत° K. ५ प्रेक्षावन्मनःप्ररोचनार्थं K. ६ स्वग्रन्थे प्रति° K. ७ पुंसो K. ८ सुहृत्संमितं D. ९ चेत्यर्थः K. १० काव्यत्र प्रभुसंमितादीनि कियन्ति तेषां लक्षणानीत्याशङ्क्य तान्येकैकशो K. ११ D. drops तत्. १२ तद्वेदो° K. १३ K. drops यत्र. १४ K. drops विधि. १५ °निषेधेऽत्र मत्त° K. १६ °प्रवर्त्तकत्वात् K.

**इतिहास[1]दिकं शास्त्रं मित्र[2]संमितमुच्य[3]ते ।**
**अस्यार्थवादरूपत्वात् कथ्यतेऽर्थप्रधानता ॥५॥**

---

शब्दश्चात्र विधिप्रत्ययोपलक्षितं वाक्यं तस्य प्राधान्यं प्रवर्त्तकत्वम् । ननु पुरुषप्रवृत्तिरूपां भावनां विदधानः प्रत्यय एव प्रवर्त्तकः तस्य प्रेरणार्थे विधानात् तत् कथं वाक्यं प्रवर्त्तकमिति चेदहो पेलवमाहि पाण्डित्यमायुष्मतो येन प्रत्ययः प्रवर्त्तक इत्याकलयता स च विशिष्ट इति नाकलितम् । तदाकलने वाक्यमेव प्रवर्त्तकमित्यपि किं नाकलयेः । तथाहि । न हि भावयेदित्युक्ते कश्चित्[4] प्रवर्त्तते किं[5] त्विदमनेनैवं भावयेदिति । तथा सत्यंशत्रयविशिष्टभावनाभिधायी प्रत्ययः प्रवर्त्तक इति वाक्यमेव प्रवर्त्तकमित्युक्तं भवति । तदुक्तमाचार्यैः कारिकायाम् ।

'किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।
तेन प्रवर्त्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते ॥'

इति । तत्सुष्ठूक्तं वाक्यमेव प्रवर्त्तकमिति । तत्र परमेवेदं शब्दप्रधानमिति । शब्दप्राधान्ये हेतुमाह । **ईषदिति** । पठ्यते इति पाठो वेदः तस्यान्यथापाठेऽन्यथो[6]च्चारणेऽपि यतो दुरितमन्यथानुष्ठानेऽननुष्ठाने वा प्रत्यवाय इति किमु वक्तव्यम् । अध्ययनविधेः फलवदर्थावबोधपर्यवसित[7]त्वादिति । तस्माच्छब्दप्रधानं ततः प्रभुसंमितं वेदाख्यं शास्त्रमित्यर्थः ॥

अथ मित्रसंमितमाह । **इतिहासेति** । तस्य लक्षणं सोपपत्तिकमाह । **अस्येति** । अर्थप्रधानं शास्त्रं मित्रसंमितमित्यर्थः । अत्रार्थो[8] वाक्यार्थो न पदार्थस्तस्याप्रवर्त्तकत्वात् । प्राधान्यं[9] च प्रवर्त्तकत्वमेव । अर्थप्राधान्ये हेतुमाह । **अर्थवादरूपत्वादिति** । इतिहासादयो न[10] वेदवदेवं कुर्यादिति विधिबलेन पुरुषं प्रवर्त्तयन्ति किं तु पूर्वपुरुष[11]चरितवर्णना[12]मुखेन सुहृदिव युक्तिभिरनुनीय प्रवर्त्तयन्ती[13]त्यर्थप्राधान्यमित्यर्थः ॥

---

१ °हासपुराणादि T., C., G., M. २ सुहृत्संमित° T., C., G. ३ °मिष्यते T., C., M. ४ कश्चिदपि K. ५ किंचिदने° K. ६ K. omits अन्यथापाठे. ७ °पर्यन्तत्वा° K. ८ D. drops अर्थः. ९ प्रवर्त्तकत्वं च प्राधान्यम् K. १० न तदेवं कुर्या° D. ११ °पुरुषा° D. १२ °वर्णन° D. १३ °त्यर्थः । प्रधानतेति प्राधान्यमित्यर्थः K.

ध्वनिप्रधानं काव्यं तु कान्तासंमितमीरितम्।
शब्दार्थौ गुणतां नीत्वा व्यञ्जनप्रवणं यतः॥६॥
एष विद्याधरस्तेषु कान्तासंमितलक्षणम्।
क[1]रोमि नरसिंहस्य चाटुश्लोकानुदाहरन्॥७॥

---

अथ कान्तासंमितं तल्लक्षणं[2] चाह। **ध्वनीति**। ध्वनिप्रधानं शास्त्रं कान्तासंमितमिति लक्षणं तच्च काव्य[3]मित्यर्थः। ध्वनिल[4]क्षणं तु वक्ष्यते। प्राधान्यं तु प्रवर्त्तकत्वमेव। तस्य कान्तासंमितत्वमुपपादयति। **शब्दार्थाविति**। श[5]ब्दार्थाविह वाच्यवाचकौ लक्ष्यलक्षकौ च तयोर्गुणत्वमुपसर्जनत्वं तच्च ध्वनिजननमात्रोपक्षीणत्वात्। व्यञ्जनप्रवणं ध्वनिप्रधानम्। तदयमर्थः। यथा कान्ता कटाक्षवीक्ष[6]णमन्दहासम[7]धुरभाषणादिभिः पुरुषं रञ्जयन्ती व्यञ्जनव्यापारेणैव सर्वं कारयति एवं काव्यकलापि शब्दार्थोभयशक्तिमूलया व्यञ्जनवृत्त्या सहृदयहृदयाह्लादिकया चमत्कुर्वती रामादिवद्वर्त्तितव्यं ज[8]नेन न रा[9]वणादिवदिति[10] ध्वनयन्ती सरसतामापाद्य पुंसः कर्त्तव्ये प्रवर्त्तयति निवर्त्तयति चाकर्त्तव्यादिति कान्तासंमितमिदं शास्त्रमितीत्थमुपदेशत्रयं विविच्य त[11]त्र तृतीयनिरूपणं स्वग्र[12]न्थकृत्यमिति प्रतिजानीते। **एष इति**। एष वि[13]द्याधरो विद्याधराख्यः। अ[14]हमिति शेषः। **करोमी**त्युत्तमपुरुषप्रयोगात्। 'स्थानिन्यपि' इति वचनादप्रयोगः। **तेष्विति**। तेषु शास्त्रेषु तन्म[15]ध्ये इत्यर्थः। कान्तासंमितलक्षणं काव्यलक्षणमित्यर्थः: एतेन काव्यलक्षणं विषयः। तज्ज्ञानं प्रयोजनम्। तयोः साध्यसाधनभावः संबन्धः। त[16]ज्जिज्ञासुरधिकारीति स्व[17]ग्रन्थस्यानुबन्धचतुष्टयं सूचितम्। पुण्यश्लोकचरितनिबन्धनाम् प्रब[18]न्धप्रतिष्ठां मे[19]स्वाह। **नरसिंहस्येति**॥

---

१ करोति C., T., G. २ °संमितं तल्लक्ष° K. ३ काव्याख्यमि° K. ४ ध्वनिर्लक्ष्यते D. ५ शब्दार्थावेव D. ६ °प्रेक्षण° K. ७ शब्दं K. ८ K. omits जनेन. ९ D. inserts वर्तितव्यं after न. १० D. inserts च after इति. ११ D. drops तत्र. १२ स्वयं ग्रन्थकृत् D. १३ K. drops विद्याधरः. १४ सोऽहमिति D. १५ मध्ये K. १६ जिज्ञासु° K. १७ D. drops स्व. १८ प्रबलप्रति° K. १९ मन्वान आह K.

अन्तरेण नरसिंहभूपतिं[1]
नेतरोऽस्ति मम वाङ्मयोचितः ।
चन्द्रचूडमपहाय जाह्नवी-
वारि वोढुमपरः क ईश्वरः ॥ ८ ॥

विश्वोल्लङ्घनजाङ्घिकीं वितनुते कीर्त्तिं विधत्ते श्रियं
हेलाधिकृतयक्षराजविभवां चिन्ताकरं हन्त्यघम् ।

---

ननु रघुरामादीन् पुरातनान् पुरुषधौरेयानुपेक्ष्य किमित्याधुनिकं पुरुषमधिकरोषीत्याशङ्क्याह । अन्तरेणेति । पुरातनत्वमप्रयोजकम् । गुणनिधित्वप्रयोजकगरिमादिना तु नरसिंहो रामादीनतिशेत इति भावः । अत्रेश्वरनरसिंहयोर्निरपेक्षे वाक्यद्वये बिम्बप्रतिबिम्बभावेन वाङ्मयजाह्नवीवारिरूपसमानधर्मनिर्देशात् दृष्टान्तालंकारः ॥

ननु 'काव्यालापांश्च वर्जयेत्' इति काव्यालाप एव निषिद्ध इति कुतः काव्यनिर्माणावकाशः कुतस्तरां तल्लक्षणप्रणयनप्रसक्तिः कुतस्तमां च[3] नरसिंहचाटूदाहरणवार्त्तेत्याशङ्क्याह[4] । विश्वोल्लङ्घनेति । जङ्घया चरतीति[5] जाङ्घिकी जङ्घाला शीघ्रगामिनीति यावत् । 'जङ्घालोऽतिजवस्तुल्यौ जङ्घाकारिकजाङ्घिकौ' इत्यमरः "चरति" इति ठक् । "टिड्ढाणञ्—" इत्यादिना ङीप्[6] । विश्वव्यापिनीत्यर्थः । चिन्ताकरं[7] माधिजनकमघं पापं हन्ति पुण्यश्लोकगुण[8]वर्णनादित्यर्थः । रसान् शृङ्गारादीन् । चेतसः परिस्पन्दानपहन्तीति[9] परिस्पन्दापहं विक्षेपहरमित्यर्थः । "अन्येष्वपि दृश्यते" इत्यपिशब्दाड्डप्रत्ययः । अत्र सर्वत्र[10] कवेर्यथायोगं सहृदयानां चेति शेषः । पूर्वैश्चायमर्थः प्रतिपादितः ।

---

१ °भूपतेर्न° C., G. २ गुणराशिमान् नरसिंहो D. ३ K. drops च. ४ °वार्त्तेति । तथाह K. ५ K. omits जङ्घया चरतीति. ६ "टिड्ढाण" इति ङीप् D. ७ °करणमा° D. ८ D. drops गुण. ९ परिस्पन्दनमप° K. १० K. omits सर्वत्र.

दुग्धे स्वादुतरान् रसान् वितरति[1] स्फारं
कलाकौशलं[2]
काव्यं निर्वृतिमावहत्यपि परिस्पन्दापहं[3]
चेतसः ॥ ९ ॥

कवयत इति कविस्तस्य कर्म काव्यं तच्चार्थाद्वर्णनात्मकम् ।
यदुक्तम् ।

---

'[4]परिवड्ढइ विण्णाणं [5]संभाविज्जइ जसो [6]विसर्प्पन्ति [7]गुणा ।
[8]सुव्वइ [9]सुपुरुसचरिअं[10] किं [11]तं जेण [12]ण हरन्ति [13]कव्वालावा ' ॥

'काव्यं यशसेऽर्थकृते—' इत्यादि च । तदेवमनेकश्रेयःसाधनतया काव्यं न हेयम्[14] । निषेधो मुद्राराक्षसाद्यसत्काव्यविषयतया व्यवस्थापनीयः । अन्यथा रामायणादीनामपि हेयत्वप्रसंगादिति भावः ॥

एवं कान्तासंमितोपदेशस्य स्वरूपं प्रामाण्यं च निरूप्य [15]संप्रति तत्र काव्यशब्दस्य प्रवृत्तिनिमित्तं सूचयन्निर्वचनमाह । कवयत इ[16]त्यादिना । कवयते वर्णयतीति कविः कवयिता । कव वर्णन इति धातोरौणादिक इकारप्रत्ययः । तस्य कर्म काव्यमिति ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । ननु कविकर्मणः काव्यत्वे तै[17]र्थपर्यटनादीनामपि काव्यत्वप्रसङ्ग इत्याशङ्क्[18]याह । तच्चेति । तच्[19] कर्मार्थात् सा[20]मर्थ्यात् काव्यशब्दस्य वर्णनार्थशब्दप्रकृतिकत्वलक्षणाद्वर्णनात्मकमेव लभ्यत इति नातिव्याप्तिरित्यर्थः । एतेन वर्णनात्मा संदर्भविशेषः काव्यमिति लक्षणं तदेव प्रवृत्तिनिमित्तं च काव्यशब्दस्येत्युक्तं भवति । अत्र च संमतिमाह । यदुक्तमिति

---

१ वितरते G. २ क्रियाकौ° D. ३ परिस्पन्दावहं° T., G. ४ परषवड्ढइ D. ५ संभाविताइ D. ६ विवर्ध्यंते D. ७ गुणा· D. ८ सुव्वइ D. ९ सुपुरु° K. १० °चारित्र्य° D. ११ किं जं D. १२ D. drops ण. १३ कट्ठालावा D. १४ विगेयम् K. १५ तत्र संप्रति K. १६ इत्यादि D. १७ तद्वतनादिना° K. १८ इत्यत आह K. १९ D. omits च. २० K. drops सामर्थ्यात्

शाणोत्कीर्ण[1]मिवो[2]ज्ज्वलद्युति पदं बन्धोऽर्धनारीश्वर-
श्लाघालङ्घनजाङ्घिको दिवि लतोद्भिन्नेव चार्थोद्गतिः ।
किं[3]चित्पीडितचन्द्रमण्डलगलत्पीयूषहृद्यो रसः
तत् किञ्चित् कविकर्म मर्म[4] न पुनर्वाग्डिण्डिमाडम्बरः[5] ॥ १० ॥

कृत्वा काव्यमवाप विश्वमहितां कीर्त्तिं कविग्रामणीः

'शाणस्तु निकषः[6] कषः' इत्यमरः । तत्रोत्कीर्ण[7]मुत्तेजितम् । उज्ज्वलद्युति शाणोल्लीढमणिकल्पमित्यर्थः । बन्धः पदसंघटना । अर्धेन नारी सा[9] चासावीश्वरश्च तस्य श्लाघा संघटना[10]सौभाग्यं तल्लङ्घने जाङ्घिकः शीघ्रगामी अर्धनारीसंघटनवदविषम इत्यर्थः । "चरति[11]" इति ठक् । दिव्युद्भिन्ना लता विद्युल्लता । अर्थोद्गतिरर्थस्फुरणम् । किञ्चित्[12]पीडितमीषत्[13]पीडितमन्यथा विरसं भवेदिति भावः । हृदयस्य प्रियो हृद्यः । "हृदयस्य प्रियः" इति यत्प्रत्ययः । यत्रैते गुणास्तदेव किञ्चित् किमपि लोकोत्तरं कविकर्म काव्यं मर्म रहस्यमन्यथा कर्णकोलाहल इत्यर्थः ॥

अथ विश्वोल्लङ्घनेति श्लोके यत् काव्यस्यानेकश्रेयस्करत्वमुक्तं तद् दृष्टान्तैर्व्यनक्ति । कृत्वेति । किं बहुना चतुर्वर्गचिन्तामणिरियं कविता नाम । तस्मात् काव्यं कर्त्तव्यं व्याख्यातव्यं[14] चेति भावः ॥

१ शाणोत्तीर्ण° D. २ °मिहोज्ज्वल° G. ३ किंचिच्चूर्णित° D. ४ नर्म T., G.; लक्ष्म C. ५ °डिण्डिमाडुम्बरः D. ६ निकष इत्य° D. ७ °त्रोत्तीर्ण° D. ८ °मिति भावः D. ९ स K. १० संघटन° K. ११ जङ्घया "चरति" D. १२ किंचिच्चूर्णित° D. १३ °षन्निष्पीडित° D. १४ K. inserts श्रोतव्यं after कर्त्तव्यं.

श्रीहर्षः श्रियमद्भुतां हरिहरो लेभे[1]ऽर्जुन-
क्ष्मा[2]भुजः ।
मृत्योस्त्रासमपाचकार मलयक्ष्मामण्डलाखण्डल-
स्तत् किञ्चिन्न विलोक्यते न किल यत्
काव्यात् समुन्मीलति ॥ ११ ॥

प्रतिभा बहुशास्त्रदर्शिता[3]
बहुधा काव्यविदां च शिक्षया ।
मु[4]हुरभ्यसनं मनीषिभिः
कथितं कारणमस्य संभवे ॥ १२ ॥

शब्दार्थगुणालंकाराः प्रतिभान्त्यनयेति प्रतिभा शक्तिः यया

तदेवं ग्रन्थारम्भं समर्थ्य संप्रति न स[5]र्वसुलभं काव्यनिर्माणं किं तु केषांचिदेव सुकृतिनामियं विद्येति दर्शयितुं तदुत्पत्तिसामग्रीमाह । प्रतिभेति । श्लोकं स्वयमेव व्याचष्टे । शब्दार्थेत्यादि । प्रतिभान्ति स्फुरन्तीत्यर्थः । [6]प्रतिभेति । "आतश्चोपसर्गे" इत्यङ्प्र[7]त्ययः । "अकर्त्तरि च कारके संज्ञायाम्" इति करणार्थता । शक्तिः कवित्वबी[8]जरूपः संस्कारविशेष इति काव्यप्रका[9]शः । तत्सद्भावे किं प्रमाणमित्याशङ्क्य कार्यलिङ्गानुमानमाह । यया विनेति । सर्वा काव्यक्रिया शक्तिविशेषपूर्विका क्रियात्[10]वात् स्फोटा[11]दिवत् शक्त्यभावे कार्यमेव न स्यात् [12]अनग्नावस्फोटव-

१ भेजे C. २ क्ष्माभृतः D., T. ३ शीलनं C. ४ बहुर° G. ५ च सुलभं K.
६ K. drops प्रतिभेति. ७ K. drops प्रत्ययः. ८ °बीजः K. ९ °प्रकाशे K.
१० कार्यत्वात् D. ११ स्फोटादिकार्यवत् D. १२ अग्नावस्फोट° D.

विना काव्यं कर्त्तुमेव[1] न क्षमते[2] कविः कुर्वन्[3] वा हास्यास्पदं[4] भवति। अकवितैव वरं कुकवितायाः। कुकविता हि कायानपेतमनस्कं[5] मरणम्। बहुशास्त्रदर्शिता व्युत्पत्तिः। सर्वपथीनाः खलु कवयो भवन्ति। प्रतिभायाः प्रागुपादानं व्युत्पत्त्यपेक्षया प्राधान्यद्योतनाय[6] व्युत्पत्तिमान्द्याविर्भूतदोषापाकरणाय प्रभविष्णुत्वात्

दिति प्रमाणतर्काभ्यां शक्तिसिद्धिरित्यर्थः। अथापि शक्त्यनङ्गीकारे दोषमाह। **कुर्वन् वे**ति। कुकाव्यकरणादिति भावः। नन्वभावाद् भावो[7]ऽतिरिच्यत इति न्यायात् कुकाव्यकरण[8]मपि श्रेय इत्याशङ्क्याह। **अकवितैवे**ति। कुत इत्यत आह। **कुकविता ही**ति। कायानपेत[9]मनस्कं मरणं जीवन्मरणमित्यर्थः। कुजीवनाज्जीवनमिव कुकवित्वादकवित्वमेव वरम्। त्वदुक्तन्यायस्तु गुणविषय इत्याशयः। तस्मात् सिद्धं प्रतिभापि कारणमन्यथा सर्वोऽपि कवयेदिति। बहुशास्त्रदर्शितेत्यस्य व्याख्यानं **व्युत्पत्तिरि**ति। संगतिमह इत्यर्थः। शास्त्रग्रहणं लोकस्याप्युपलक्षणम्। त्रैगुण्योद्भवस्य लोकचरितस्यैवातिविचित्रस्य नानारसस्यैं[10] प्रायेणात्र वर्ण्यत्वात्[11]। तथा च लोकव्यवहार[12]वेदवेदाङ्गे[13]तिहासपुराणकलादिसकलविद्याकौशलमप्यत्र[14] कारणमित्यर्थः। तत्रोपपत्तिमाह। **सर्वपथीना इ**ति। सर्वान् पथः पूर्वोक्तलोकवेदादिमार्गान् व्याप्नुवन्तीति सर्वपथीनाः सर्ववेदिन इत्यर्थः। अन्यथा काव्यनिर्माणस्य दुष्करत्वादिति भावः। "तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति" इति खप्रत्ययः। श्लोके प्रतिभाया[15] व्युत्पत्तेः प्रागुपादाने कारणमाह। **प्रतिभाया इ**ति। प्राधान्ये हेतुमाह। **व्युत्पत्तिमान्द्ये**ति। न ह्यव्युत्पत्तिदोषं प्रतिभेवाप्रतिभादोषं व्युत्पत्तिस्तिरोधातुं[16] प्रभवति। अतः प्रतिभायाः प्राधान्यमित्यस्याः प्रागुपादानं युक्तमित्यर्थः। बहुधा बहुशास्त्रदर्शितेत्यन्वयः। बहूनां शास्त्राणां

१ कर्त्तुं काव्यमेव D. २ क्षमेत D., शक्यते C.; D. G., and C. drop कविः. ३ कृत्वा हा° C. ४ हासा° G., C. ५ °मनस्कमरणं T. ६ °ध्वननाय T., G., C., M. ७ भावो विरिच्यते D. ८ °करणमेव K. ९ कायानपेतेति जीवन्म° K. १० °रसस्यैव K. ११ वर्ण्यमानत्वात् D. १२ °व्यवहारवद्वेद° D. १३ °वेदाङ्गशास्त्रेति° D. १४° कौशलमत्र K. १५ प्रतीताया D. १६ तिरोधातुमीष्टे K.

प्रतिभायाः। काव्यं कर्त्तुं विदन्ति विन्दते[1] इति काव्यविदः कवयः सहृदयाश्च वेत्तिविन्दत्योरावृत्त्या[2] ग्रहणात् परिस्फुरतः प्रकृतिश्लेषस्य[3] महिम्नाभिधीयन्ते[4]। तेषां हि[5] शिक्षया काव्यकरणविचारयो-[6]

बहुधा बहुशो दर्शनं व्युत्पत्तिरित्यर्थः। अथाभ्यासाख्यकारणनिरूपणाय व्याचष्टे[7]। काव्यविदामित्यादि[8]। काव्यविदः कवयः सहृदयाश्चाभिधीयन्त इति संबन्धः। ननु कथं[9] काव्यविच्छब्दस्यैकस्योभयार्थत्वमित्याशङ्क्यां[10] यथैतत्तथा व्युत्पादयति। काव्यं कर्त्तुं विदन्ति विन्दत इति काव्यविद इति। अत्रायं विवेकः। काव्यं[11] कर्त्तुं विदन्ति जानन्तीति व्युत्पत्त्या काव्यविदः कवय उच्यन्ते। विद ज्ञान इति धातोः क्विप्। अथ काव्यं विन्दते विचारयन्तीति व्युत्पत्त्या तु काव्यविदः काव्यपरीक्षकाः सहृदयाः कथ्यन्ते। विद विचारण इति धातोः क्विप्। ननु तथाप्येकोच्चारणे कथमेकस्यानेकार्थाभिधायकत्वं तत्राह। परिस्फुरत इति[12]। काव्यविदामित्यत्र[13] क्विपोः[14] कर्तृवाचिनोरुभयत्रैकार्थत्वात्[15] प्रकृतेर्विच्छब्दस्य[16] ज्ञानविचारयोः श्लिष्टत्वादयं प्रकृतिश्लेषः। तस्य महिम्नेति। इहार्थद्वयस्यापि प्राकरणिकत्वेनैकत्र[17] नियन्तुमशक्यत्वादेकोच्चारणेऽप्युभयत्राभिधाया निरङ्कुशत्वादित्यर्थः। ननु श्लेषस्य किमत्र परिस्फोरकमत आह[18]। वेत्तिविन्दत्योरिति। विद ज्ञाने विद विचारणे इत्यनयोर्धात्वोर्विदविदेति द्विरावृत्त्या ग्रहणे एक एवायमर्थद्वयेऽप्यावर्त्तत इत्येकत्वानुसंधानाच्छ्लिष्टता स्फुरत्येवेत्यर्थः। ननु भिन्नार्थाविमौ धातू[19] भिन्नावेवेति कथमयं श्लेषः। यत्रैकस्यानेकार्थत्वं तत्रैव श्लेषव्यवहारादिति[20] चेत् सत्यम्। सादृश्यादेकत्वाध्यवसायाददोष इत्यलंकारसर्वस्वकारः[21]। एवं काव्यविदामित्यत्र प्रातिपदिकार्थे[22] व्याख्याय विभक्त्या योजयन्नभ्यसन-

१ विन्दन्ति वा T., G., C. २ °रावृत्त्यार्थग्र° T., G. ३ प्रकृत° G. ४ विधीय° C., M. ५ T., G., and C. omit हि. ६ °विचारकरणयो° T. ७ °पणाय काव्यविदामित्यादि व्याचष्टे D. ८ D. inserts काव्यमित्यादि after काव्यविदामित्यादि. ९ K. drops कथं. १० °त्याशङ्क्य K. ११ K. drops काव्य. १२ °रतः प्रकृतिश्लेषस्येति K. १३ काव्यविद इत्य° K. १४ क्विप्सुपः D. १५ कर्त्तव्यवाचिनः D. १६ तत्र क्ते° D. १७ प्राकरणिकेनै° D. १८ किमुत तत् स्फोरक° D. १९ नाभिन्ना° K. २० K. omits धातू. २१ K. drops इत्यलंकारसर्वस्वकारः. २२ °पदिकार्थे D.

रविच्छेदेन परिशीलनमभ्यासः । अनवरतमभ्यस्यतामेव कवीनां वाक्यानि पाकमासादयन्ति । पाकस्तु रसोचित[2]शब्दार्थनिबन्धनम् । श्रवणसुधास्यन्दिनी पदव्युत्पत्तिः पाक इत्यन्ये[3] । पदानां [4]परिवृत्तिवैमुख्यं पाक इत्यपरे[5] ॥

शब्दार्थौ[1] वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनि-
श्चार्वाकैरिव कश्चिदस्य न पुनः सत्तापि संभाव्यते ।
कर्तुं लक्षणमक्षमैरयमनिर्वाच्यः परैरुच्यते
भाक्तोऽन्यैः समुदीर्यतेऽस्य हि ततो ब्रूमः स्वरूपं वयम् ॥ १३ ॥

शब्दार्थमाह । तेषामिति । काव्यविदामित्यर्थः । कर्त्तरि षष्ठीयम्[6] । शिक्षया एवं कुर्या[7]देवं विचारयेदित्युपदेशेन तथैव काव्यस्य करणं विचारणं च परिशीलनं तदेवाभ्यसनमित्यर्थः । अभ्यासस्य प्रयोजनमाह । अनवरतमिति । पाकशब्दार्थमाह । पाकस्त्विति । रसाः शृङ्गारादयः । तेषां मृदूद्धतादिभेदभिन्नत्वादुचितशब्दार्थगुम्फ[8]नात्तद्व्यञ्जनसमर्था सती[9] सा पदवृत्तिः कर्णामृतवर्षिणी भवति । अतो रसास्वादो[10]चितशब्दनिष्पत्तिः पाकः स चाभ्याससाध्य इति सफलोऽभ्यास इत्यर्थः । अयं च पाकः कालिदासादिप्रबन्धेषु प्रसिद्ध एव । मतान्तरमाह । पदानामिति । परिवृत्तिवैमुख्यं विनिमयासहिष्णुत्वम् । एतदेव मैत्रीशय्येति चा[11]ख्यायते । यथास्मदीयश्लोके चन्द्रोदयवर्णने ।

१ G. and C. insert हि after पत्र. २ रसोदित° C. ३ इत्येके G., T. ४ पदान्तरपरिवृत्ति° G., T., C., M. ५ इत्यन्ये T. ६ षष्ठी यया K. ७ प्रयोजयेदित्युपदेशने K. ८ °गुम्फना तद्व्य D. ९ सा सा पद° K. १० रसोचित° K. ११ °ति ख्यायते D.

**शब्दार्थवपुस्तावत् काव्यं वपुषि च[1] केनाप्यात्मना भवितव्य-मात्मा च ध्वनिरेव तस्य[2] चाभावं मन्यमाना लोकायतिका इव**

निशाकरकरस्पर्शान्निशया निर्वृतात्मना ।
अमी स्तम्भादयो भावा व्यज्यन्ते रज्यमानया ॥

अत्र निशादिपदस्थाने क्षपादिपदान्तरप्रक्षेपे पदानां परस्परमैत्रीभङ्गः । तदेवं शक्तिव्युत्पत्त्यभ्यासा मिलिताः काव्योत्पत्तौ कारणं न त्वेकैकमिति[3] प्रतिभेत्यादि-श्लोकार्थः ।

अथेह[4] ध्वनिनिरूपणं प्रथमोन्मेषार्थः । न चासंदिग्धमप्रयोजनं च निरूपणमर्ह-तीति संदेहबीजं प्रयोजनं च दर्शयन् ध्वनिनिरूपणं प्रतिजानीते । **शब्दार्था-विति** । अस्य काव्यस्य । तत्र वपुषि । अस्य ध्वनेः । सत्तापि न संभाव्यते अप्रामा-णिकत्वान्नाङ्गीक्रियत इत्यर्थः । लक्षणमिति । गुणालंकारव्यावर्तकं[5] धर्ममित्यर्थः । अनिर्वाच्यः सहृदयहृदयैकसंवेद्यो न तु निर्वक्तुं शक्यः । भाक्त औपचारिकः । ततो विप्रतिपत्तिसद्भावात् । अस्य ध्वनेः स्वरूपं वयं सिद्धान्तिनो ब्रूमः । तद-यमर्थः । शब्दार्थशरीरं काव्यं तत्र ध्वनिरात्मेति सिद्धान्तः । तत्र त्रेधा[6] पूर्वपक्षः[7] । तत्र ध्वनिरेव नास्तीति प्रथमः । अस्त्यनिर्वाच्य इति द्वितीयः । निर्वाच्यो भाक्त इति तृतीयः । एतत्पक्षत्रयनिरासेन ध्वनिकारसिद्धान्तावलम्बात् ध्वनिरूपस्वरूपं प्रमाणलक्षणाभ्यां निरूपयाम इति । नन्वेतावता किमत्र प्रयोजनमुक्तं किं वा संदेह-कारणमित्याशङ्क्य यथैवं तथा श्लोकं व्याचष्टे । **शब्दार्थेति** । ततः किमत आह । **वपुषि[8] चेति** । अन्यथास्य निरात्मकत्वे वक्ष्यमाणगुणालंकारजातमशेष-मपि शवशरीरमण्डनमापद्येतेति भावः । तर्ह्यात्मैव निरूप्यतां किं ध्वनिसाधनेने-त्यत आह । **आत्मा च[9] ध्वनिरेवेति** । अतः काव्यकान्ताशरीरस्य जीवितसि-द्धिरेव ध्वनिसाधनस्य प्रयोजनमिति प्रथमपादार्थः । द्वितीयतृतीयाभ्यां तु संदेहका-रणं वादिविप्रतिपत्तिः प्रतिपाद्यत इति व्याचष्टे । **तस्य चेत्यादिना** । एवं त्रिधा वादिविप्रतिपत्तिमुपन्यस्य तत्राद्यपक्षप्रतिक्षेपमुपक्षिप्य[10] पक्षानुवादपूर्वकं प्रतिजानीते ।

---

१ T. and C. drop च. २ तस्याभावं C. ३ चैकैक° K. ४ अग्रे ध्वनि° D.
५ °व्यावर्त्तकधर्म° K. ६ द्वेधा D. ७ पूर्वः पक्षः K. ८ वपुषीति K. ९ आत्मा चेति K.
१० °क्षेपं प्रतिक्षे (क्षि) प्य D.

केचन नास्ति ध्वनिरित्याचक्षते । अपरे तु[1] वाग्गोचरतामवतारयितु-[2]मेनं न शक्यत इति ब्रुवते । अन्ये तु भाक्तमेनं भाषन्ते । [3]तदेवमुपस्थितासु तिसृषु विमतिषु समयमपेक्षमाणस्य शब्दस्यार्थबोधकत्वमिति न विचारितरमणीया वाच्याद्[4]व्यतिरिच्यमानता प्रतीयमानस्येति मन्वानानभाववादिनः प्रति प्रथमं वदामः । ननु ध्वनिर्नास्तीति प्रतिज्ञाविरोधः । ध्वनिरित्यनेन विधिर्नास्तीत्यनेन च निषेधस्तयोश्च परस्परविरुद्धयोरेकस्मिन् धर्मिणि तिमिरातपयोरिव सहानवस्थानदुःस्थयोरेव निवारितत्वात्[5] । न चात्र विरोधपरिहारप्रयोजकयोः[6] देशकालयोरन्यतरस्याप्युपादानमस्ति

---

तदेवमित्यादिना वदाम इत्यन्तेन । विमतिषु विप्रतिपत्तिष्वित्यर्थः । अभाववादिनां मतमनुवदति । समयमिति । समयः संकेतः । इति शब्दो हेत्वर्थे । समयमपेक्ष्यैव शब्दस्य बोधकत्वात् तमन्तरेण न कश्चिदर्थः प्रतीयते । यस्तु प्रतीयते समासोक्तिपर्यायोक्तयादौ सोऽपि यथासंभवं जहत्याजहत्या वा[7] कयाचिल्लक्षणया प्रतीयमानो वाच्योपस्कारकः[8] सन् न वाच्याद् व्यतिरिच्यत इत्यभाव एव ध्वनेरिति भामहप्रभृतयो मन्यन्ते तदेतदनूद्य तावन्निरस्यति[9] । नन्विति । ध्वनिर्नास्तीति ध्वनिं पक्षीकृत्य तस्य नास्तिताप्रतिज्ञाने प्रतिज्ञाव्याघात[10] इत्यर्थः । व्याघातमाविष्करोति । ध्वनिरिति । स एवास्ति नास्ति चेति व्याघात इत्यर्थः । नन्वेकस्मिन्नपि[11] धर्मिणि घटादौ देशभेदात् कालभेदाद्वा भावाभावौ[12] व्यवस्थितावुपलभ्येते तद्वदिहाप्यविरोध इत्याशङ्क्याह[13] । न चात्रेति । नास्ति [14]न संभवति ध्वनेः क्वापि कदाप्यनङ्गीकारादिति भावः । तदुपादाननिषेधस्य प्रसक्तिमाह । येनेति । येन देशकालोपादानेनेत्यर्थः । विरोधसमाधानार्थं प्रसक्तस्यायं निषेध इत्यर्थः ।

---

१ अपरे च गोच° D., अपरे वाग्गोच° T. २ °रयितुं न श° T. ३ एवमु° C. ४ वाच्यादति° T. ५ निर्धारितत्वात् D. ६ विरोधप्रयोजक° D., °परिहारयोजक° C. ७ K. drops वा. ८ वाक्योप° D. ९ तन्मतं तावन्निरस्यत इत्यर्थः । निरस्यति । K. १० प्रतिज्ञापदव्याघा° D. ११ नैकस्मि° K. १२ भावाभावावुप° K. १३ इत्यत आह K. १४ K. omits न संभवति.

येन विरोधः समाधीयेत[1]। किं च प्रतीतः प्रतिषिध्यते ध्वनिरप्रतीतो वा। आद्येऽपि[2] क्वचिन्नास्ति[3] क्वचिदपि नास्तीति[4] वा। प्रथमे सिद्धसाधनम्। अस्माभिरपि ध्वनेः[5] क्वाचित्कनिषेधप्रतियोगित्वस्याभ्युपगतत्वात्। न द्वितीयः। प्रतीतस्य सार्वत्रिकनिषेधप्रतियोगित्वे[6] व्याघातात्। अप्रतीतश्चेन्न। प्रतियोगिप्रतीतेः प्रतिषेधं प्रति कारणत्वात्। अथ लब्धसत्ताक एव ध्वनिस्तथापि[7] यदि न करोति काव्यस्य कामनीयकं तर्हि किमनेनाजागलस्तनायमानेन।

---

अथापि निषेधे दोषान्तरं प्रस्तौति। **किं चेति**। तत्र[8] प्रतीतिपक्षं[9] द्वेधा विकल्पयति। **आद्येऽपीति**। किं[10] क्वाचित्को निषेधः सार्वत्रिको वेत्यर्थः। क्वाचित्कपक्षं दूषयति। **प्रथम इति**। सिद्धसाधनत्वे हेतुमाह। **अस्माभिरपीति**[11]। ध्वनिवादिनामपि प्रायेण चित्रा[12]धमादौ ध्वन्यभावाभ्युपगमादित्यर्थः[13]। सार्वत्रिकपक्षं दूषयति। **न द्वितीय इति**। कुत इत्यत आह। **प्रतीतस्येति**। यत्र प्रतीयते तत्रापि निषेधे प्रतीतिविरोधः अनिषेधे निषेधस्य सार्वत्रिकत्वभङ्ग इत्यर्थः। अप्रतीतनिषेधपक्षमाशङ्कते। **अप्रतीतश्चेदिति**। प्रतिषिध्यत इत्यनुवर्त्तते। परिहरति। **नेति**। कुत इत्यत आह। **प्रतियोगीति**। अबुद्धघटादेरस्य निषेद्धुमशक्यत्वात् शक्यत्वे वा अकारणककार्योदयप्रसङ्ग इत्यर्थः। तदेवमभाववादे प्रत्याख्याते रुद्रट[14]मतावलम्बनेनान्तर्भाववादी लब्धावकाशः प्रत्यवतिष्ठते। **अथेति**। अस्त्येव ध्वनिरित्यर्थः। तर्हि निर्विवादोपरम[15] इत्याशङ्क्य ध्वनेश्चारुताहेतुत्वहेतुना गुणालंकारान्तर्भावं साधयिष्यन् हेतोरन्यतरासिद्धिं तावत् परिहर्त्तुमाह। **तथापीति**। सद्भावेऽपीत्यर्थः। गुणालंकारान्तर्भूत एव विशेषः कुत इत्याशङ्क्य किं ध्वनेः काव्यचारुताहेतुत्वमङ्गीक्रियते न वा। नेति पक्षे[16] बाधकं तर्कमाह। **यदीति**।

---

१ समाधीयते T., O., G., M. २ T. omits अपि. ३ क्वचिदप्यस्ति C. ४ नास्ति वा C. ५ ध्वनौ D. ६ °प्रतियोगिकत्वव्याघा° D. ७ °स्तदापि C., G., M.; °स्तदा T. ८ तत् T. ९ प्रतीतपक्षं K. १० किं च क्वाचि° D. ११ अस्माभिरिति K. १२ चित्रयमकादौ K. १३ °दिति भावः K. १४ रुद्रादि° K. १५ निर्विवादमावयोरित्या° D १६ पक्षबाधकमाह K.

उतस्वित् करोति तर्हि गुणालंकारान्तर्भूत एव। तथाविधस्य च[1] नामान्तरकरणे[2] नैपुणं कियन्नाम। अत्रानुमानमपि। ध्वनिर्गुणालंकारेभ्यो न व्यतिरिच्यते[3]। चारुताहेतुत्वात्। यदेभ्यो व्यतिरिच्यते न तच्चारुताहेतुः। अविमृष्टविधेयांशादिदोषवत्। चारुताहेतुश्च ध्वनिः। ततो न व्यतिरिच्यते तेभ्य इति। ननु गुणालंकारैर्व्यतिरिक्ता अपि[4] रीतयो वृत्तयश्च यथा चारुताहेतवस्तथैव ध्वनिरपि भवतीति चेदुच्यते तन्न विचारानुगुणम्। गुणातिक्रमेणोपजात[5]

---

यदि चारुताहेतुर्न स्याद्व्यर्थः स्यादिति तर्कः[6]। अथ वैयर्थ्यभीत्या चारुताहेतुत्वमङ्गीक्रियते तर्हि सिद्धं नः समीहितमित्याह। उतस्विदिति। तर्हि[7] पार्थक्यवाचोयुक्तिः परिहासहेतुरित्याह। तथाविधस्येति। गुणाद्यन्तर्भूतस्येत्यर्थः[8]। नैपुणं वैदुष्यम्। कियन्नाम न किंचिदित्यर्थः[9]। एवं चारुताहेतुत्वहेतोरन्यतरासिद्धिं परिहृत्य पञ्चावयवप्रयोगारूढं करोति। अत्रेत्यादिना। चारुताहेतुत्वात् काव्य[10]शोभाकरत्वादित्यर्थः। यश्चारुताहेतुः स तेभ्यो न व्यतिरिच्यते यथोपमादिरित्यन्वयोदाहरणस्य स्फुटत्वाद्व्यतिरेकोदाहरणमेवाह[11]। यदेभ्य इति। अविमृष्टेति। 'वपुर्विरूपाक्षमलक्ष्यजन्मता' इत्यत्र विधेयं[12] जन्मनोऽलक्ष्यत्वं[13] समासे गुणीभूतत्वान्न[14] परामृश्यत इत्यविमृष्टविधेयांशदोष[15]स्तद्वदित्यर्थः। उपनयमाह। चारुताहेतुश्चेति। निगमनमाह। तत इति। वैदर्भ्यादिरीतिषु कैशिक्यादिवृत्तिषु च गुणालंकारव्यतिरिक्तासूक्तहेतोर्व्यभिचारं शङ्कते। नन्विति। प्रकृते योजयति। तथैवेति। रीत्यादिवद् ध्वनिरपि गुणालंकारातिरिक्त एव चारुताहेतुर्भवतीत्यर्थः। इति चेदुच्यते इत्युच्यते चेदित्यन्वयः। परिहरति। तन्न[16] विचारानुगुणमिति। न युक्तिसहमित्यर्थः। कुत इत्याशङ्क्य न हि पक्षे पक्षतुल्ये वा व्यभिचारः आसामपि[17]

---

१ G. omits च; तु T. २ °करणनैपु° T., C., G. ३ °कारेभ्यो व्याति° T. ४ भवितेति T., C., M. ५ °पजायमान° T., G. ६ स्यादिति तकः। द्वितीये दोषमाह। उतस्विदिति K. ७ तथापि D. ८ गुणान्तर्भूतस्येत्यर्थः K. ९ किञ्चन इत्य° D. १० K. drops काव्य°. ११ °हरणमाह K. १२ °विधेयस्य K. १३ °जन्मालक्ष्यत्वस्य K. १४ गुणभूत° D. १५ विधेयांशाख्यदोष° K. १६ तन्नेति K. १७ तासाम° K.

महिमानः कथमपि न[1] भवन्ति रीतयः । वृत्तयस्ता[2]वदलंकारान्तर्भूता एव परुषमधुरमध्यमा[3]र्थनिरूपणाय दीप्तमसृणमध्यमवर्णारब्धानां तासामनुप्रासजातिरूपतयाभ्युपगमात् । जातिस्तु जाति-

---

तत्रैवान्तर्भावादित्यभिप्रेत्य रीतीनां तावद्गुणेष्वन्तर्भावमाह । गुणेति । गुणाः श्लेषप्रसादादयः रीतयो वैदर्भ्यादयः । ताश्च गुणविशेषविशिष्टपदरचनात्मिकास्ततः प्राप्ताप्राप्तविवेकेन गुणानामेव रीतिव्यवहारहेतुत्वाद्गुणात्मिका एव रीतयो न ततो[4]ऽतिरिक्तस्वरूपा इति न तासु हेतोर्व्यभिचार इत्यर्थः । वृत्तीनां त्वलंकारेष्वन्तर्भावमाह । वृत्तय इति । कास्ता वृत्तयः केषु वालंकारेष्वन्तर्भूताः कथं वेत्याकाङ्क्षायां रसोचितवर्णसंदर्भात्मिका वृत्तयः । अत[5] एव तासामनुप्रासनामनि शब्दालंकारेऽन्तर्भाव इत्याह । परुषेति[6] । अत्रार्था रसास्तत्र[7] रौद्रबीभत्सौ परुषौ शृङ्गारकरुणौ मधुरावन्ये मध्यमाः । यद्यपि तेष्वपीषत्परुषौ बीभत्सभयानकावीषन्मधुरा हास्याद्भुतशान्ता इति भेदोऽस्ति तथापि शुद्धभेदवैलक्षण्यमात्रविवक्षया[8] सर्वेषां मध्यमत्वोक्तिः । तेषां निरूपणाय प्रतिपादनायेत्यर्थः । दीप्ताः परुषाः मसृणा मधुरा मध्यमास्तु पूर्ववत् । तैर्वर्णै[9]रारब्धानामित्यनेन रसोचितवर्णसंदर्भो वृत्तिरिति सामान्यलक्षणमुक्तम् । तद्विशेषाः कैशिक्यादयः । तथा हि । अतिसुकुमारार्थसंदर्भा कैशिकी । अतिप्रौढार्थसंदर्भा त्वारभटी । ईषन्मृद्वर्थसंदर्भा भारती । ईषत्प्रौढार्थसंदर्भा सात्वती । ताश्च वर्णावृत्तिनियतात्मकतयानुप्रासभेदा एवेत्याह । तासामिति । नन्वर्थाश्रिता[10] वृत्तयः कथं शब्दालंकारेऽन्त[11]र्भवेयुरित्यत[12] आह । अभ्युपगमादिति । अर्थापेक्षत्वेऽपि वर्णा[13]वृत्तिप्राधान्याच्छब्दालंकारता[14]ऽस्माभिरभ्युपगम्यत इत्यर्थः । यद्यासामनुप्रासजातिरूपता तर्ह्य[15]लंकारनिष्ठजातिरूप[16]त्वं नालंकारत्वमिति कुतोऽलंकारान्तर्भाव इत्याशङ्क्[17]याह । जातिस्त्विति । जातिव्यक्त्योस्तादात्म्यादिति[18] भावः । तदेवं हेतोरव्यभिचाराद् ध्वनेर्गुणालंकारान्तर्भावः सिद्ध इति सोप-

---

१ G. and M. omit न. २ वृत्तयः पुनरलं° T., G., M. ३ मध्यमत्वनि° T., C., M., G. ४ तद्व्यतिरि° K. ५ तत एव D. ६ परुषमध्यमेति K. ७ K. omits तत्र. ८ विवक्षयैवैषां म° D. ९ तैरेव वर्णै° K. १० नन्वर्थनिष्ठा वृ° K. ११ °कारेष्वन्त° D. १२ °त्यत आह K. १३ वर्णानां वृत्ति° D. १४ °कारत्वम° D. १५ तस्यालंका° K. १६ °जातित्वं K. १७ इत्यत आह K. १८ D. drops इति भावः.

मतो नातिरिच्यते[1] । तस्मादभिधा[2]व्यापारवैचित्र्यानन्त्याच्चारुत्वविधायिनः संभवतोऽपि सामान्यलक्षणेनैव परिगृहीतत्वाच्चिरन्तनैः पृथक्त्वेनाप्रदर्शितस्य गुणालंकारयोरन्यतरस्य कस्यचिद् ध्वनिरिति पारिभाषिकं नामान्तरं विधाय यदेतन्निरतिशयतर्कताटङ्कितशेमुषीकत्वमात्मनस्ताण्डवयितुमुद्युञ्जते[3] भवन्तस्[4]तत्र को वेद

---

हासमुपसंहरति । तस्मादित्यादिना इति[5] चेदुच्यत इत्यन्तेन । कस्यचिदिति । अर्थस्य प्रतीयमानस्येति शेषः । पारिभाषिकं जात्यादिप्रवृत्तिनिमित्तशून्यं डित्थादिवत्[6] केवलसाङ्केतिकमित्यर्थः । ननु[7] पारिभाषिकत्वे को हेतु[8]स्तत्राह । गुणालंकारयोरन्यतरस्येति । तयोरन्तर्भूतस्येत्यर्थः । तथा चोपमादिवदलंकारत्वादवान्तरजाति[9]मतः पारिभाषिकसंज्ञाकरणमज्ञानकारण[10]कमेवेति भावः । तदन्तर्भावे हेतुमाह । चिरन्तनैरिति । भामहादिभिरित्यर्थः । तेषामपृथक्करणे हेतुमाह । सामान्येति । सामान्यलक्षणमाह । चारुत्वविधायिन इति । नन्वभिधायाः प्रकृतार्थे नियन्त्रणाल्लक्षणायाश्च मुख्यार्थबाधमन्तरेणाप्रवृत्तेर्व्यञ्जनो[11]व्यापारे च भवतामकाहण्याद् गत्यन्तरस्य चासंभवादनाघ्रातसत्ताकस्य ध्वनेरन्तर्भावाभिधानमभित्तिकचित्ररचनाप्रायमित्याशङ्क्याह । संभ[12]वतोऽपीति । ननु संभव एव कुत इत्युक्तं तत्राह । अभि[13]धेति । इह तावदर्थान्तर[14]प्रतीतेर्दुरपह्नवत्वाद् व्यापारमन्तरेणाप्रतीतेर्व्यापारा[15]न्तरकल्पनायां गौरवाद्धर्मिकल्प[16]नातो वरं धर्मकल्पनेति न्यायादभिधाया एव तात्पर्यान्तरकल्पनं वरमित्यभिप्रायः । ताटङ्कः[17] कर्णभूषणं तर्केण ताटङ्किता संजातताटङ्का तर्कालंकृतेत्यर्थः । शेमुषी प्रज्ञा येषां तेषां भावस्तत्त्वं तार्किकत्वमित्यर्थः । ताण्डवयितुं ताण्डववत् कर्त्तुं नर्त्तयितुं प्रकटयितुमिति यावत् । ताण्डवशब्दात् मत्वन्तात् । "तत्करोति" इति णिचि तुमुन्प्रत्ययः ।

---

१ C., G. and M. insert समुदायश्च समुदायिभ्यो नान्यः after °रिच्यते. २ °भिलापव्यापा° C., G., M. ३ °मुज्जृम्भन्ते G. ४ D. omits भवन्तः. ५ D. drops इति. ६ K. drops डित्थादिवत्. ७ K. drops ननु. ८ दोषस्त° D. ९ °जातयो मताः K. १० °ज्ञानकरणक° K. ११ °व्यञ्जन° D. १२ संभवेऽपीति D. १३ अभिधयेति K. १४ °प्रतिभाया दुर° D. १५ व्यापारकल्पनागौरवात्° D. १६ °कल्पनतो K. १७ ताटङ्कं K.

किं निमित्तमिति चेदुच्यते तत् किमत्रापि[1] न ब्रूमः। गुणेषु तावन्न ध्वनेरन्तर्भावो रसधर्मत्वात्तेषाम्। न हि धर्मे[2] धर्मिणोऽन्तर्भावः। नाप्यलंकारेषु। वाच्यमात्रविश्रान्तेषु श्लेषादिषु[3] व्यभिचारात्। ननु यत्रालंकारेषु न ध्वनेः प्रतीतिस्तत्र मा भूदन्तर्भावः। यत्र तु[4]

पाविष्ठवद्भावात् "विण्मतोर्लुक्" इति मतुपो लुक्। तत्रेति। तत्रोद्योगे किं निमित्तं को वेत्यन्वयः। मूढचेष्टितानामचिन्त्यहेतु[5]कत्वादिति भावः। इति चेदुच्यते इत्युच्यते चेदि[6]त्यन्वयः। अथ पृथग्भाववादी साहंकारं प्रतिजानीते। तत्[7] किमिति। अत्रापि वक्तुं शक्यत[8] एवेति भावः। तत्र रसवस्त्वलंकारात्मनो त्रिविधस्यापि ध्वनेर्गुणान्तर्भावं तावन्निरस्यति[9]। गुणेष्विति[10]। गुणान्तर्भावे हेतुमाह। रसेति। ततः किमत आह। न हीति। आत्मनि शौर्यादय इव काव्यात्मनि[11] रसे माधुर्यादयो गुणाः समवायवृत्त्या वर्त्तन्ते इति गुणोन्मेषे वक्ष्यति। अतो रसधर्मेषु गुणेषु धर्मिणो रसध्वनेर्नान्तर्भावः संभवति। संभवे चात्मनोऽपि शौर्यादिष्वन्तर्भावप्रसङ्ग इत्यर्थः। एवं गुणानां रसधर्मत्वादेव न तेषु वस्त्वलंकारध्वन्योरप्यन्तर्भावः। अन्तर्भावे वा घटस्य पटधर्मेष्वन्तर्भाव इत्यनुसंधेयम्। अथालंकारेष्वन्तर्भावं वारयति। नाप्यलंकारेष्विति। अन्तर्भाव इत्यनुवर्त्तते। ननु समासोक्त्यादौ वस्तुध्वनेर्दीपकरूपकादावलंकारध्वने रसवदादौ रसध्वनेश्चान्तर्भावात् त्रिविधोऽप्यलंकारान्तर्भूत एवेति कथमनन्तर्भाव इत्याशङ्क्य श्लेषादिषु तावद्वाच्यमात्रविश्रान्तत्वेन ध्वनिगन्धस्यैवाभावान्नान्तर्भाववार्त्तापीत्याह। वाच्यमात्रेति। [12]व्यभिचारोऽव्याप्तिरित्यर्थः। आदिग्रहणाच्चित्रादिसंग्रहः[13]। श्लेषेऽपि श्लिष्टयोरौपम्यं गम्यते यद्यपि तथापि तस्याद्यभेद[14]द्वयस्य वैवक्षिक[15]त्वेनासत्त्वात्तृतीयभेदस्यैव[16]तन्मतेऽनङ्गीकारादङ्गीकुर्वतां च प्रतिभामात्रेण वाच्य[17]तयैव स्थितत्वाद्भावोक्तिः। ननु यत्र नास्ति तत्र

१ किमित्यामि° M. २ धर्मधार्मिणो° D. ३ T. drops श्लेषादिषु. ४ D. inserts संभवति after तु. ५ °हेतुत्वा° K. ६ °दित्यर्थः D. ७ तर्हि किं° K. ८ शक्त इति भावः D. ९ K. drops तावत्. १० गुणेष्वपीति K. ११ रसादिध्वने° K. १२ व्यभिचाराद्भासादि° D. १३ °ग्रह इत्यर्थः K. १४ °द्वये D. १५ °कत्वेन सत्यत्वं मत्वा तृती° K. १६ °भेदस्यैव तन्म° K. १७ वाच्यतायाः एव K.

समासोक्त्यादिषु स्फुटैव प्रतीतिः प्रतीयमानस्य[1] तत्र तदन्तर्भावो न भङ्गुर इति यत् पुनरलंकारकोटिनिविष्टत्वं वस्तुध्वनेरुद्भावयन्तु भामहादयस्तदपि विचारविधुरम् । व्यङ्ग्यस्य प्राधान्ये ध्वनि-[2]रुपसर्जनत्वे पुनः [3]प्रसिद्धाः समासोक्त्यादयोऽलंकारास्ततस्तेषु [4]कथङ्कारमन्तर्भावोऽस्य भवतु । [5]यदेभिरेव रूपकदी[6]पकतुल्ययोगितादि[7]ष्वलंकारेषु पुनरुपमालंकारः प्रतीयमानो वाच्यस्योपस्कुरुत इत्यलंकारध्वनेरप्यलंकारत्वं शङ्कितं तदपि [8]न विचारसहिष्णु । तत्रापि गुणीभूतव्यङ्ग्यत[9]यैवोपमायाः स्थितत्वात् । रसवत्प्रेय-

मा भूयत्र त्व[10]ंस्ति वस्तुव्यङ्ग्यं समासोक्त्यादौ तत्रान्तर्भाव इति भामहाद्युक्तमुद्भावयति । नन्वित्यादिना भामहादय इत्यन्तेन । न भङ्गुर इति यत् पुनरुद्भावयन्नित्येकवाक्यतयान्वयः । सत्यमप्राधान्यदशायां तत्र व्यङ्ग्यस्य वाच्योप[11]स्कारकत्वेनालंकारत्वमुक्तं प्राधान्यदशायां तु न्यग्भावितवाच्यस्य [12]वाच्यक[13]क्ष्यातिलङ्घिनस्तस्य ध्वनित्वमास्थितस्य स्वयमलंकार्यस्य काव्यात्मनः कुतोऽलंकारत्वमिति परिहरति । तदपीति । कुत इत्यत आह । व्यङ्ग्यस्येति । ध्वनेः [14]सर्वतो नालंकारान्तर्भावोऽन्तर्भवतश्च न ध्वनित्वमप्राधान्यादि[15]त्यवधेयमिति भावः । मा स्तु वस्तुध्वनेरन्तर्भावोऽलंकारध्वनिस्त्वलंकार एवेति तैरेवोक्तं त[16]दपि दूषयितुमुद्घाटयति । [17]यदेभिरेवेति । भामहादिभिरेवेत्यर्थः । अन्तर्भावे हेतुमाह । वाच्यस्योपस्कुरुत इति । इति शब्दो हे[18]त्वर्थे । वाच्यालंकारस्योपस्कारकत्वादित्यर्थः । "कृञः प्रतियत्ने" इति कर्मणि शेषे षष्ठी । दूषयति । तदपि नेति । कुत इत्याशङ्क्य तत्रापि पूर्वोक्तामेव युक्तिमवतारयति । तत्रापीति । त[19]त्रापि रूपका-

१ G. inserts तस्य after प्रतीयमानस्य. २ पुनरुपस° M. ३ समासोक्त्यादयः प्रसिद्धा अलं° G. ४ °स्तेषु तस्य कथंकारमन्तर्भावो भवतु T., कथमलंकारेष्वस्यान्तर्भावो भवतु G., कथमलंकारस्यान्तर्भावो भवतु C., M. ५ यदभिधेयरूपक° T. ६ °दीपकापह्नुतितुल्य° C., G., M. ७ T., C., G., and M. drop अलंकारेषु. ८ तदपि विचारासहिष्णु T. ९ °तयोपमा° T., C., G. १० °त्वत्रास्ति D. ११ °पस्कार्यत्वेना° D. १२ वाचक° D. १३ °कक्षा° D. १४ K. drops स्वतः. १५ °त्वाविरोध इति D. १६ °क्तमपि K. १७ यदेभिरिति K. १८ हेत्वर्थः D. १९ D. drops आपि.

ऊर्जस्विसमाहिताभिधानेष्वलंकारेष्वपि रसभावरसाभासभावाभासभावप्रशमानामङ्गत्वमेवं । किं चैवमन्तर्भावाभिधानं न संगच्छते । रसादीनामात्मत्वे प्रतिपन्नानामलंकारत्वशङ्काया अपि दूरनिरस्तत्वात् । किं च ध्वनिर्गुणालंकारेभ्यो न व्यतिरिच्यते चारुत्वहेतुत्वादिति यद्भवद्भिरभ्यधायि तदपि दुरभिधानम् । ध्वनेर्ध्वन्यात्मतया चारुत्वहेतुत्वादिति हेतोः सिद्धिपद्धत्यनध्यासः । एवं त्रिविधस्यापि ध्वनेरलंकारत्वं तावत् प्रत्यादिष्टम् ॥

---

शावप्यप्राधान्यदशायामेवालंकारत्वं प्राधान्यदशायां त्वलंकार्यत्वमेवेति नान्तर्भाव इत्यर्थः । ननु रसवदाद्यलंकारेषु रसादिध्वनेरन्तर्भावः सिद्ध इत्याशङ्क्याह । रसवदिति । रसो गुणीभूतो रसवानलंकारः । भावस्तु गुणीभूतः प्रेयान् । एवं रसाभासो भावाभास ऊर्जस्वी । भावप्रशमः समाहित इति । अङ्गत्वमुपसर्जनत्वम् । ततः किमित्यत आह । रसादीनामिति । अत्रापि रसादीनामङ्गत्वादेवालंकारत्वं प्राधान्यदशायां तु तेषामपि ध्वनित्वादलंकार्यत्वमेव । तदुक्तमलंकारसर्वस्वसंजीविन्याम् । 'रसादेरलंकारत्वं सनातनं न भवति प्राधान्यदशायामलंकार्यत्वात्' इति । पूर्ववाद्युपन्यस्तमनुमानं चानुद्यासिद्धया दूषयति । किं चेत्यादिना । चारुताहेतोरसिद्धत्वे हेतुमाह । ध्वनेर्ध्वन्यात्मतयेति । ध्वनित्वादेवेत्यर्थः । अयमाशयः । ध्वनिरात्मा काव्यस्येत्युक्तमात्मा चालंकार्य एवेत्यविवादम् । तथा च ध्वनित्वस्यालंकार्यत्वाविनाभावात्तस्य चालंकारत्वविरोधित्वात् तन्निवृत्तौ तद्व्याप्यस्य चारुताहेतुत्वस्यापि निवृत्तिरिति व्यापकविरुद्धोपलब्धेरसिद्धो हेतुरित्यर्थः । अन्तर्भावाभावमुपसंहरति । एवमिति ।

---

१ °धानादिष्वलं C., G., M. २ °भावाभासभावशान्तिभावोदयभावसंधिभावशवलताना° C.; G., and M. have the same reading, but G. drops भावाभास and M. भावशान्ति. ३ °ङ्गत्वमेवं न संगच्छते D. ४ न विचारचतुरस्रम् D. ५ °ध्वन्यात्मकतया T., G., M. ६ °ध्यासात् D. ७ भावाभासो रसाभासो वा K. ८ °हितं प्रत्यङ्गत्व° D. ९ किमत आह K. १० एवमिति । युक्तिमाह । रसादीनामङ्गत्वादेव D. ११ °विरोधात् K. १२ हेतुत्वस्यापीति D. १३ अनन्तर्भावमुप° K.

यत् पुनरनुमानतो नातिरिच्यते ध्वनिरित्याचष्ट **महिमभट्ट**स्तदपि पलालायमानम् । अनुमानस्य चोक्तं[1] व्याप्तिः । अनया[2] विनानुमानमपि[3] कथंकारमात्मानमासादयितुमीशिष्यते[4] । अथ क एवमाह नास्ति व्याप्तिरिति । तर्हि तामेव व्याप्तिमनुमानवादिनो वदनादवतरन्तीमाकर्णयितुमुत्कण्ठाभारमन्थरा[5] नः श्रवणसीमानः । साध्यसामान्येन साधनसामान्यस्याविनाभावो हि[6] व्याप्तिः । प्रकृते ध्वनिः साध्यसामान्यं शब्दार्थौ[7] च साधनसामान्यं[8] तत्र च ध्वनेरनुपलब्धिर्वा[9] शब्दार्थयोस्तादात्म्यं वा तदुत्पत्तिर्वा साधिका[10] ।

---

वाच्यवाचकयोः प्रतीयमानं प्रतिलिङ्गत्वात् व्यञ्जनस्यानुमानेऽन्तर्भाव[11] इति **व्यक्तिविवेककारः** । तन्मतं दूषयितुमनुभाषते । **यत् पुनरि**ति । दूषयति । **तदपी**ति । पलालायमानं पलालप्रायं निःसारमित्यर्थः । निष्फलो धान्यतृणकाण्डः पलालम्[12] । 'पलालोऽस्त्री स निष्फलः' इत्यमरः । कुत इत्याशङ्क्य व्याप्त्यभावादित्यभिप्रेत्याह । **अनुमानस्ये**ति । परोऽप्यभिमन्यमान आक्षिपति । **अथ क** इति । अस्ति चेदुच्यतां शुश्रूषामहे वयमित्याह सिद्धान्ती[13] । **तर्ही**ति । सिद्धान्त्येव व्याप्तिलक्षणपूर्वकं पराभिमते व्याप्यव्यापके विविनक्ति । **साध्यसामान्येने**ति । एवं परा[14]भिमतव्याप्यव्यापके विविच्य तयोर्व्याप्तिप्रयोजकाभावात् व्याप्त्यभावे[15]मभिव्यङ्क्तुं शास्त्र[16]सिद्धानि प्रयोजकानि तावद्विकल्पयति । **तत्र चे**ति । अनुपलब्धिस्तादात्म्यं तदुत्पत्तिश्चेति त्रीणीह प्रयोजकानि । तत्र यत्राभावयोर्गम्यगमकभावो यथा ज्ञानाभावज्ञेयाभावयोस्तत्रानुपलब्धिः प्रयोजिका । यत्र धर्मिणोर्[17]यथा शिंशपात्ववृक्षत्वयोस्तत्र तादात्म्यम् । यत्र कार्यकारणयोर्यथा धूमाग्न्योस्तत्र तदुत्पत्तिः । तत्रानुप-

---

१ हि जीवितं व्या॰ T., C., G., M. २ अनया च विना॰ C., G., M., ३ ॰नुमानमात्मानमपि T., C., G. ४ कथंकारमासा॰ T., C., G. ५ ॰भरणमन्थरश्रवणसीमानः C., G., M. ६ C. omits हि. ७ शब्दार्थेन T. ८ ॰सामान्यतेत्यत्र T. ९ ॰लब्धिर्वा तयोश्च शब्दा॰ C., G., M. १० साध्यं गमयेत् T., C., G., M. ११ ॰मानेऽन्तर्भा॰ K. १२ K. omits पलालम्. १३ K. omits सिद्धान्ती. १४ K. drops पराभिमत. १५ व्याप्त्यभावं प्रष्टुं शा॰ D. १६ शास्त्रान्तरसि॰ D. १७ धर्मधर्मिणोः D.

न तावदनुपलब्धिः साध्यं बो[1]धयतीति शक्यतेऽभिधातुमभावरूप साध्यैकसाधनाय प्रगल्भ[2]मानत्वात्तस्याः । यथात्र न कुम्भः । उपलम्भ[3]योग्यस्य तस्यानुपलब्धेरिति । प्रकृते त्वन्यतरासिद्धो हेतुः । न हि वयं ध्वन्युपलम्भेन ध्वन्यभावं साधयामः । ध्वन्युपलम्भेन ध्वनेरेवास्माभिः साध्यमानत्वात् । नापि शब्दार्थयोरनुपलम्भेन । न हि कुम्भो[4]नुपलम्भः स्तम्भाभावं साधयितुमीष्टे । ना[5]पि तादात्म्यम् । तादात्म्यं ह्य[6]यं वृक्षः शिंशपात्वात् या या शिंशपा स स वृक्षः यथा संप्रतिपन्नः शिंशपा चेयं तस्माद्वृक्ष इतिवद्भविष्यति ।

---

ल[7]ब्धेश्च साध्यानुपलब्धिः साधनानुपलब्धिश्चेति द्वैविध्ये चातुर्वि[8]ध्यमित्यभिप्रेत्याह । **ध्वनेरि**ति । तदेवं चतुर्धा विकल्प्याद्यं दूषयति । **न तावदि**ति । अनुपलब्धिः साध्यानुपलब्धिः साध्यं च ध्वनिः । तस्यास्तदबोधकत्वे हेतुमाह । **अभावरूपे**ति । साध्यानुपलब्धिः साध्याभावं बोधयति न तु साध्यं योग्यानुपलब्धेरभावैकविषयत्वादित्यर्थः । अत्र दृष्टान्तमाह । **यथात्रे**ति । यद्यप्यनुपलब्धेः प्रमाणान्तरत्वं प्रमाणसहकारित्वं वेति द्वयी गतिस्तथापि विप्रतिपन्नं प्रति लि[9]ङ्गतया बोधकत्वे सर्वसंप्रतिपत्तेरविरोधः । तर्हि वयमप्यभावमेव ध्वनेः साधयाम इति पूर्वापरविस्मारिणः शङ्कां परिहरति । **प्रकृते त्वि**ति । प्रकृते तथा चेदन्यतरासिद्धो हेतुरित्यर्थः । कुत इत्याशङ्क्यास्माभिरनङ्गीकारादित्याह । **न ही**ति । अनुपलब्धिविरुद्धायामुपलब्धौ जाग्रत्यां कुतोऽनुपलब्धेर्जीवितमित्यसिद्धो हेतुरित्यर्थः । अथ साधनानुपलब्धिपक्षं प्रतिक्षिपति । **नापी**ति । साध्यसिद्धिरिति शेषः । तत्रापि किं ध्वनिः साध्यं तदभावो वा । नाद्यः । अनुपलब्धेरभावमात्रगोचरत्वात् धूमानुपलब्धेर्धूमध्वजासिद्धिप्रसङ्गाच्चेति । न द्वितीय इत्याह । **न हि कुम्भे**ति । अथ तादात्म्यपक्षं प्रत्याचष्टे । **नापि तादात्म्यमि**ति । कुत इत्याशङ्क्य प्रसिद्धं तावत्तादात्म्यानुमानमुदाहरति । **तादात्म्यं ही**ति । इति भविष्यतीत्यन्वयः । यदि शब्दस्यार्थस्य वा ध्वनिना तादात्म्यं

---

१ साध्यमवबोध° T., C., G., M. २ प्रगल्भ्यमान° G., M. ३ °योग्यस्तस्या° T. ४ कुम्भाभावः T., C., G., M. ५ नापि तादात्म्यम् । न हि वृक्षोऽयं शिंशपा° T. ६ वृक्षोऽयं C., G., M. ७ °नुपलब्धिः सा° K. ८ °विध्यमभि° K. ९ भङ्गितया D.

साध्यसाधनयोस्तादात्म्य[1]व्यवस्थितयोरेव गम्यगमकभावदर्शनात्। यद्यपि यो यो वृक्षः स स शिंशपेति नास्ति व्याप्ति[2]श्चन्दनचम्पकादौ व्यभिचारात् तथापि वृक्षोऽयं शिंशपात्वात् या या शिंशपा स स वृक्ष इत्यं[3]स्त्येव व्याप्तिः। यद्यपि वृक्षाः शिं[4]शपात्वं व्यभिचरन्तो व्यलोक्यन्त तथापि शिंशपा वृक्ष[5]त्वं व्यभिचरन्ती न व्यलोक्यतेति वृक्षं गमयति। तथा[6] प्रकृते न[7] घटते। न हि शब्दोऽर्थो वा गमकत्वेन योऽभ्युपगम्यते तस्य प्रतीयमानेन साध्येन सह[8] गम्यगमकभाव[9]स्तादात्म्येन व्यवस्थितः। प्रत्युत[10] शब्दार्थन्यक्कारेणैव तस्य प्रवर्त्तमानत्वात्। तर्हि च[11]रमा तदुत्पत्ति-

---

भविष्यत्येवं भविष्यतीत्यर्थः। कोऽयं नियम इत्याशङ्क्य तथा दर्शनादित्याह। **साध्यसाधनयोरि**ति। ननु तत्रापि वृक्षत्वस्य शिंशपात्वेन व्याप्तिर्नास्तीत्याशङ्क्य मा भूत् शिंशपात्वस्य तु[12] वृक्षत्वेनास्तीत्याह। **यद्यपि यो य** इति। उभयत्र [13]दर्शनादर्शने एव प्रमाणमित्याह। **यद्यपि वृक्षा** इति। प्रकृते तु नैवमित्याह। **तथा प्रकृत** इति। अघटमानतामेव प्रकटयति। **न ही**ति। यथा शिंशपात्वं वृक्षतादात्म्येन वृक्षत्वं गमयति न तथा शब्दोऽर्थो वा साधनाभिमतः[15] साध्याभिमतं प्रतीयमानं तत्तादात्म्येन गमयति व्यङ्ग्यव्यञ्जकयोस्तादात्म्येऽतिप्रसङ्गात्। अतादात्म्ये लिङ्गमाह। **प्रत्युते**ति। तादात्म्यवैपरीत्येनेत्यर्थः। वैपरीत्यमेवाह। **शब्दार्थन्यक्कारेणे**ति। स्वप्रत्याय[16]नमात्रोपक्षीणतया शब्दार्थावुपसर्जनीकृत्य तस्य प्रतीयमानस्य प्राधान्येन स्फुरणादित्यर्थः। एवं पक्षान्तरप्रतिक्षेपेण[17] तदुत्पत्तिपक्षं परिशिनष्टि। **तर्ही**ति। तां च पराचष्टे। **सा चे**ति। अप्रतिष्ठाकारणमाह।

---

१ °स्तादात्म्यम्। व्यव° T. २ नास्ति कालाञ्जनादौ व्यभि° D. ३ इत्येवं व्या° T., इत्येव व्या° C., इत्येव च व्या° G. ४ शिंशपां व्य° D. ५ वृक्षं व्य° D. ६ प्रकृते तु D., तथापि C. ७ नैवं D. ८ T. drops सह. ९ C. inserts तथापि before तादात्म्येन. १० T. inserts तस्य after प्रत्युत. ११ D. drops चरमा. १२ D. drops तु. १३ व्यभिचारदर्शनादर्शनमेव D. १४ प्रमाणम्। इह तथा प्रकृत इति K. १५ साधनाभिमतं D. १६ प्रत्यायक° K. १७ °प्रतिक्षेपादुत्प° K.

रेव परिशिष्यते । सोऽपि[1] विचार्यमाणा न प्रतिष्ठामधिष्ठास्यति । यतस्तदुत्पत्तेरिदमुदाहरणम् । वह्निमानयं प्रदेशो धूमवत्त्वादिति । धूमो हि वह्नेरात्मज इति कृत्वात्मनो[2] जनकमेनमनुमापयितुमीष्टे । न च प्रस्तुते शब्दार्थयोरनुमानवादिना लिङ्गत्वेनाङ्गीकृतयोः प्रतीयमानाज्जायमानत्वमनुमतम्[3][4] । आत्मजन्मनः प्राचि[5] काले स्वसामग्रीसंनिधानादेव तयोराविर्भावदर्शनात् ॥

अथ अभिहितानामेव[6] पदार्थानामन्वय इति मन्वानान्[7]

---

यत इति । आत्मजत्वं कार्यत्वम् । ननु तथास्तु प्रकृतेऽपीत्याशङ्क्याह । न च प्रस्तुत इति । आत्मजन्मनः प्राचि काले स्वोत्पत्तेः प्रागित्यर्थः । न हि ततः प्रागुत्पन्नस्य तत्कार्यत्वं घटत इति भावः । तदेवं शब्दार्थयोर्ध्वनेश्च व्याप्तिग्रयोजकयोस्तादात्म्यतदुत्पत्त्योरसंभवेन[8] व्याप्त्यभावान्नानुमानपक्षः[9] प्रतिष्ठां लभत इति स्थितम् । ननु दर्शनान्तरेऽन्तरेणापि तादात्म्यतदुत्पत्ती केवलमन्वयव्यतिरेकाभ्यामेव व्याप्त्यवधारणं कृत्तिकोदयरोहिण्यासत्तिवदिति चेन्न । यत्र शब्दार्थौ तत्र ध्वनिः । यत्र ध्वनिर्[10] न तत्र शब्दार्थाविति व्याप्त्यभावात् । अव्यङ्ग्ये व्यभिचारादिति । तस्मात् सिद्धं न शब्दार्थयोः प्रतीयमानं प्रति लिङ्गत्वमिति ॥

नन्वभिधेयातिरिक्तं प्रतीयमानमेव नास्ति यदप्यस्ति[11] तदप्यभिधेयमेवेति[12] मीमांसकाः । तत्रापि केचिदभिहितान्वयवादिनः केचिदन्विताभिधानवादिनस्तत्र तावदाद्यान्[13] समारभ्य इत्याह । अथेति । नैयायिकान्[14] न्यायवेदिनो मीमांसकानित्यर्थः । तत्रापि[15] भाट्टान् प्राभाकरान् वेत्याकाङ्क्षायां तावद्भाट्टानाह[16] । अभिहितान्वयवादिन इति । ननु तेषां कथं तथात्वमत आह । अभिहितानामेवेति[17] ।

---

१ सा T., सा च Com. २ कृत्वा साधनकमेनमनुमापयितुमीष्टे C., कृत्वात्मनो जनकमेव वह्निं साधयति D. ३ °मानाज्ज्ञानत्व° D. ४ °नुमित° D. ५ प्राक्काले M. ६ °हितानामन्वय D. ७ मन्यमानान् G., M. ८ °भवेनाव्याप्तेर्नानुमान° D. ९ °पक्षे D. १० न ध्वनिः K. ११ यदस्ति D. १२ तदप्य° D. १३ तत्रादावाद्यान् वदाम K. १४ नैय्यायिकानत्र न्या° D. १५ अत्र भाट्टान् K. १६ °क्षायां भाट्टानित्याह K. १७ अभिहितानामिति D.

प्रतीयमानं प्रति विवदमानानभिहितान्वयवादिनो नैय्यायिकान्[1] वदामः । नन्[2]वानन्त्याद्व्यभिचाराच्च[3] विशेषाश्लेषाय न प्रभ[4]वति संकेत इति सामान्यरूपाः पदार्थाः संकेतविषयाः । तत्र[5] संकेतः पदेष्वेव । संकेतितानि[6] च पदानि पदार्थानभिदधति ।

---

तेषां कुत्र विवादस्तत्राह । **प्रतीयमानं प्रतीति** । ध्वनिं प्रतीत्यर्थः । नन्वलं न्यायविदामग्रे वृथा वल्गनैरित्याशङ्क्य किं तैरर्थान्तरस्य प्रतीतिरेवापह्नूयते अभिधेयत्वं वा तस्याप्यास्थीयते इति[7] द्विधा विकल्प्य नाद्यः । सकलसहृदयहृदयसंवादिनस्तस्य दुरपह्नवत्वात् । द्वितीये तु किं वाक्याभिधेयत्वं पदाभिधेयत्वं वा । नाद्यः । लक्षणावादिनां तेषामपसिद्धान्तापातात् । द्वितीये तु स्वरूपनिरूपणपूर्वक[8]माह । **नन्वित्यादिना[9] का नाम वः प्रत्याशेत्यन्तेन** । तत्र पदानां संकेतविषयं तावद्विविनक्ति । **सामान्यरूपा इति** । आकृत्यधिकरणन्यायादित्यर्थः । ननु व्यक्तिष्वेव संकेतः किं न स्यात् तत्राह । **विशेषेति** । विशेषा व्यक्तयः । आश्लेषः क्रोडीकारः । न प्रभवति न शक्नोति । संकेतः संकेतग्रहः । हेत्वर्थे[10] इति शब्दः । अशक्तौ हेतुद्वयमाह । **आनन्त्याद्व्यभिचाराच्चेति** । व्यक्तिसंकेतपक्षे तासां वैलक्षण्यात् प्रतिपिण्डं संकेतग्रह[11]प्रसंगः स चाशक्यः त्रैकाल्यवर्त्तिनां[12] तेषामानन्त्यात् । वैलक्षण्यादेव गोपिण्डान्तरवद[13]गोपिण्डेष्वपि गोशब्दप्रवृत्तिप्रसंगश्च । तस्मादानन्त्यव्यभिचाराभ्यां व्यक्तिसंकेतानुपपत्तेः सामान्ये[14]ष्वेव संकेतः व्यक्तयस्त्वाक्षेपलभ्या इत्यर्थः । कुत्रैषां संकेत इत्याकाङ्क्षायां वर्णानामनर्थकत्वात् वाक्यवाक्यार्थयोरनियतत्वाच्च परिशेषात् पदेष्वेव संकेत इत्याह । **तत्रेति**[15] । संकेतफलमाह । **संकेतितानि चेति** । अस्ययामर्थ इति संकेतितानि[16] गृहीत-

---

१ नैय्यायिकादीन् D., G., M. २ D. drops ननु. ३ व्यभिचाराद्वा M. ४ प्रवहति C. ५ ते संकेत्यन्ते पदेषु T.; ते च संकेत्यन्ते पदेषु C., G.; ते च संकेत्यन्ते पदेषु च M. ६ संकेतितानि तानि च T., C., M. ७ K. drops इति द्विधा विकल्प्य. ८ निरूपणापूर्वं° D. ९ नेत्यादिना D. १० इति शब्दो हेत्वर्थे D. ११ संकेतप्रत्ययः D. १२ कालवर्त्तिनां K. १३ °वदेवागोपि° K. १४ सामान्ये च संकेतः D. १५ ते चेति K. १६ D. omits संकेतितानि.

अभिहितानां च पदार्थानां तेषामाकाङ्क्षा[1]संनिधि[2]योग्यतावशादन्योन्यमन्वये जातेऽनुभूतपूर्वः कोऽप्य[3]भूतपूर्वः पदानभिधेयो विशिष्टरूपो वाक्यार्थः परिस्फुरति[4]। विशिष्टे च वाक्यार्थे नास्ति

---

संगतिकानीत्यर्थः। ततः किमत आह। **अभिहितानां चेति**। अर्थैकत्वादिति न्यायादिति भावः। तमन्तरेणापरिपूरणमाकाङ्क्षा। संनिधिरव्यवधानेनोच्चारणम्। योग्यता सामर्थ्यं प्रमाणबाधविरह इति यावत्। अन्वयः संसर्गः। अननुभूतपूर्वः प्रमाणान्तरागोचरः। अभूतपूर्वः प्रागसिद्धः। कोऽपीति पदार्थसंसर्गरूप इत्यर्थः। सोऽपि पदार्थ एव इत्याशङ्क्याह[5]। **पदानभिधेय** इति। तत्र हेतुमाह। **विशिष्टरूप** इति। अनेकपदार्थानुरक्तस्वरूपः स्फुरतीत्यर्थः। युक्तमाहुर्भट्टपादाः[6]।

‘पदार्थैरनुरक्तोऽसौ वाक्यार्थः संप्रतीयते’ इति।

एतदेवास्य वैशिष्ट्यमविशिष्टस्तु पदार्थ इति भावः। विशिष्टस्यापदार्थत्वे हेतुमाह। **विशिष्टे चेति**। इति शब्दो हेत्वर्थे। असंकेतितार्थबोधकत्वे वा सर्वं पदं सर्वस्यार्थस्य बोधकं स्यात्। वाक्यार्थस्तु न संकेतापेक्ष इति भावः। तर्हि वाक्यार्थे किं कारणमिति चेत् पदार्था एवेति ब्रूमः। तथा हि। ज्योतिष्टोमादिवाक्यस्थैः पदैः स्वाभिधेयसामान्यापर्यवसानादाकाङ्क्षासंनिधियोग्यताबललब्धैकवाक्यतानां व्यवस्थापित[7]कारणत्वादिशक्तियुक्ता नियतव्यक्तीराक्षिपद्भिः स्वार्थाभिधानद्वारा तत्संबन्धितयेतरपदार्था लक्ष्यन्ते तत्र तत्र दीर्घदीर्घतमवाक्येषु पूर्वपूर्वपदविस्मरणेऽपि वाक्यार्थसंवेदनदर्शनादनुसंधीयमानैः पदार्थैरेव वाक्यन्यक्कारेण स्वर्गयागादिसाध्यसाधनसंबन्धरूपो वाक्यार्थोऽनेकपदार्थानुरक्तः प्रतिपाद्यत इति तद्भूताधिकरणसिद्धान्तसिद्धोऽर्थः। यथाहुः। ‘तस्मात् पदैरभिहितैः पदार्थैर्लक्षणया वाक्यार्थः प्रतिपाद्यते’ इति। तदेतत् **पदार्थानामन्वये जाते वाक्यार्थः परिस्फुरती**[8]त्यनेन सूचितम्। अस्तु

---

१ तेषां पदार्थानामाका° D. २ °योग्यतासंनिधि° C., M., G. ३ कोऽप्यपूर्वः T., G.; M. omits कोऽप्यभूतपूर्वः. ४ परिशिष्यत इति विशि° D. ५ नेत्याह K. ६ यथाहु° D. ७ °स्वस्थापित° K. ८ स्फुरती° instead of परिस्फुरति° K.

पदानां संकेत इति । यत्र स्वस्वपदार्थमात्राभिधानाय जागरूक-व्यापाराण्यपि पदानि स्वैः स्वैः पदार्थैरारब्धमपि न वाक्यार्थ-मभिधातुमीशते तत्रार्थान्तरभूतो ध्वनिरभिधामवगाहिष्यत इति का नाम वः प्रत्याशा ॥

आरोह जयाय कुञ्जरमित्यादि वाक्यं प्रयोक्तारं[2] प्रत्यक्षी-करोति प्रथमम् । चिरममनेनास्माद्वाक्यादयमर्थोऽधिगत इति तदभिमुखानुसरणरूपया चेष्टयानुमिनोति । इयं प्रवृत्तिरर्था-वधारणपूर्विका प्रवृत्तित्वात् संप्रतिपन्नप्रवृत्तिवदिति । यद्य-

---

प्रस्तुते किमायातं तत्राह । यत्रेति । संनिकृष्टवाक्यार्थाभिधानासमर्थानां पदानां विप्रकृष्टध्वन्यभिधानं कैमुत्यन्यायानिरस्तमित्यर्थः । वाक्यार्थस्य संनिकृष्टत्वे हेतु-माह । स्वैः स्वैः पदार्थैरारब्ध इति । तत्संसर्गरूपत्वात् तदारब्धत्वव्यप-देशः । ध्वनेर्विप्रकृष्टत्वे हेतुमाह । अर्थान्तरभूत इति ॥

तदेवमभिहितान्वयवादिनः समाधायान्वितामिधानवादिनोऽपि समाधत्ते । आरोह जयाय[10] कुञ्जरमित्यादिना स्वीकारवैयर्थ्यापत्तेरित्यन्तेन संदर्भेण[11] । प्रथमं तावत् तन्मतेन व्युत्पत्तिप्रकारमाह । आरोहेति । प्रयोक्तारम् आरोहेत्येतद्वाक्य-प्रयोक्तारमुत्तमवृद्धमित्यर्थः । प्रत्यक्षीकरोति यथायोगं श्रोत्रेण चक्षुषा चेत्यर्थः । बाल इत्यागामी सर्वत्र कर्त्ता । बालोऽत्र[12] व्युत्पित्सुः । ततः किमत आह । चिरम-[13]मिति । प्रत्यक्षीकरणानन्तरमित्यर्थः । अनेन मध्यमवृद्धेन । अस्माद्वाक्यादारोहेति वाक्यात् । अयमर्थः कुञ्जरारोहणरूपः । इत्यनुमिनोतीत्यन्वयः । अनुमापकं[14] लिङ्ग-माह । तदभिमुखेति । कुञ्जराभिमुखेन[15]गमनरूपयेत्यर्थः । अत्र प्रयोगं दर्शयति । इयं प्रवृत्तिरिति । कुञ्जरारोहणचेष्टेत्यर्थः । अर्थावधारणेति । एतद्वाक्यार्थ-ज्ञानपूर्विका । प्रवृत्तित्वात् एतद्वाक्यश्रवणानन्तरप्रवृत्तित्वात् । या यद्वाक्यश्रवणा-

---

१ °रभिधेयताम° T., G. २ प्रयोक्तारमर्थं च M.; प्रयोक्तारमर्थं G. ३ परमनेना° D. ४ °खाभिसरण° C. ५ °वाक्यार्थासम° K. ६ वाक्यार्थसंनि° D. ७ °तुमाचष्टे D. ८ पदार्थै-रिति D. ९ °प्रकृष्टस्य हेतु° D. १० जयाय इत्यादिना K. ११ संग्रहेण K. १२ K. drops अत्र. १३ परमिति D. १४ अनुमापकौलिङ्ग° K. १५ °खागमनमेवेत्यर्थः K.

मुमर्थमस्माद्वाक्यान्नाज्ञासीत् तर्हि कथं तद्व[1]भिमुखं चेष्टत इत्यर्थापत्त्या पुनरखण्डस्य वाक्यार्थस्य तादृ[2]शमेव वाक्यं वा[3]चकमिति त[4]योर्वाक्यवाक्यार्थयोर्वाच्यवाचकभावल[5]क्षणसंबन्धमवधारयति । ततस्तत्र व्युत्पत्तिमासादयति बालः । अनन्तरमवरोह

न्त[6]रा सा तदर्थज्ञानपूर्विका यथा गवा[7]नयनादिवाक्यश्रवणानन्तरा मदीया प्रवृत्तिरिति सामान्यतो व्याप्तिः । न यदेवं न तदेवं यथा घटादिप्रवृत्तिरिति व्यतिरेकी वा । अन्[8]यथा यथाश्रुतसाध्यहेत्वभ्युपगमे सिद्धसाधनत्वा[9]दिदोषप्रसङ्गादिति । ततः किमत आह । **यद्यमुमर्थमिति** । आरोहेति वाक्यार्थमित्यर्थः । अर्थापत्त्या संबन्धमवधारयतीत्यन्वयः । अर्थापत्त्यान्यथानुपपत्तिरूपयेत्यर्थः । अखण्डस्य निर्विभा[10]गस्यैकस्येत्यर्थः । तादृशमखण्डमेवेत्यर्थः । एतेन त्रिप्रमाणकं संबन्धावधारणमित्युक्तं भवति । यथाहुः श्लो[11]कद्वयम् ।

‘शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या च बुद्ध्या शक्तिं द्वयाश्रिता-
मर्थापत्त्यैव बुध्येत संब[12]न्धं त्रिप्रमाणकम् ॥’

इति । पदवद्वाक्यमपि वा[13]चकमेवेति गुरूणां मतम् । यथाहुस्तद्विदः ।

‘वाक्येनैव हि वाक्यार्थः साक्षादेवाभिधीयते ।
उपलक्षणतश्चास्य संबन्धग्रहसंभवः ॥
वाक्यं गोपदयुक्तं यत् तत् सास्नादि[14]समन्वितम् ।
वाक्यार्थं व[15]दतीत्येवं व्युत्पत्तिः सुकरैव हि ॥’ इ० ।

फलितमाह । **ततस्तत्रेति** । तदेवं प्रवृत्तिवाक्ये व्युत्पत्तिप्रकारमभिधाय निवृ-

१ कथं वाभिमुखं M. २ तादृगेव D. ३ D. inserts पदवत् before वाचकम्. ४ पदपदार्थयोरिव वाक्यार्थयोर्वाच्य° D. ५ लक्षणं T. ६ °नन्तरप्रवृत्तिः D. ७ गवादिवाक्य° K. ८ K. drops अन्यथा. ९ साधनत्वानैकान्तिकत्वादि° K. १० निर्भागस्येत्यर्थः D. ११ D. drops श्लोकद्वयम्. १२ प्रसिद्धं K. १३ K. inserts वाचकमपि after वाक्यमपि. साम्नादिमदन्वितम् D. १५ वदतीत्येव K.

कुञ्जराज्ञातस्ते जय इत्यादिप्रयोगे [1]तस्य तस्य शब्दस्य [2]तं तमर्थमवगच्छतीत्यन्वयव्यतिरेकाभ्यां [3]प्रवृत्तिनिमित्तस्य[4] वाक्यस्यैव प्रयोगयोग्यता यस्मात् तस्मात्तद्वाक्यान्तर्वर्त्तिनामेव पदानां[5]मितरेतरमाकाङ्क्षा[6]संनिधियोग्यतावशादन्वितैः पदार्थैरन्वयं गतानामेव संकेतविष[7]यत्वमिति विशेषणविशेष्यभावापन्नः कृत्युद्देश-

त्तिवाक्येऽप्यतिदिशति । **अनन्तरमिति** । आदिशब्दाद्ग्राममानय गां बधानेत्यादिवाक्यसंग्रहः । अत एव तस्य तस्येति वीप्सा च । शब्दस्येति वाक्यस्येत्यर्थः । आरोहेत्यादिप्रवृत्तिवाक्यवदवरोहेत्यादि निवृत्तिवाक्येऽपि श्रवणानन्तरमेव निवृत्तिरूपमध्यमवृद्धचेष्टायास्तदर्थाव[8]धारणपूर्वकत्वानुमानद्वारा वाच्यवाचकभावं प्रतिपद्यते बाल[9] इत्यर्थः । एवं वाक्यव्युत्पत्तिप्रकारमुक्त्वा पदव्युत्पत्तिप्रकारमाह । **इत्यन्वयव्यतिरेकाभ्यामित्यादि** । पदानां संकेतविषयत्वमित्यन्वयः । अभिहितान्वयपक्षाद्भेदमाह । **अन्वितैरिति** । अन्वये हेतुमाह । **आकाङ्क्षेति** । ननु संकेतकाले मुक्तकानामाकाङ्क्षादयः कुत इत्याशङ्क्याह । **वाक्यान्त[10]र्वर्त्तिनामेवेति** । तत्रापि हेतुमाह । **वाक्यस्यैवेति** । एवकारः केवलपदव्यावृत्त्यर्थः । यस्माद्वाक्यमेव प्रयोगार्हं न[11] केवलं पदं तस्मादित्यर्थः । वाक्य[12]स्यैव प्रयोगयोग्यत्वे हेतुमाह । **[13]प्रवृत्तिनिमित्तस्येति** । तस्यैव तन्निमित्तत्वे प्रमाणमाह । **अन्वयव्यतिरेकाभ्यामिति** । [14]तदेव दर्शयति । **इतीति** । [15]इति पूर्वोदाहृतारोहणादिप्रवृत्तिनिवृत्तिषु वाक्यस्यैवान्वयव्यतिरेकाभ्यां निमित्तत्वदर्शनात् तदन्तर्वर्त्तिनामेव पदानामाकाङ्क्षादिवशादन्विताभिधायिनामेव संकेतविषयत्वमित्यर्थः । अत एव वाक्यार्थोऽपि कार्यान्वितपदार्थसार्थ एवेत्याह । **इतीति** । इति हेतोः । पदार्थसार्थ एव वाक्यार्थ इत्यन्वयः । कथं समप्रधानानां मिथोऽन्वयस्तत्राह ।

१ तस्य शब्दस्य G. २ तमर्थं G. ३ प्रवृत्तिनिवृत्तिनिमित्तस्य G., M., T. ४ °निमित्तस्यैव वाक्यस्य T., G. ५ °पदानामेव M. ६ °योग्यतासंनिधि° M. ७ °विषयत्वमेवमिति D. ८ °वधारणद्वारापूर्वक° K. ९ °प्रवृत्तिप्र° K. १० °वृत्तीना° K. ११ D. inserts तु after न. १२ वाक्यार्थस्यैव K. १३ प्रवृत्तिनिवृत्तिनिमित्तस्येति K. १४ तावेव दर्श° K. १५ K. omits इति.

विशिष्टः पदार्थसार्थ एव वाक्यार्थः । अन्वितानामेव पदार्थानां वि[1]शिष्टत्वमित्यभिदधानैरन्विताभिधानवादिभिरिहाप्यभिधानं विधेयम् । यत्र संकेतनिकेतनीकृ[2]तविशिष्टरू[3]पवाक्यार्थाभिधायिनो वाक्यस्य [4]स्ववाच्यानतिरिक्तासंकेतिताविशे[5]षभूतपदार्था-

---

विशेषणविशेष्यभावापन्न इति । किमत्र विशेषणं किं वा विशेष्यं तत्राह । कृत्युद्देशविशिष्ट इति । कृतिः प्रयत्नः । उद्दिश्यत इत्युद्देशो विषयः । कृतेरुद्देशः कृत्युद्देशः कृतिविषयः [6]कृतिसाध्यं कार्यमिति यावत् । तद्विशिष्टस्तदन्वितस्तदुपरक्त इत्यर्थः । शाब्दश्चायं विशेषण[7]भावः कार्यस्येति न प्राधान्यभङ्गः पुरुषप्रवृत्तिविषयत्वेन तस्यैव वास्तवप्राधान्यादिति । ननु पदार्थाः कार्यान्विता न तु तद्विशिष्टा इत्याशङ्क्याह । अन्वितानामेवेति । तदन्वितत्वमेव तद्विशिष्टत्वमित्यर्थः । अस्तु प्रस्तुते किमायातमत आह । इत्यभिदधानैरिति । नन्वभिहिता एव पदार्था अर्थान्तरं च वाक्यस्यैवाभिधेयं वदाम इत्याशङ्क्य विशिष्टार्थाभिधायिनो वाक्यस्य स्वार्थसंनिकृष्टपदार्थाभिधानेऽप्यसमर्थस्य कुतो विप्रकृष्टार्थान्तराभिधानशङ्कापीति परिहरति । यत्रेत्यादिना वचनीयतामित्यन्तेन । वाक्यार्थस्य वाक्याभिधेयत्वे हेतुमाह । संकेतनिकेतनीकृतेति । संकेतनिकेतनीकृतः संकेतविषयीकृतः संकेतित इति यावत् स चासौ विशिष्टरूपवाक्यार्थश्च तदभिधायिन इत्यर्थः । वाक्यस्य पदार्थाभिधाने प्रसक्तिमाह । स्ववाच्यानतिरिक्तेति । तर्हि पदार्थवाक्यार्थयोर्भेदव्यवहारः कथमत आह । अविशेषभूतेति । अविशिष्टः पदार्थः स एव विशिष्टो वाक्यार्थ इति स्वरूपेणाभिन्नोऽपि विशिष्टाकारेण भिन्न इत्यविरोधः । तर्हि किमिति पदार्थो वाक्येन नाभिधीयते इत्याशङ्क्याह । असंकेतितेति । विशिष्ट एव वाक्यस्य संकेतो नाविशिष्टः । अविशिष्टश्च पदार्थ इति न तस्याभिधायकं वाक्यमित्यर्थः । एतदुक्तं भवति । संकेताभावमात्रेण परमार्थतः स्वाभिन्नपदार्था-

---

१ विशिष्टत्वादित्यभि° D. २ संकेतितविशिष्ट° T. ३ T. omits रूप. ४ स्ववाच्यातिरिक्ता° T., C., G., M. ५ विशेषरूपपदार्था° T., C., G., M. ६ कृतिसिद्धं K. ७ °भावः न कार्यस्ये° K. ८ स्ववाच्यानतिरिक्तस्येति K. ९ किमिति न पदार्थो वाक्येनाभिधीयते D. १० इत्याह K. ११ नोऽविशिष्ट D.

भिधाने[1]ऽपि न सामर्थ्यं, तत्रार्थान्तरभूतः प्रतीयमानः[2] कथमिवावतरिष्यति वचनीयताम्। यदि पुनः सोऽयमिषोरिव दीर्घदीर्घो व्यापार इति मन्वानाः शब्दश्रवणसमनन्तरं यावतोऽर्थस्य[3] प्रतिभानं तावत्यभिधैव[4] व्यापारः प्रगल्भत इत्यभिदधाति। इत्थमपि वृथा विकत्थनम्[5]। संप्रत्यभिषिषेणयिषति[6] वः कुपित एष[7] नरसिंहनरपतिः[8]। किं च विमुञ्चत कान्दिशीकतामनुप्रविशत मामिति च कथयत्ययमित्यादावखिलभूपालगतत्वेनोल्लसतां त्रासश्वासादीनामपि[9] वाच्यत्वप्रसङ्गात्। अपि च यदि न व्यापारान्तरमभिधातः स्वीक्रियते तर्हि कृतं लक्षणया। दीर्घदीर्घाभिधाव्यापारेणैव लक्ष्यस्याप्यर्थस्य[10] प्रतीत्या[11] तस्याः स्वीकारवैयर्थ्यापत्तेः। अपि च[12]

---

भिधानासमर्थस्य वाक्यस्य कुतोऽत्यन्तभिन्नासंकेतितार्थान्तराभिधानसामर्थ्यमिति। अथ प्रतीयमानस्य प्रकारान्तरेण वाक्याभिधेयत्वमाशङ्कते। **यदि पुनरिति।** तदपि सोपहासं परिहरति। **इत्थमपीति।** अत्रातिप्रसङ्गदोषमाह। **संप्रतीत्यादि।** अभिषिषेणयिषति अभिषेणयितुमिच्छति सेनयाभियातुमिच्छतीत्यर्थः। 'यत् सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः। अभिपूर्वात् सेनाशब्दात् "सत्यापपाश—" इति ण्यन्तात् सनि लट्। "उपसर्गात् सुनोति" इत्यनुवृत्तौ "स्थादिष्वभ्यासेन चाभ्यासस्य" इति धात्वभ्याससकारयोः षत्वम्। "आदेशप्रत्यययोः" इति सेनैः[13] षत्वम्। कान्दिशीको भयद्रुतः। **त्रासादीनामपीति।** असंकेतितानामपीति शेषः। अन्यथा दीर्घव्यापारवादिनामिष्टापत्तेरिति। किं च किमभिधातो[14] व्यापारान्तरमेव नेष्यते व्यञ्जनव्यापार एव वेति द्विधा[15] विकल्प्याद्ये लक्षणापि दत्तजलाञ्जलिः स्यादित्याह। **अपि चेति।** द्वितीये दूषणमाह। **अपि चेत्[16] नास्तीति।**

---

१ °भिधाने न सामर्थ्यं T., °धाने यदि न सामर्थ्यं G., C., M. २ T. omits प्रतीयमानः. ३ °र्थसंप्रतिभानं C., M. ४ तावत्यभिधाव्यापारः T. ५ कल्पनम् D. ६ °त्यभिषेणयति C., G., M. ७ एव T., C., G., M. ८ °भूपतिः T. ९ त्रासादीनामपि Com. १० लक्षणीयस्य T., C., G., M. ११ प्रतीत्यास्याः C., G., M. १२ G. omits अपि च. १३ सस्य K. १४ K. drops किम्. १५ K. drops द्विधा विकल्प्य. १६ अपि च यदि नास्तीति K.

नास्ति[1] यदि व्यङ्ग्यव्यञ्जकभाव इत्युच्यते तर्हि च्युतसंस्कृति-प्रमुखाणां[2] दोषाणां नित्यत्वं श्रुतिकटुप्रभृतीनां त्वनित्यत्वमिति[3] विभागकरणस्य कैमर्थ्यं[4] प्रसज्यते । अपि च यदि प्रतीयमानोऽर्थो नाभविष्यत् तर्हि काव्यान्तर्निविष्टस्यासभ्यस्मृतिहेतोः पदार्था-न्तरान्वयविरहिणः पदस्य हेयत्वं न संपत्स्यत[5] । अपि च यदि[6]

च्युतसंस्कृति[7] चलते कम्पतीत्यादौ शब्दशास्त्रविरुद्धं पदम् । नित्यत्वं सर्वदा दोष-त्वमसाधुत्वस्य नित्यत्वानपायात् । एतच्चानुकरणादन्यत्र[8] । तदुक्तं **काव्यप्रकाशे** । 'अनुकरणे तु सर्वेषां दोषाणामप्यदुष्टतैव' इति । तथा **माघकाव्ये** । 'व्रजसि क्व तात वजसि' इति[9] बालभाषितानुकरणे नीरेफः प्रयोगः[10] । श्रुतिकटु परुषाक्षरं पदं तस्यानित्यदोषत्वं कदाचिद्गुणत्वात् । अत एव 'रौद्रादौ रसे व्यङ्ग्ये कटुत्वं गुणः' इति **काव्यप्रकाशकारः** । एतदुक्तं भवति । यदि व्यञ्जनोव्यापारो[11] नेष्यते शृङ्गा-[12]रादिव्यञ्जने कटुत्वं दोषः रौद्रादिव्यञ्जने कटुत्वं गुणः । च्युतसंस्कारादिकं तु सर्वत्र दोष इति व्यञ्जनैकाश्रयो विभागो न स्यात् । निराश्रयकल्पनापत्तेः । रसश्च[13] व्यङ्ग्य एव न वाच्य इति वक्ष्यते । कैमर्थ्यं वैयर्थ्यमित्यर्थः । अत्रैव तर्कान्तरमाह । **अपि चेति** । **असभ्यस्मृतिहेतोरिति** । अमङ्गलव्रीडाजुगुप्साव्यञ्जकतया त्रि-विधस्याप्यश्लीलस्येत्यर्थः । यथा[14] ।

'अभिप्रेतपदावासः कदा नः संभविष्यति ।
नीचसाधनमेतेषां परोत्सर्गैकजीविनाम्[15] ॥'

इत्यश्लीलमपि किंचित् कदाचिदुपादेयं स्यात् । '[16]स्वस्था भवन्तु कुरुराज-सुताः सभृत्याः' इत्यादावमाङ्गल्यादिव्यञ्जकं[17] स्वस्थादिपदं तद्व्युदासार्थं विशि-नष्टि । **[18]पदार्थान्तरान्वयविरहिण इति** । पद्यते गम्यतेऽनेनेति पदं प्रकर-

१ यदि नास्ति C., G., M. २ °प्रभृतीनां नित्यत्वं T., M.; °प्रभृतीनां दोषाणां नित्यत्वं C., G. ३ चानित्य° C., G. ४ कैमर्थक्यं D., T. ५ संपत्स्यते T., G., M. ६ यदि च D. ७ च्युतसंस्कृतिः K. ८ °नुकरणादेरन्यत्र K. ९ K. drops अपि. १० नीरेफ-प्रयोगः D. ११ व्यञ्जनव्या° D. १२ नेष्यते तदा शृङ्गारादि° D. १३ रसस्तु D. १४ D. omits यथा. १५ °जीवनम् D. १६ D. inserts यथा before स्वस्था. १७ °व्यञ्ज-कत्वं K. १८ पदार्थान्वयेति D.

विद्यमानेऽपि विरुद्धधर्माध्यासे कारणभेदे[1] वाच्यव्यङ्ग्ययोर्भेदो नाभ्युपेयते तर्हि क्वचिदपि न भवितव्यं[2] भेदेन । तत्र वाच्यव्यङ्ग्ययोः स्वरूपभेदो यथा[3] ।

दिङ्मातङ्गाः कनकशिखरी सप्तयः सप्तसप्तेः ।
चिन्तारत्नं दिविचरतरुः श्रीनृसिंहक्षितीन्द्र ।
अद्याप्येतत् सकलमकृथा नार्थिसादित्यपार्थ-
स्तेनायं ते वितरणकलाकौशलेनावलेपः ॥

अत्र निन्दा वाच्या प्रतीयमाना च[4] स्तुतिस्तयोश्च स्वरूपत एव

णम् । तथा च प्राकरणिकार्थान्वयविरहिण[5] इत्यर्थः । अयमर्थः । इह वेणीसंहार-फलस्य कौरववधस्य काव्यार्थत्वात्[6] तदन्वयेन स्वस्थपदवाच्यनिराकुलत्वातिरिक्त-कौरवस्वर्गगमनामाङ्गल्यव्यञ्जकवत् स्वस्थपदं नायकाभ्युदयपरमेवेति युक्तमस्योपा-देयत्वम् । एवं व्रीडाजुगुप्सयोरप्युदाहार्य्यम्[7] । तर्कस्तु यदि[8] पदं न व्यञ्जकं स्यादसभ्यार्थव्यञ्जकमपि न स्यात् । तद्व्यञ्जकमित्यहेयं स्यात् । न चेष्टा-पत्तिः । दोषत्वोक्तिविरोधादिति । एवं ध्वनिस्वरूपे विप्रतिपद्यमानं प्रति तर्क-चतुष्टयमुक्तम् । अस्यानुग्राह्यं प्रमाणमुन्मेषान्ते वक्ष्यति । अथ भेदे[9] विप्रतिपद्य-मानं प्रत्याह । अपि चेति । वाच्यव्यङ्ग्ये मिथो भिन्ने । विरुद्धधर्मयोगित्वात् । यदेवं[10] तदेवम्[11] । यथा घटपटादि । इति प्रयोगं मनसि निधाय साध्यानङ्गीकारेऽतिप्रसङ्गं तर्क-माह । यदि विद्यमानेऽपीति । घटपटादिभेदानामपि तदेकसाधनत्वात् तस्यैकत्राप्र-योजकत्वे सर्वत्रापि तथात्वादिति । अथ हेत्वसिद्धिपरिहाराय विरुद्धधर्माध्यासं साधनान्तरोपन्यासव्याजेन प्रपञ्चयति तत्रेत्यादिना । स्वरूपभेदो यथेति । स्वरूपभेदादेशो यथेत्यर्थः । दिङ्मातङ्गा इति[12] । अत्र दिङ्मातङ्गादिकमप्रयच्छ-तस्ते वितरणं कियदिति निन्दया ततोऽन्यत् सर्वं दत्तमेवेति स्तुतिप्रतीतेर्व्याज-स्तुतिभेदः । अत्र वाच्यव्यङ्ग्ये विविनक्ति । अत्र निन्देति । ततः किमत आह ।

१ D. inserts च after कारणभेदे २ संभवितव्यं C., G., M. ३ T. drops च. ४ D., T., and C. drop च. ५ °र्थान्तरविर° K. ६ काव्यार्थत्वादन्यत्रान्वयेन D. ७ °हार्य्यमिति D. ८ K. omits यदि. ९ K. drops भेदे. १० यदुक्तसाधनं D, ११ तदुक्तसाध्यं D. १२ इत्यादि K.

भिन्नत्वं वाच्यप्रतीत्यनन्तरभाविनी व्यङ्ग्यप्रतीतिरिति कालभेदादप्यनयोर्भेदः । आश्रयभेदाद्भेदो यथा । शब्दमात्रमाश्रयो वाच्यस्य श[2]ब्दैकदेशतदर्थवर्णसंघ[3]टनाश्च प्रतीयमानस्य । शब्दार्थशास्त्रज्ञानमात्रं कारणं वाच्यस्य प्र[4]करणादिसं[5]ध्रीचीनप्रतिभातिशयसनाथं च तत् प्रतीयमानस्येत्यनयोः कारणभेदादपि भेदः । बुध[6]बोद्धृविद्वदादिभिः प[7]दैर्व्यपदिश्यते वाच्यश्च सहृदयविदग्धप्रतिभानवदादिभिस्तत्प्रतीयमानश्च इति । वाच्यस्यावबोधः प्रतीतिमात्रमभि-

---

तयोश्चेति । स्वरूपत एव परस्परविरुद्धस्तुतिनिन्दात्मकत्वादिव भिन्नत्वमित्यर्थः । अतो वाच्यव्यङ्ग्यात्मनापि भेद इति शेषः । परदोषोद्घाटनं निन्दा । तद्गुणानुवादः स्तुतिः । अथ प्रतीतिपौर्वापर्यादप्यनयोर्भेद इत्याह । वा[8]च्येति । आश्रयभेदादित्यादि । इह प्रतिपाद्य[9]प्रतिपत्तेः प्रतिपादकायत्तत्वात् प्रतिपादकमुपचारादाश्रयशब्देनोच्यते । त[10]त्र वाच्यप्रतिपत्तेः सङ्केत[11]सापेक्षत्वात् सङ्केत[12]श्च शब्दे[13] एवेति शब्दमात्रमाश्रयो वाच्यस्येत्युक्तम् । व्यङ्ग्यस्य तु संकेतानपेक्षितया केवलप्रकरणादिवशाद्यथा[14]योगं शब्दार्थाद्याश्रयत्वं दर्शनबलादध्यवसीयत इत्यर्थः । त[15]त्र 'क्रियेत चेत्' इत्यादिवक्ष्यमाणोदाहरणे शब्दाश्रयं 'कस्सवण होइ' इत्यर्थाश्रयं च व्यक्तीकरिष्यामः । वर्णायत्तं तु मधुरोद्धतादिवर्णगोचरं वर्णोद्धतमधुरोद्धतादि रसव्यङ्ग्यम् । एवं संघटनाश्रयमपि मधुरोद्धतादिरचनागोचरं मधुरोद्धतादिरसव्यङ्ग्यमवेति द्रष्टव्यम् । कारणभेदादप्यनयोर्भेद[16] इत्याह । शब्देति । शब्दशास्त्रं व्याकरणं ततोऽन्यत् सर्वमर्थशास्त्रम् । तदिति शब्दार्थशास्त्रज्ञानमित्यर्थः । अथ कार्यभेदाच्च भेदं प्रपञ्चयन् प्रतिपत्तृसमाख्यानरूपकार्यभेदात् तावद्भेदमाह । बुधेत्यादि । प्रतिपत्तिसमाख्यारूपकार्यभेदाच्च भेद इत्याह । वाच्यस्यावबोध

---

१ °प्रतीत्यनुभाविनी C., G., M. २ शब्दतदर्थ° D. ३ °संघटना च C., G., M. ४ प्रकरणसध्री° M. ५ °सध्रीचीनं प्रति° T., C., M. ६ बुधबोधबोद्धृ° G., C., M. ७ °वदादिभिः पदैस्तु प्रती° G. ८ वाच्यस्येति D. ९ °प्रतीतेः K. १० अत्र च K. ११ संकेते सापे° D. १२ संकेतश्चास्य D. १३ शब्देनैवेति D. १४ °थायोगशब्दा° K. १५ अत्र K. १६ °विरोध इ° K.

धीयते प्रतीयमानस्य तु चमत्कार इति । वाच्यस्य[1] संबन्धम[2]भिधाम-भिद[3]धति प्रतीयमानस्य[4] पुनः परामर्श[5]मिति कार्यभेदादप्यनयो-र्भेदः । विषयभेदेन भेदो यथा ।

कस्स व[6] ण होइ रोसो दट्ठूण पिआए सव्वणं अहरं ।
[7]संभमरपदुमग्घा[8]यिणि वारिअवामे सहसु प[9]ण्हिम् ॥

कस्स व[10] कस्य वा अनीर्ष्यालोरपि वारिअवामे मद्व[11]चना-भङ्गीका[12]रिणि सहस्वेदानीमुपालम्भपरम्परामिति भावः । अत्र काचित् स्वैरिणी केनचिदुपपतिना खण्डिताधरा त[13]दुपपतिसन्निधि

---

इ[14]त्यादि । स्वप्रतिपादकसंबन्धसमाख्यारूपका[15]र्यभेदाद्य भेद इत्याह । वाच्य[16]स्य संबन्धमभिधामित्यादि । परामर्शमभिदधातीत्यनुषङ्गेणान्वयः । कार्यभेदाद्भेदं निगमयति । इति कार्यभेदादपीति । विषयभेदेनेति । उद्देश्यभेदेनेत्यर्थः । कस्स वेत्यादि ।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रा[17]यिणि वा[18]रितवामे सहस्वेदानीम् ॥

अर्था[19]श्रयव्यङ्ग्यस्येदमुदाहरणं द्रष्टव्यम् । अत्र भर्त्तु[20]ः रोषो भवतीति वक्तव्ये क[21]स्येति सामान्यनिर्देशस्याभिप्रायमाह । अनीर्ष्यालोरपीति । ईर्ष्यालोः किमु वक्तव्यमिति भावः । अत्र[22] प्रसिद्धपदार्थमाह । वा[23]रीति । मद्वचनेति । सभ्रमरं पद्मं मा गृहा-णेति वचनमित्यर्थः । सहेः सकर्मकत्वाद्विवक्षितकर्मकारकं दर्शयति । उपालम्भेति । अ[24]थ वाच्यव्यङ्ग्ययोर्विषयविभागं कर्त्तुं प्रकरणं तावदाह । अत्र काचिदिति । तद-

---

१ वाच्यसंब° T. २ संबन्धमाभिदधाति T., G., M. ३ माभिदधते G. ४ प्रतीयमानस्य तु पुन° G., M. ५ परामर्श इति T., C., G., M. ६ च ण D. ७ सम्भमर° D., T., C., G., M. ८ °घाइरि T. ९ इण्हिं D., पण्णिम् T. १० च D. ११ मम वचना° C., G., M. १२ °ङ्गीकारकारिणि T. १३ तमुपपति° T., C., G., M. १४ इति K. १५ कार्ये भेदा° D. १६ वाच्यसंब° D. १७ °ग्राहिणि K. १८ निवारित° K. १९ अर्थाश्रयस्य व्य° D. २० भर्त्तृरोषो K. २१ कस्य वेति K. २२ अप्रसिद्ध° D. २३ वारियेत्यादिति D. २४ K. drops अथ.

निश्चिन्तवति[1] प्रियतमे तं[2]मनवलोकमानयैव[3] कयापि विदग्धया सख्या तदपराधप्रच्छादनायेदमभिधीयते । इह सहस्वेदानीमिति वाच्यं स्वैरिणीविषयम् । अनपराधत्वमस्या इति व्यङ्ग्यं पुनः प्रियतमविषयम् । सहस्वेत्यपि च तद्विषयम् । वल्लभेन सुतरामुप[4]लभ्यमानायामस्यां तं[5]द्व्यलीकशङ्कितेति[6] पुनरविनयगोपनेन तं[7]प्रत्यायनं प्रातिवेशिकविषयम् । प्रियाया इति पदोपादानात् सौभाग्यातिशयप्रतिपादनं तदविनयोपालम्भसंभूतप्रमोदसपत्नीविषयम् । अत एव सहस्वेति प्रियतमविषयं च । प्रकटापराधप्रच्छादनेन स्ववैदग्ध्यप्रकाशनं तटस्थविदग्ध[8]जनविषयम् । उपलक्ष्यमाणोपभोगचिह्ना पुनरियं न त्वया कर्त्तव्येति[9] प्रच्छन्नकामुकविषयम्[10] । इत्थं मयैषापह्नुतमेतत्[11] भवतीभिरित्यपरसखीविषयमित्यनयोर्विषयभेदाद्भेदः ॥

---

धरखण्डनमनवलोकमानयैव[12] ततः प्रागज्ञानानयैवे[13]त्यर्थः । अत्र[14] वाच्यस्य विषयमाह । इहेति । स्वैरिणीमुद्दिश्येदमुच्यत इत्यर्थः । सर्वत्र चात्र विषयशब्द उद्देश्यपरः । अथेह व्यङ्ग्यं तद्विषयं च प्रपञ्चयति । **अनपराधत्वमित्यादिना[15]** । **सहस्वेत्यपि च तद्विषयमिति** । उपालम्भं सहस्वेति वाच्यान्निरपराधेयमनुपालभ्येति व्यज्यते । तच्च प्रियतमविषयमित्यर्थः । **तद्व्यलीकशङ्कितेति[16]** । तदपराधोत्प्रेक्षकोऽयमिति हेतोरित्यर्थः । तत्प्रत्यायनं तस्य प्रियस्य विश्वासोत्पादनमित्यर्थः । सौभाग्यं भर्तु[17]र्वाल्लभ्यम् । विषयभेदाद्भेदं निगमयति । **इत्यनयोरिति** । अत्रानपराधत्वा[18]दिप्रतीतेः केवलार्थशक्तिमूलत्वादर्थाश्रयमेवेदं व्यङ्ग्यमिति द्रष्टव्यम् ॥

---

१ चिन्तयति T. २ तन्मुखमन° T., C., G. ३ °लोकयन्त्येव T., G., M.; °लोकयन्त्यैव C. ४ °मुपालभ्य° G., M. ५ न तद्व्य° T. ६ °शङ्कोति C., G., M. ७ प्रत्यायनं C., G. ८ C., G., M. omit जन. ९ न पुनरेवमियं त्वया कर्त्त° T., G., M. १० °विषयमुक्तं मयै° C. ११ °पह्नुतं न भव° T., M. १२ °मनवलोकमानयैव D. १३ °गजानन्यैव D. १४ तत्र D. १५ °मित्यादि D. १६ °शङ्कोति K. १७ भर्तृवा° K. १८ °पराधत्वप्र° D.

येऽपि[1] सहृदयसंवेद्यमनाख्येयमेव ध्वनिमाख्यातवन्तस्तेऽपि न परीक्ष्यवादिनः । सामान्यतो विशेषतो[2] ध्वनिलक्षणस्यास्माभिः प्रदर्शितत्वात् । तथापि यदि तस्यानाख्येयत्वं तदा सर्वेष्वपि वस्तुषु[3] तदतिप्रसज्यमानमनिर्वार्यं[4] स्यात् । अथानयातिशयोक्त्या[5] लोकोत्तरत्वमस्य निरूप्यते[6] तदा सिद्धं नः समीहितम् ॥

अथ भक्तेरुपचारादागतोऽयमिति ये भाक्तमभिदधते[7][8] त एवं प्रष्टव्याः । भक्तिर्व्यक्तिश्चेति न तत्त्वान्तरमिति यद्यभिसंधिस्तदा

तदेवमियता प्रबन्धेन ध्वनिरेव नास्तीति प्रथमपूर्वपक्षं प्रतिक्षिप्येदानीमस्त्यनिर्वाच्य इति द्वितीयपक्षं प्रत्याचष्टे । येऽपीति । सहृदया विदग्धास्तेषामप्यनुभवैकसमधिगम्यो[9] न तु[10] केनापि लक्षणतो निर्वक्तुं शक्यत इति वादिनोऽपि न विमृश्यवादिन इत्यर्थः । कुत इत्यत आह । सामान्यत इति । स्वरूपसिद्धौ लक्षणस्यापि सिद्धप्रायत्वात् । प्रदर्शितत्वादिति सिद्धत्वोक्तिः । वस्तुतस्त्वनन्तरोन्मेषे भविष्यतीति भावः । तथाप्यनिर्वाच्यत्वे विश्वस्यापि[11] तथात्वमित्यतिप्रसङ्गबाधकमाह[12] । तथापीति । अथानिर्वाच्यत्वाभिधानं ध्वनेः प्रशंसापरं[13] न वास्तवं तर्हि[14] न कश्चिदावयोर्विवाद इत्याह । अथेति । अतिशयोक्त्यासंबन्धे संबन्धरूपयेत्यर्थः । अनिर्वाच्यत्वासंबन्धेऽपि तत्संबन्धोक्तेः ॥

अथ भाक्तो ध्वनिरिति तृतीयां विप्रतिपत्तिं विघटयितुं भाक्तपदनिरुक्तिपूर्वमुद्घाटयति । अथ भक्तेरिति । उपचारादारोपादित्यर्थः । यथाहुः । 'भिन्नत्वेन प्रतीयमानयोरैक्यारोपणमुपचारः यथा गौर्वाहीकः' इति । न तत्त्वान्तरं नार्थान्तरमित्यर्थः । तदेतद्दूषयितुं विकल्पयति । तदेति । किमिदं व्यक्तेर्भक्त्याभिन्नत्वं नाम तत्तादात्म्यं[15] विवक्षितं तल्लक्षणत्वमात्रं[16] वा तदुपलक्षितत्वमात्रं[17] वेति विकल्पार्थः । तत्र तादात्म्यं नाम

१ ये तु T. २ विशेषतश्चास्माभिर्ध्वनिलक्षणस्य प्र° D. ३ वस्तुषु प्रसज्य° D. ४ °मनिवार्यं D.; °मनिवार्यमाणं M. ५ अथानया त्वतिशयोक्त्या C., G., M.; अथानयार्थशक्त्या T. ६ रूप्यते G. ७ व्यक्तिमभिदधाति D. ८ °दधाति C., M. ९ °समधिगम्यं K. १० K. omits तु. ११ °वादित्वमित्य° D. १२ °स्यातिप्रसङ्गबाधक° K. १३ प्रशंसा K. १४ D. drops तर्हि. १५ तादात्म्यं D. १६ °क्षणकत्वमात्रं D. १७ K. drops तदुपलक्षितत्वमात्रं वा.

भक्तिव्यक्त्योः[१] किं तादात्म्यमुत भक्तिर्व्यक्तेर्लक्षणमुपलक्षणं वा । न प्रथमः पक्षः। उभयोरप्यनयोः परस्परविरुद्धानां धर्माणामुपलम्भसंभवात्। तथा हि मुख्यार्थबाधाद्यनुसंधानप्रवृत्तत्वं भक्तेः। वक्तृबोद्धव्या[२]दिवैशिष्ट्यानुसंधानप्रवृत्तत्वं तु व्यक्तेः । तत् कुतस्तयो[३]स्तादात्म्यशङ्काकलङ्कावतारः । किं च भेदसिद्धयेऽनुमानमप्यस्ति। भक्तिव्यक्ती मिथो भिन्ने। भिन्नधर्मयोगित्वात्। यद्भिन्नधर्मयोगि तन्मिथो भिन्नम्। यथा घटपटादि । न द्वितीयः। व[४]क्ष्यमाणदूषणगणग्रस्तत्वात् । तथा हि । लक्ष[५]णस्य केवलव्यतिरेकित्वादेवं किलानुमानरचना । व्यक्तिरितरेभ्यो भिद्यते । भक्तिमत्त्वात् । यत् पुनरितरेभ्यो न भिद्यते न

---

तदेका[६]त्मत्वम् । असाधारणधर्मो लक्षणं यथा गन्धः पृथिव्याः । कादाचित्कं व्यावर्तकमुपलक्षणं यथा काकादिकं गृहादेरिति । तत्र तादात्म्यपक्षं दूषयति । न प्रथम इति । तत्र हेतुमाह । परस्परेति । तमेव व्यनक्ति । तथा[७] हीति । सिंहो देवदत्त इत्यत्र देवदत्ते सिंहत्वासंभवाद्बाधानुसंधानम्। आदिशब्दात् सादृश्यादिसंग्रहः। वक्तृबोद्धव्यादित्यादिशब्दात् काकादिसंग्रहः। एतदुत्तरोन्मेषे व्यक्तीकरिष्यते[८] । अथ प्रयोगम[९]प्याह । किं चेति । अत्र विरुद्धधर्मयोगस्योक्तत्वान्नासिद्धिशङ्का तथापि भेदानङ्गीकारे घटपटादिभेदोऽपि विलीयेतेति तर्क इति भावः । लक्षणपक्षं दूषयति । न द्वितीय इति । तदेव दूषणं वक्तुमाह । तथा हि लक्षणस्ये[१०]त्यादि । असाधारणधर्मत्वाद्व्यतिरेक्येव लक्षणमित्युक्तत्वादिति भावः । प्रयोगमाह । व्यक्तिरिति । व्यावृत्तिर्व्यवहारो वा लक्षणस्यै[११] प्रयोजनमित्यभिप्रेत्याह । इतरेभ्यो भिद्यत इति । इतरशब्देन पक्षातिरिक्तपरिग्रहः । अन्वयाभावाद्व्यतिरेकमाह । यत् पु-

---

१ भक्तिव्यक्त्योर्ल° D. २ °बोद्धव्याभिसंधानप्रवृत्तत्वं C., G., M. ३ °स्त्वनयो° C., G., M. ४ वक्ष्यमाणलक्षणग्रस्तत्वात् T. ५ लक्ष्यस्य G. ६ तदेकान्तत्व° K. ७ तथा हीत्यादि D. ८ °करिष्यति K. ९ प्रयोगमाह D. १० लक्षणस्येति K. ११ लक्षणस्यार्थं इत्यभि° K.

तद्भक्तिमत्। यथाभिधादि। तथा च सत्यभिधैकमूले[1] ध्वनौ भक्तेरभावाद् भागासिद्धो हेतुः। व्यक्तेरितरेभ्यो भिन्नत्वे साध्येऽस्य हेतोरितराभिन्ने[2] विवेचकत्वमात्रं लक्षयति कुशलादौ रूढेऽपि[3] कंचिद्गतत्वाद्विरुद्धत्वमपि[4]। अनेन हि विवेचकत्वादिमात्रं लक्ष्यते न तु किंचिद् व्यज्यते। न तृतीयः। विवक्षितान्यपरवाच्ये ध्वनौ भक्त्युपलक्षितत्वाभावादुपलक्षणत्वाभ्युपगमेऽपि[5] भक्तिव्यक्त्योरभिन्नत्वा-

नरिति। तदेतद् भागासिद्ध्या दूषयति। तथा च सतीति। द्विविधो हि ध्वनिरभिधामूलो लक्षणामूलश्चेति। उभयमिह पक्षः। तत्राद्ये भक्त्यभावाद्भागासिद्धो हेतुरित्यर्थः। दूषणान्तरमाह। व्यक्तेरिति। कुशलादौ साध्याभावं वक्तुं साध्यं तावदाह। इतरेभ्यो भिन्नत्वे साध्य इति। अस्य हेतोरिति। भक्तिमत्त्वहेतोरित्यर्थः। इतराभिन्न इति। इतरभेदरूपसाध्यविरहिणीत्यर्थः। तत्र हेतुमाह। विवेचकत्वमात्रं लक्षयतीति। कर्मणि कुशल इत्यादौ दर्भग्रहणरूपावयवार्थासंभवान्निरूढलक्षणया विवेचकत्वमात्रपरे व्यञ्जकत्वासंभवाद्व्यञ्जकेतरभेदरूपसाध्यविरहो युज्यत इत्यर्थः। गतत्वात् भक्तिमत्त्वहेतोस्तत्र स्थितत्वादित्यर्थः। विरुद्धत्वमिति। पक्षविपक्षयोरेव वर्त्तमानत्वादित्यर्थः। अथोपलक्षणपक्षं प्रतिक्षिपति। न तृतीय इति। तत्र हेतुमाह। विवक्षितेति। विवक्षितान्यपरवाच्यध्वनेरभिधामूलत्वेन भक्तेरेवाभावात् तदुपलक्षितत्वाभावेन तदुपलक्षितत्वरूपमप्यभिन्नत्वं न संभवतीत्यर्थः। किं च यत्रास्ति[6] भक्तिरविवक्षितवाच्यध्वनौ[7] तत्रापि किं भक्तेः कादाचित्कमुच्यते नो वा। नो चेन्नोपलक्षणत्वसिद्धिः। कादाचित्कतया भेदहेतुरुपलक्षणमिति लक्षणात्। उच्यते चेद्बाधः। लक्षणामूलध्वनौ भक्तेरनपायात्। तथापि तदुक्तमभ्युपेत्य दूषणमाह[8]। उपलक्षणेनेति[9]। तद्विनाभाविनस्तदभिन्नत्वं विरुद्धमिति भावः। अथ

१ °भिधायकमूले M., C.; °भिधामूले G. २ °राभिन्नविवे° T. ३ C. and M. insert तस्य after रूढेऽपि. ४ काचित्कत्वा° M. ५ T., C., G. and M. drop अपि. ६ D. drops अस्ति. ७ °मूले ध्वनौ D. ८ दूषयति K. ९ उपलक्षणेन विनैवेति D.

संभवाच्च[1] । उपलक्षणेन[2] विनाप्युपलक्षणीयस्य[3] सिद्धेश्च[4][5] । एतेन यत्र कुन्तकेन[6] भक्तावन्तर्भावितो ध्वनिस्तदपि प्रत्याख्यातम् । यत्तु गुणविशिष्टपदरचनात्मिकाया रीतेः काव्यात्मत्वममानि वामनेन तदपि न साधु । माधुर्यादिगुणानतिक्रमणात्[7] तस्याः । किं चानुमानमपि ध्वनिसाधने[8] लब्धप्रसरमेव । तथा हि ।

---

मतान्तरमतिदेशेन निरस्यति । एतेनेति । भाक्तपक्षनिरासेनेत्यर्थः । ननु सिध्यतु नाम ध्वनिः तथापि कथं काव्यात्मतासिद्धिरस्य[9] यदन्यैरन्य एवात्माभ्यधायीत्याशङ्क्य तन्मतं दूषयितुमनुभाषते । यत्तु[10] गुणेति । 'रीतिरात्मा काव्यस्य' इति सूत्रादिति भावः । तद्दूषयति[11] । तदपि न साध्विति । तत्र हेतुमाह । माधुर्यादीति । गुणविशिष्टायाः[12] पदरचनाया आत्मत्वे केवलाया अनात्मत्वात् प्राप्ताप्राप्तविवेकेन गुणानामेवात्मत्वे स्ववचनविरोधः सूत्रकारस्य[13] । काव्यशोभायाः कर्त्तारो गुणाः[14] इत्युपस्कारकत्वेनोक्तानामुपस्कार्यत्वविरोधात् । उपस्कार्यश्चात्मेति भावः । यदि पुनः सोऽयमिषोरिवेत्यादिना ध्वनिसाधनाय प्रागुक्ततर्कचतुष्टयस्यानुग्राह्यं प्रमाणं[15] संप्रति कण्टकशोधनान्निरङ्कुशं प्रवर्त्तेत इत्याह । किं चानुमानमपीति । तत्र पक्षं निर्दिशति । क्रियेतेत्यादिना एतद्वाक्यमित्यन्तेन । साध्यं निर्दिशति । एतद्वाक्येति । अत्र साधुविभक्तिचिन्ता सुजनविभागविचारः क्रियेत चेत् तदा[16] सा नलाभिधाना व्यक्तिर्मूर्त्तिः प्रथमाभिधेया प्रथमं परिगणनीया या व्यक्तिः स्वौजसां स्वतेजसां विलासैर्व्याप्तिभिस्तावदस्तु प्रभूतमनाममनम्रं पदं परार्ध्यं साधयितुं स्वायत्तीकर्त्तुं क्षमेति वाच्यार्थः । साधु सम्यक् विभक्तिचिन्ता विभक्तिविचारः क्रियेत चेत् तदा सा प्रथमा व्यक्तिः प्रथमा विभक्ति-

---

१ °संभव एव T. २ उपलक्षणत्वेन D. ३ °लक्षणीयसिद्धे° T. ४ संसिद्धे° G. ५ T. drops च. ६ कुन्तकेन D. ७ °तिक्रामित्वात् T., C., G.; °तिक्रान्तत्वात् M. ८ गुणसाधने C., M. ९ कथं काव्यात्मा स यद° K. १० यत्त्विति K. ११ दूषयति K. १२ °विशिष्टाया रचनाया D. १३ D. drops सूत्रकारस्य. १४ गुणा धर्म इत्यु° D. प्रमाणमत्र कण्टक° K. १६ K. omits तदा.

क्रियेत चेत् साधुविभक्तिचिन्ता
व्यक्तिस्तदा सा प्रथमाभिधेया ।
या स्वौजसां साधयितुं विलासै-
स्तावत् क्षमानामपदं बहु स्यात् ॥

इत्येतद्वाक्यमेतद्वाक्यवाच्यातिरिक्तार्थप्रकाशकम् । वाक्य[1]त्वात् । यद्यद्वाक्यं तत्तद्वाच्यातिरिक्तार्थप्रकाशकम् । यथा कालिदासादिवाक्यम् । वाक्यं चेदम् । तस्मादेतद्वाक्यवाच्यातिरिक्तार्थप्रकाशकम् । पर्यायवाक्येऽनैकान्तिकमिति चेन्न । तस्यापि पक्षकोटिनिविष्टत्वात् । तस्मादस्ति ध्वनिः । अयं च वस्त्वलंकाररसादि-

---

रभिधेया विचार्या । या स्वौजसां सु औ जस् इत्येतेषां प्रत्ययानां विलासैः प्रयोगैस्तावद्बह्वनेकं नामपदं सुबन्तं पदं वृक्षस्यादिकं साधयितुं निष्पादयितुं क्षमेत्यर्थान्तरम् । तत्प्रकाशकत्वं पक्षे सामान्यतो वाच्यातिरिक्तार्थप्रकाशक[2]त्वांशः । साध्यविपर्ययोपस्थापकप्रमाणाभावान्न बाधः । नापि सि[4]द्धसाध्यता परेषां विप्रतिपत्तेः । अविप्रतिपत्तौ वा सिद्धं नः समीहितम् । दृष्टान्तेऽपि स्ववाच्यार्थप्रकाशनेनैवैतद्वाच्यातिरिक्तार्थप्रकाशकत्वात् न साध्यवैकल्यम् । विमतं न स्ववाच्यातिरिक्तार्थप्रकाशकं वाच्यमात्रोपक्षीणशक्तिकत्वात् ज्योतिष्टोमादिवाक्यवदिति बाधः प्रतिपक्षो वेति चेन्न । पुंवाक्यत्वादिति हेतोर्विवक्षितत्वात् । तर्ह्यनैकान्तिकत्वमिति शङ्कते । पर्यायेति । समानार्थं वाक्यं पर्यायवाक्यं तत्र तद्व्यतिरिक्तार्थप्रतीतिर्नास्तीति शङ्कितुराशयः । परिहरति । तस्यापीति । तत्समानार्थस्य तत्तुल्यशक्तिकत्वात् तत्राप्यर्थान्तरप्रकाशनाविरोधान्न पक्ष एव व्यभिचार

---

१ D., C., G., and M. omit the portion from वाक्यत्वात् to °प्रकाशकम्
२ °प्रकाशकत्वनिर्देशः D. ३ साध्यबाधः D. ४ सिद्धसाधनता K. ५ तर्हि व्यभिचार इति च शङ्कते K. ६ °तुल्यशक्तित्वात् K.

रूपतया भवंस्त्रैविध्यमतिवर्त्तते । वस्तुध्वनिरलंकारध्वनिः रसादिध्वनिश्चेति ॥

इति श्रीमहामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे ध्वनिव्यवस्थापनं नाम प्रथम उन्मेषः ॥

---

इति भावः । परमप्रकृतमुपसंहरति । तस्मादिति । अथैनं विभजते । अयं चेति । त्रिधा विधा दर्शयति । वस्तुध्वनिरित्यादि । इतिशब्दः प्रकारे ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायामेकावलीव्याख्यायां तरलाख्यायां ध्वनिव्यवस्थापनं प्रथम उन्मेषः ॥ १ ॥

---

१ T. drops भवन्. २ रसध्वनि° T. ३ इति विद्याधरकृता° D. ४ एकावल्यलं° D.; °वैकावलि° T., C., G.; °वैकावलिनामन्य° M. ५ K. omits श्री. ६ प्रमाणपारावारीण D. ७ मल्लिनाथभट्टसूरि° D. ८ D. omits तरलाख्यायां.

## अथ द्वितीय उन्मेषः

शब्दार्थयोरेव काव्यत्वमतस्तयोरेव[1] स्वरूपं निरूपयन्नाह ।

**यः संकेतितमर्थं साक्षाद्ब्रूते स वाचकः शब्दः ।**
**संकेतितश्चतुर्धा जात्यादिर्जातिरेव वा भवति ॥१॥**

---

ननु ध्वनिनिरूपणानन्तरं शब्दार्थनिरूपणस्य का गतिरित्याशङ्क्य[2] संगमयन्नाह । **शब्दार्थयोरेवेति** । ध्वनेः काव्यात्मत्वात् तन्निरूपणानन्तरं तच्छरीरभूत-शब्दार्थनिरूपणं संगतमेवेत्यर्थः । यदाहुः[3] ।

'शब्दार्थौ मूर्त्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम्' ।

इति । इह त्रिविधः शब्दो वाचको लक्षको व्यञ्जकश्च[4] । अर्थोऽपि त्रिविधो वाच्यो लक्ष्यो व्यङ्ग्यश्च । तथा तद्वृत्तयोऽप्यभिधालक्षणाव्यञ्जनाख्या-स्तिस्र इति विभाग सिद्धवत् कृत्वेतरयोस्तन्मूलत्वाद्वाच्यवाचकौ[5] तावल्लक्षयति । **य इत्यादि** । तत्रा[6]प्यर्थज्ञानस्य शब्दज्ञानपूर्वकत्वात् पूर्वं शब्दनिरूपणम् । संके-तितं गृहीतसंबन्धमित्यर्थः । संबन्धश्च वाच्यवाचकयोः शक्तिरेव । सा चोभय-वर्त्तिन्येकैव वाच्यनिष्ठा वाच्यशक्तिर्वाचकनिष्ठा वाचकशक्तिरिति चोभयथा व्यपदिश्यते । यथाहुः कारिकायामाचार्याः ।

'शक्तिरेव हि संबन्धो भेदश्चास्या न विद्यते' ।

इति । ब्रूते प्रतिपादयतीत्यर्थः । अन्यथा शब्देऽभिधेयमासंभवाल्लक्षण-मसंभवि स्यात् । 'साक्षात् प्रत्यक्षतुल्ययोः' इति प्रत्यक्षाद्यर्थत्वेऽसाङ्गत्यादसंभ-वमाशङ्क्य स्वयमेवान्यथा व्याचष्टे । **साक्षादव्यवधानेनेति** । मुख्यवृत्त्येत्यर्थः । तेन लक्षणादिव्यावृत्तिरित्यर्थः । तेन संकेतितार्थप्रतिपादकः शब्दो वाचकः साक्षा-दर्थप्रतिपादकः शब्दो वाचक इति लक्षणद्वयम् । अन्यथा **संकेतितसाक्षात्**पदयो-रेकेनैव लक्षणादिव्युदासेऽन्यतरवैयर्थ्यादिति । अन्विताभिधानवादे लक्ष्यार्थेऽपि संकेत

---

१ °स्त्वनयोरेव D. °स्तयोः स्वरूपं T. २ °त्याशङ्क्य D. ३ यथाहुः D. ४ °कश्चेति K. ५ वाच्यवाचकभावं लक्ष° D. ६ तत्रार्थ° D. ७ च K. ८ शक्तेरभि° K. ९ °भिवादना° D. १० °पादको वेति K.

साक्षादव्यवधानेन । जात्यादिर्जाति[1]गुणक्रियाद्रव्यरूपः । यद्यप्यर्थक्रियाकारितया व्यक्तेरेव प्रवृत्तिनिवृत्तियोग्यता तथापि व्यक्तीनामानन्त्याद्व्यभिचाराच्च प्रतिव्यक्ति न शक्यते संकेतः

---

इष्यत इति तन्निरासार्थं साक्षात्पदमिति पक्षे[2]ऽपि तावतैव लक्षणादेरपि व्युदासात् संकेतितपदवैयर्थ्यं तदवस्थमेवेति लक्षणद्वयपक्षमेव रोचयन्ते तद्विदः । शब्द-शब्देनोभयत्र चेष्टाव्युदासः । संकेतार्थावधारणं विना तद्वाचकस्वरूपस्यानवधारणात् तद्विभागः कृतः संग्रहे संकेतितश्चतुर्भेदेत्यादिना । तत्र संकेतितशब्दो व्याख्यातः । आदिशब्दार्थमाह । जात्यादिर्जातिगुणक्रियाद्रव्यरूप इति । गौः शुक्लश्चलति डित्थ इति चोदाहर्तव्यम् । नन्वर्थक्रियाकारितया पुरुषप्रवृत्ति-योग्यां व्यक्तिमुपेक्ष्यान्यत्र किमिति संकेतः क्रियते इति शङ्कामनूद्य निराचष्टे । यद्यपीत्यादि । व्यक्तिसंकेतपक्षे किं[3] सर्वासु व्यक्तिषु संकेतः कतिपयासु वेति द्वेधा विकल्प्याद्ये दूषणमाह । आनन्त्यादिति । द्वितीयेऽप्याह । व्यभिचारादिति । कतिपयसंकेते असंकेतिते गवि गोव्यवहारो न स्यात् स्याच्चेदसंकेतितस्याविशेषादश्वादावपि स्यादिति व्यभिचार इत्यर्थः । किं च व्यक्तिसंकेते सर्वत्र व्यक्ति[4]रित्येव व्यवहारः स्यान्न तु जाति[5]र्गुणः क्रिया द्रव्यमिति विभाग इति दूषणान्तरसमुच्चयार्थश्चकारः । प्रतिव्यक्तीति । कतिपयासु वेति शेषः । इति-शब्दो हेत्वर्थे । जातिरेव विषयः संकेत[6]स्येत्यत्र जात्यादिर्जातिरेव वा विषय इति पठनीयम् । संग्रहे द्वयोरपि व्यक्तिपक्षप्रतिभटतयोक्तयोरेकस्यैवावतार[7]णायोगादिति व्यक्तिपक्षायोगाद्धेतोर्जात्यादिः संकेतस्य विषयो यद्वा जातिरेव विषय इत्यर्थः । तत्र जात्यादिर्विषय इति वैयाकरणाः । यथाह भगवान् महाभाष्यकारः ।

'गौः शुक्लश्चलो[8] डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः ।'

इति । तथा गवादिशब्दानां जातौ संकेतः । शुक्लादीनां गुणे । पाकादीनां क्रियायाम् । डित्थादीनां द्रव्ये । गुणादयोऽपि जातिवदेकरूपा एव मणिमुकुरादिषु मुखमिवाश्रयभेदाद्भिन्नतयोपलभ्यन्त इति युक्तमेषां संकेतविषयत्वमिति भावः ।

---

१ °क्रियागुणद्रव्य° T., C., M. °गुणद्रव्यक्रिया° G. २ D. drops अपि. ३ K. drops किं. ४ व्यक्तिव्यवहारः K. ५ जातिगुणक्रियाद्रव्यमिति K. ६ संकेतितस्ये° D. ७ °वतरणा° K. ८ °श्चलतीत्यादौ K.

कर्तुमिति जातिरेव विषयः संकेतस्य[1] ॥

**मुख्यं तमर्थमाहुः साक्षाद्यत्रा[2]स्य संकेतः ।
व्यापारोऽपि च मुख्योऽभिधीयतेऽस्याभिधा-
रूपः ॥ २ ॥**

अनुवाद्यानामर्थानां विधेयार्थपरत्वं तात्पर्यमिति व्यापारान्तरं परैरभ्युपगतम् । यथा

---

हिमकर्पूरकमौक्तिकादिषु प्रत्याश्रयं प्रत्यक्षसिद्धतया दुरपह्नवभेदानां गुणादीनामनुवृत्तनिमित्तमन्तरेण संकेतविषयत्वे व्यक्तिपक्षोक्तदोषापत्तिरित्यरुच्या मीमांसकमतमवलम्बते । **जातिरेव** **वेति** । गवादिशब्दानां गोत्वादिजातिर्विषयः । शुक्लादिशब्दानां शुक्लत्वादिजातिः । पचत्यादीनां[3] पाकत्वादि[4]ः । डित्थादौ च वैशेषिकमतेन[5] प्रत्यहं परिमाणभेदतः शरीरभेदकल्पनायां[6] डित्थादावपि जातिरेव विषय इति भावः ॥

मुख्यार्थानुपपत्तावित्यादिवक्ष्यमाणलक्षणालक्षणोपयोगितया पूर्वोक्तस्य वाच्यार्थस्यैव मुख्यव्यपदेशमाह । **मुख्यमित्यादि** । संकेतितार्थ एव मुख्यार्थ इत्यर्थः । **संयोगादिभिरभिधे**त्याद्यभिधाव्यवहारोपयोगितया अभिधां च लक्षयति । **व्यापारोऽपि चे**त्यादि । संकेतितार्थगोचरः शब्दव्यापारोऽभिधा स एव मुख्य इत्याख्यायत इत्यर्थः । एषा च योगपूर्विका रूढिपूर्विका[7] चेति द्विविधा । यथाश्वकर्णादयो निर्मन्थ्यः पतितं[8] पङ्कजादयश्चेति । एतत् प्रसिद्धत्वान्नोक्तम् । इत्यभिधा ॥

अथ मुख्यप्रस्तावात् तत्प्रायं तात्पर्याख्यं व्यापारान्तरमाह । **अनुवाद्यानामि**त्यादि । संसाध्यकं[9] पुनर्वचनमनुवादः । अर्थः प्रयोजनं तथाचाप्राप्तस्यार्थस्य प्राप्तसंबन्धितया विधानमिति तात्पर्यम् । प्राप्तानुवादस्य तदेव तात्पर्यम् । यथा दध्ना जुहोतीत्यत्र वाक्यान्तरप्राप्तहोमानुवादस्य होमे दधिसंबन्धविधानार्थत्वं तदेव तात्पर्यम् । तर्हि संमते किमिति नोक्तम् । तत्राह । **परैरभ्युपगतमिति** । न सर्वसंप्रतिपन्नमित्यर्थः । अत एवोक्तं कैश्चित् ।

---

१ संकेतितस्य D. २ साक्षादत्रापि G. ३ पचनादिषु K. ४ पाकत्वादि K. ५ °मते K. ६ °कल्पनात् K. ७ रूढिपूर्विका योगपूर्विका D. ८ D. omits पतितं. ९ सार्थकं D.

'उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः'

इत्यत्र[1] दर्शनस्य चक्षुःकरण[2]कत्वाव्य[3]भिचारात्तदुपादानं[4] तद्विशेषणार्थं तदेव चात्र विधेयं तत्परत्वमेव तात्पर्यम् ॥

---

'तात्पर्योऽपि व्यङ्ग्यार्थ एव'

इति । स्वयं त्वभ्युपगमसिद्धान्तन्यायादनुमन्यते इति न पृथगुक्तं संमहे । उदाहरति । **यथा उमामित्यादि** । तत्रानुवाद्यविधेये विविनक्ति । **इत्यत्रेति**[5] । तदुपादानं तदनुवादः । अनुवाद्यस्य चक्षुषः प्रमाणान्तरप्राप्तिमाह । **चक्षुःकरणकत्वेति** । यद्दर्शनं तच्चक्षुषैवेति व्याप्त्या व्याप्तमित्यर्थः । अनुवादस्य प्रयोजनमाह । **तद्विशे-षणार्थमिति**[6] । ऋजुनेत्यार्जवविशेषणार्थमित्यर्थः[7] । ननु विधानार्थमनुवादो न विशेषणार्थं तत्राह । **तदेवेति** । तद्विशेषणमार्जवमेवात्र विधेयं विशेष्यस्य चक्षुषः प्राप्तत्वात् । यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र लोहितोष्णीषत्वमिति भावः । अस्तु । तात्पर्यं[8] किमायातं तत्राह । **तत्परत्वमेवेति** । तत्परत्वं तत्पर्यवसितत्वं तदेव तात्पर्यमित्यर्थः । एतदुक्तं भवति । पदार्थज्ञानानन्तरं तेषामाकाङ्क्षादिवशादन्वये पदार्थातिरिक्तो वाक्यार्थरूपो विशेषात्मा तात्पर्यार्थो यद्बलात् समुल्लसति तत् तात्पर्याख्यं व्यापारान्तरमस्त्येव । अत एव

'पदार्थावगम[9]समनन्तरभाविनी समन्वयशक्तिस्तात्पर्यम्'

इत्य**लंकारसर्वस्वसंजीविनीकारो**ऽपि । एतेन तात्पर्यार्थस्य क्वचित् व्यञ्जकत्व[10]मपीष्टमित्यवसेयम् । अत एव तात्पर्यं निरूप्योक्तं **काव्यप्रकाशे** ।

'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते'

**इति तात्पर्यम् ॥**

---

१ इत्यत्रास्या दर्शनस्य D. २ चक्षुकरणत्वा° T., G., C. ३ °व्यभिचारादात्तदु° C., M. ४ °पादानं तत्तद्विशे° T. ५ °त्रेत्यादि K. ६ °विशेषणार्थन्त्वमि° D. ७ °मित्यर्थः K. ८ तात्पर्यं कि° D. ९ °वगमनसम° D. १० °व्यञ्जकत्वमपीत्यवसेयम् K.

**संयोगादिभिरभिधा शृङ्खलिता यत्र कुण्ठतामेति ।**
**अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्र ॥ ३ ॥**

यदाह तत्रभवान्[1] भर्तृहरिः ।

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥' इति[2] ।

तत्र संयोगेन यथा । शङ्खचक्रधरो हरिरित्युक्ते कृष्ण एवाभिधा[3] नियम्यते । विप्रयोगेण यथा । विना रामं[4] सीता[5] दण्डकारण्यमविशदिति[6] दाशरथौ । साहचर्येण यथा । रामलक्ष्मणाविति तत्रैव[7] । विरोधेन यथा । रामार्जुनगतिस्तयोरिति भार्गवकार्त्तवीर्ययोः । अर्थेन यथा । स्थाणुं भज भवभञ्जनायेति हरे[8] । प्रकरणेन यथा । सर्वं जानाति देव इति युष्मदर्थे । लिङ्गेन यथा । कुपितो मकरध्वज इति कुसुमायुधे । शब्दान्तरसांनिध्येन यथा ।

तदेवमभिधां निरूप्य तन्मूलं[9] व्यञ्जनं निरूपयति । **संयोगादिभिरिति** । संयोगादयो वक्ष्यमाणाः पदार्थनिश्चयहेतवः । शृङ्खलिता प्रकृतार्थे नियन्त्रिता । एवकारो व्यापारान्तरव्यावृत्त्यर्थः । तच्चोदाहरणे व्यक्तीकरिष्यते । संयोगादीनामभिधानियामकत्वे वृद्धसंमतिमाह । **यदाहेति** । संयोगः संश्लेषः । विप्रयोगो विश्लेषः । अर्थः प्रयोजनम् । लिङ्गं चिह्नम् । व्यक्तिः स्त्रीपुंनपुंसकम् । स्वर उदात्तादिः । **विना राममिति** । दाशरथिसंयोगिन्या[10] सीतया[11] विप्रयोगोऽपि

१ भगवान् T., G. २ G. omits इति. ३ °मभिधानं T. ४ रामः T., G., C. ५ सीतां T., G., C., M. ६ °रण्यमाविशत् T., C., G., M. ७ C., G., M. omit तत्रैव. ८ हरेः D. ९ तन्मूलिव्यञ्जनं K. १० संयोगिन्याः D. ११ सीताया D.

देवस्य शृङ्गारिण इति तत्रैव । सामर्थ्येन यथा । मधुना मत्तः कोकिल इति वसन्ते । औचित्येन यथा । पातु वो दयितामुखमिति सांमुख्ये । देशेन राजधानीप्रमुखेन यथा । भात्यत्र परमेश्वर इति राजनि । कालेन यथा । चित्रभानुर्विभातीति दिवा दिवाकरे नक्तं तु वह्नौ । व्यक्तिः स्त्रीपुंनपुंसकरूपा । तया यथा । मित्रं दृश्यतामिति वयस्ये मित्रो दृश्यतामिति मयूखमालिनि । स्वरस्तु वेद एव न काव्येऽर्थविशेषावगमाय । आदिशब्दादभिनयादिपरिग्रहः । तत्राभिनयेन यथा ।

'इयद्[1]वक्चित्ता सदा वेश्या प्रतार्यैवं कृता[2] विटैः ।
सिद्धे कार्ये पुनस्तस्यै दत्तमेतन्न काञ्चनम् ॥'.

अपदेशेन यथा ।

'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्' ।

निर्देशेन यथा ।

---

तेनैव न्याय्य इति रामशब्दस्य विप्रयोगाद्दाशरथिपरत्वनिश्चय इत्यर्थः । कुपित इति । कोपचिह्नस्याचेतने ध्वजभेदेऽसंभवादिति भावः । स्वरस्तु वेद इति । इन्द्रशत्रुरित्यत्र पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थनिश्चयः । द्वादशाहीनस्येत्यत्र द्वादशशब्दस्य संख्यास्वरेण द्वन्द्वार्थनिश्चयः । अहीनशब्दस्य मध्योदात्तत्वेनाहर्गणार्थत्वनिश्चय इत्यादि । तदेतत् सम्यक् प्रपञ्चितमस्माभिः स्वरमञ्जरीपरिमलटीकायाम् । अभिनयोऽर्थव्यञ्जिका[3] चेष्टा । तमुदाहरति । इयद्वक्चित्तेति[4] । अत्रैवं[5] कृतेति[6] प्रकारविशेषसंदेहे करतलप्रमार्जनचेष्टया निःस्वीकरणरूपोऽर्थो गम्यते । अभिनयादीत्यादिशब्देनापदेशनिर्देशयोर्ग्रहणमित्याशयेनाह[7] । अपदेशेनेति । उपदेशेनेत्यर्थः । इत इति सर्वनामपरामृष्टार्थसंदेहे नेत इति कथनं निश्चय इति ।

---

१ इयद्वक्चिन्ता T., C., G., M. २ °विटैः कृता G., C., M. ३ °व्यञ्जका D.
४ इदृग्वृत्तेति K. ५ तत्रैवं° K. ६ °भूतेति K. ७ °योः संग्रह इ° K.

भर्तृदारिके दिष्ट्या वर्धसे यदत्रैव कोऽपि कस्या अपि वर्त्तत इति मामङ्गुलि[1]वि[2]लासेन ख्या[3]तवत्यः।

इत्थं संयोगादिभिरभिधायां नियमितायां यदनेकार्थस्य[4] शब्द-स्यार्थान्तरमपि यत्र क्वचन प्रतीतिगोचरीभवति तत्र व्यञ्जना[5]-व्यापार एव प्रगल्भते। यथा

'आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थित[6]मुदग्रविशालशृङ्गम्।
मूर्ध्नि स्फुरत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि[7] न विस्मयते नगेशम्[8]॥'

अत्र[9] तावन्न श्लेषः। केवल[10]प्राकरणिक[11]गतत्वेन केवलाप्राकरणि-कगतत्वेन च तस्य[12] भावात्। नाभिधा। प्राकरणिनियमि[13]तायास्तस्या अप्राकरणि[14]काभिधाने सामर्थ्याभावात्। न तात्पर्यम्। सिद्धानां साध्यार्थपरत्वं[15] तात्पर्य[16]मुच्यते तदुपात्त एव संभवति यथा 'उमां

---

निर्देशोऽङ्गुल्यादिना प्रदर्शनम्। कोऽपीति। किंशब्दः परामृष्टार्थसंदेहे। माध-वस्य मालतीसंखीनामङ्गुलीनिर्देशेन स्वयमेवेति निश्चयः। एवं संयोगादिपदार्थं व्याख्याय वाक्यार्थमाह। इत्थमिति[18]। उदाहरति। आच्छादितेति[19]। अत्र परि-शेषप्रमाणेन व्यञ्जनं साधयति। अत्र तावदित्यादिना दुरपह्नव एवेत्यन्तेन। प्रसक्तं तावत् प्रतिषेधति। न श्लेष इति। स्वमते केवलप्रकृतयोः केवलाप्रकृ-तयोर्वा श्लेषो न तु प्रकृताप्रकृतयोरित्यलंकारोन्मेषे वक्ष्यति। अतो न श्लेषाव-

---

१ °मङ्गुली T., G. २ °विन्यासे° G., C. ३ °नाख्यातवत्यः G., M. ४ °दनेकार्थशब्दस्य D. ५ व्यञ्जनव्या° T., C., G. ६ संश्रित° D., च स्थित° G., C. ७ न भुवि D. ८ गिरीशम् T., G., M. ९ तत्र M. १० D. omits केवल. ११ ततः प्राकर° C., M. १२ तस्याभावात् D. १३ °रणिकगताया° D. १४ °करणिकताभि° G. १५ °परत्वात् ता° D. १६ T. drops उच्यते. १७ मालतीशंसिनाङ्गु° D. १८ इत्थमित्यादि K. १९ आच्छा-दितेत्यादि K.

स पश्यन्नृजुनैव चक्षुषा' इत्यत्र[1] चक्षुषः प्रमाणान्तरत[2] एव सिद्धे[3] दर्शनकरणत्वे विशेषणार्थमुपादानम्। नापि लक्षणा। गवादिपदानां[4] मुख्यार्थबाधादिविरहात्। इत्यभिधातात्पर्यलक्षणारूप[5]व्यापारत्रितयातिवर्त्ती[6][7] ध्वननद्योतनव्यञ्जनप्रत्यायनावगमनादिव्यपदेशनिरूपितश्चतुर्थो[8][9] व्यापारो दुरपह्नव एव। ततश्च शब्दशक्तिमूलानुरणनरूपव्यङ्ग्याभिधानस्य ध्वनेर्महिम्ना नगेशं[10] नगेशमिवेत्यत्रोपमालंकारः[11] प्रतीयते ॥

**शब्दोऽयं लाक्षणिको व्यापारो लक्षणा भवेद्यस्य।**
**एतल्लक्षणमस्याः सामान्यं कथ्यते पूर्वम् ॥ ४ ॥**

---

काश इत्यर्थः। तदुपात्त एव संभवतीति। तत्तात्पर्यमुपात्ते विशेषणविधानार्थमनूदित एव संभवति नान्यत्र। न चात्र[12] किंचिद्विधातुं कस्यचिदनुवादः संभवतीति भावः। प्रसक्तं प्रतिषिध्यान्यत् परिशिनष्टि[13]। इत्यभिधेति[14]। अत्रायं[15] प्रयोगः। विमतमर्थान्तरमभिधादित्रितयातिरिक्तगोचरः। तदभावेऽपि प्रतीयमानार्थत्वात्। यदुक्तसाध्यं[16] न भवति तदुक्तसाधनं च न भवति। यथाभिधेयादीति व्यतिरेकी। न च विशेषणासिद्धो हेतुः। अभिधाद्यभावस्य साधितत्वादिति। नन्वजागलस्तनायमानस्य सिद्धौ[17] किं फलमत आह। ततश्चेति। वाच्यव्यङ्ग्ययोर्नगेशयोरौपम्यमिह[18][19] व्यङ्ग्यं तदेव फलमित्यर्थः।

इत्यभिधामूलव्यङ्ग्यम् ॥

एवं वाच्यवाचकतद्वृत्ति[20] निरूप्य संप्रति तन्मूलतया लक्ष्यलक्षकतद्वृत्ति[21] निरूपय-

---

१ D. drops अत्र. २ प्रमाणान्तर एव G., D. ३ दर्शने सिद्धे D. ४ दिगम्बरादिपदा° T.; गवादिपदार्थानां G. ५ लक्षणानुरूप° G. ६ °त्रया° T., C., M. ७ °निवृत्तिर्ध्वनि° G. ८ व्यपदेशे निरूपित° G.; व्यपदेश्य इति चतु° T. ९ चतुर्थोऽपि व्या° G., C., M. १० गिरीशं गिरीश° T. ११ °वेत्युपमा° T. १२ न च तत्र K. १३ विशिनष्टि K. १४ °भिधेत्यादि K. १५ D. drops अत्र. १६ यत्तत्साध्यं K. १७ सिद्धोक्तिः फल° K. १८ नगेश्वरयोरौ° K. १९ D. drops वाच्य. २० °तद्वृत्तीर्नि° D. २१ °तद्वृत्तीर्नि° D.

**मुख्यार्थानुपपत्तौ तद्योगे रूढितोऽथवापि फलात्[1]।
अन्योऽर्थो यदि लक्ष्यो भवति तदा लक्षणाभिमता[2] ॥ ५ ॥**

मुख्यस्यार्थस्य बाधस्तेन संबन्धः प्रसिद्धिः प्रयोजनं वा लक्षणायामुपयुज्यते। ततश्च मुख्यार्थस्य बाधे तेनैव संबन्धे[3] मुख्येनार्थेना[4]-

र्थज्ञानस्य शब्दज्ञानपूर्वकत्वात् पूर्वं शब्दं निरूपयति । **शब्दोऽयमिति**[5]। लक्षणयार्थप्रतिपादकः शब्दो लाक्षणिक इति लक्षणार्थः । लक्षणयेति वाचकादिव्यावृत्तिः । ननु केयं लक्षणा नाम यद्योगाच्छब्दस्य लाक्षणिकतेत्याकाङ्क्षायां सामान्यलक्षणं तावत् प्रतिजानीते। **एतदिति** ॥

लक्षणमाह[6] । **मुख्यार्थे**त्यादि । मुख्यार्थानुपपत्तिर्वाच्यबाधः । तद्योगो मुख्यार्थाविनाभावः । रूढितः फलतो वेति विभागोक्तिः । रूढिः प्रसिद्धिः । फलं प्रयोजनम् । अन्योऽर्थो मुख्यार्थाविनाभूतस्तटादिर्लक्ष्यः प्रतिपाद्यः । तदेतदभिव्यङ्क्तुं व्याचष्टे । **मुख्यस्ये**त्यादि । संबन्धानुपपत्ती प्रसिद्धिप्रयोजनयोरन्यतरच्च लक्षणाप्रयोजकानीत्यर्थः । अथ लक्षणभागं निष्कृष्य व्याचष्टे । **ततश्चेति** । लक्ष्यत इति यत् स शब्दव्यापारो लक्षणेत्यन्वयः । यच्छब्देन लक्ष्यत इत्यत्र गुणीभूतप्रकृत्यर्थोपलक्षणं प्रतिपादनापरपर्यायं यत् तत् परामृश्यते। **स** इति । तच्छब्देनापि तदेवोच्यते। ततश्च यल्लक्षणप्रतिपादनं सा लक्षणेत्यर्थः। स इति विधेयलिङ्गम् । मुख्यार्थबाधे तत्संबन्धिन्यारोपितः शब्दव्यापारो लक्षणेति निष्कर्षः । ननु किं शब्दो लक्षकोऽर्थो वा। नाद्यः। शब्दस्य स्वार्थप्रकाशनमात्रेणोपरतव्यापारस्य पुनर्व्यापारान्तरायोगात् । न द्वितीयः । अर्थस्य लक्षकत्वे शब्दव्यापारो लक्षणेति कथम् । न च संग्रहे कश्चिन्निश्चय इत्याशङ्क्यार्थस्यैव लक्षकत्वं संग्रहे विवक्षितमित्याशयेनाह । **मुख्येनार्थेनेति** । तर्हि शब्दव्यापार

१ °थवा फलतः T. २ °भिहिता T. ३ संबन्धेन T. ४ मुख्यार्थेना° D. ५ °यमित्यादि K. ६ लक्षणमात्रमाह. D.

मुख्यार्थो[1] यल्लक्ष्यते[2] स आरोपितः[3] शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा। तत्र कुशल इत्यादौ रूढितो लक्षणा। गङ्गायां घोष इत्यादौ तु प्रयोजनात्॥

**शब्दोऽर्पयति परार्थे यद्यात्मानं तदा जहत्स्वार्था।**

---

इति कथं तत्राह। आरोपित इति। वाच्यधर्मस्य वाचके[4] समारोपात् तथा व्यपदेश इति भावः। नन्वर्थस्यैव लक्षकत्वे कथमजहत्स्वार्थायाः[5] स्वार्थांशे वृत्तिविरोधाभावः। केवलसमुदायभेदेन लक्ष्यलक्षकभेदसद्भावादिति संक्षेपः। आरोपितत्वे हेतुमाह। सान्तरार्थनिष्ठ इति। व्यवहितार्थगोचर इत्यर्थः। शब्दस्य स्वार्थ एव मुख्यव्यापारो न व्यवहितेऽर्थान्तरे व्यवहितार्थविषयश्चायमिति युक्तमारोपितत्वमिति भावः। ननु संग्रहे रूढितोऽथवापि फलादिति[6] किमर्थं यतोऽस्य लक्षणान्तःपातित्वे स्वैकैकस्य व्यभिचारात् समुदायस्यासंभवाद्व्यावर्त्याभावेन वैयर्थ्यमित्याशङ्क्य तद्विभागपरमित्यभिप्रेत्य तदुदाहरति। तत्रेत्यादि। कर्मणि कुशल इत्यादौ कुशोपादानरूपावयवार्थासंभवाद्विवेकित्वेन रूढितो लक्षणा। अन्यत्र घोषगतपावित्र्यादिज्ञानफलत्वात्[7] फलतो लक्षणेत्यर्थः॥

इह रूढितो लक्षणैकविधैव। फलतो लक्षणा तु प्रथमं शुद्धा सारोपा साध्यवसाना चेति त्रिधा। तत्राद्या जहदादिभेदेन त्रेधा इतरे तु प्रत्येकं गौणी शुद्धा[8] चेति द्विविधे इत्थं फलतो लक्षणा सप्तविधेति[9] विभागं सिद्धवत्कृत्य क्रमेण तासां सप्तानामपि लक्षणोदाहरणे दर्शयन्नादौ जहत्स्वार्थां लक्षयति। शब्द इत्यादि। शब्दो गङ्गादिशब्दः परार्थे परस्य तटादेर्घोषाद्यधिकरणत्वादिसिद्ध्यर्थमात्मानमर्पयति स्वार्थं हित्वा तटाद्यर्थे प्रवर्त्तयति तदा स्वार्थत्यागाज्जहत्स्वार्थेत्यन्व-

---

१ °मुख्योऽर्थो T. २ यो ल° T., C., G., M. ३ आरोपितशब्द° G., C., M. ४ वाचके सामान्ये वा तथा K. ५ कथं जहत्स्वार्थायां K. ६ °थवा फलत इति K. ७ फलकत्वात् K. ८ शुद्धेति K. ९ लक्षणायां साप्तविध्यमिति K.

त्वत्खड्गधारापयसि प्रवीराः
पतन्ति ये संयति संमुखीनाः ।
वसन्ति ते वीर नृसिंह देव
दुरासदायां सुरदीर्घिकायाम् ॥

अत्र सुरदीर्घिकाशब्दस्य मुख्येऽर्थे स्रोतसि[1] रिपुनगराधिकरणता[2] न संभवतीति[3] सुरदीर्घिकाशब्दो मुख्यार्थे[4] स्रोतोरूपे[5] बाधितस्तमर्थं हित्वा तदधिकरणतासिद्ध्यर्थमात्मानमतिशयितशैत्यपावनत्वादि[6]द्योतनाय परिसराय[7] समर्पयति तेनेयं जहत्स्वार्था समाख्याता[8]। इयमेवाप्रस्तुतप्रशंसादेरलंकारस्य बीजम्[9]। इयं तु लक्षणलक्षणेति[10] परैरभिधीयते ॥

---

र्थसंज्ञेत्यर्थः । उदाहरति । त्वत्खड्ग[11]धारेत्यादि । संमुखस्य दर्शनमेषु ते संमुखीना अभिमुखा इत्यर्थः । "यथामुखसंमुखस्य दर्शने खः" इति खप्रत्ययः । ये त्वया रणेऽभिमुखा[12] हतास्तेषां शाश्वतिकः स्वर्गवास[13] इति तात्पर्यार्थः । लक्ष्ये लक्षणं पातयति । अत्रेत्यादि । मुख्यार्थे बाधकमाह । रिपुनगरेति । जहत्स्वार्थतां व्यनक्ति । तमर्थं हित्वेति । प्रयोजनमाह । शैत्येति । परिसरशब्देन तद्वाचिना लक्ष्यार्थस्य मुख्यार्थेन स्रोतसाविनाभावः सूचितः । अथास्याः स्वशास्त्रो[14]पयोगमाह । इयमेवेति । सामान्यविशेषकार्यकारणस्वरूपाणामन्यतमस्याप्रस्तुतस्य कथनात् तेषामेवान्यतमस्य प्रतियोगिनः प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसा । तत्राप्रस्तुतस्याप्रस्तुतत्वादेव कथनमनुपपन्नं सत् स्वार्थत्यागेन प्रस्तुतमाक्षिपतीति युक्तमस्या जहल्लक्षणामूलत्वमिति भावः । आदिशब्दादनन्वयादिसंग्रहः । ननु काव्यप्रकाशकारेणेयं लक्षणलक्षणेत्युक्तं न जहत्स्वार्थेत्याशङ्कयाह । इयं त्विति । अस्या एव नामान्तरकरणान्न विरोध इति[15] भावः । परार्थं स्वसमर्पणं स्वत्यागो लक्षणं तेनोपलक्षिता लक्षणा लक्षणलक्षणा ॥

---

१ T. drops स्रोतसि. २ रिपुगणाधिक° T., C., M., G. ३ T. drops इति. ४ मुख्येऽर्थे T.; °ख्यार्थस्रो° D. ५ °रूपेण G. ६ °पावनतादि° C., M. ७ परार्थाय T., G., C., M. ८ T. and M. drop समाख्याता. ९ मूलम् G. १० लक्षितलक्षणेति M. ११ °खड्गाति K. १२ °भिमुखा रणे K. १३ स्वर्गावास° K. १४ स्वशास्त्रे उपयोग° K. १५ K. drops इति भावः.

सा विपरीता यस्यां लक्षयति पदं स्ववाच्य-
विपरीतम् ॥ ६ ॥

किंमिव[1] नापकृतमनेन । अत्रोपकारिणं प्रत्यपकृतमिति वचनं बाधितं सदुपकृतमिति[2] लक्षयति । इयमेव व्याजस्तुतेर्बीजम् ॥

सिद्धिं निजक्रियायाः कर्तुं यस्यां[3] परस्य[4] शब्देन ।
आक्षेपः क्रियतेऽसावजहत्स्वार्था समाख्याता ॥ ७ ॥

काव्यालंकारमीमांसातर्कव्याकरणागमाः[7] ।
प्रविशन्ति तवास्थानीं[5] नरसिंह नरेश्वर[6] ॥

अत्र स्वार्थमजहत एव काव्यादयः स्वप्रवेशरूपक्रियासिद्धये

अस्या एव विधान्तरं लक्षयति । सेति । स्वार्थत्यागेन तद्विरुद्धार्थलक्षणा विपरीतलक्षणा[8] साप्यन्या जहत्स्वार्थेत्यर्थः[9] । उदाहरति । किमिवेति । अत्रापि लक्षणं योजयति । अत्रोपकारिणमिति । उपकारिणि व्याजस्तुत्या प्रयुक्तोऽपकृतशब्दः स्वार्थत्यागेन तद्विपरीतमुपकारमेव लक्षयतीत्यर्थः । अस्या[10] अपि स्वव्यापारोपयोगमाह[11] । इयमेवेति । यत्र वाच्यया निन्दया स्तुतिः स्तुत्या वा निन्दा गम्यते सा व्याजस्तुतिः । तत्र विपरीतार्थप्रतीतिर्विरुद्धलक्षणामूलेति भावः ॥

अजहत्स्वार्थां लक्षयति । सिद्धिमिति । यत्र[12] शब्देन स्वार्थगतक्रियासिद्धये स्वार्थापरित्यागेनैव तद्विशिष्टमर्थान्तरं लक्ष्यते यथा कुन्ताः प्रविशन्तीत्यत्र कुन्तप्रवेशाय तद्वन्तः पुरुषा असावजहत्स्वार्था लक्षणेत्यर्थः । उदाहरति । काव्येति । अत्रापि लक्ष्ये लक्षणं संभावयति । अत्र स्वार्थमित्यादि । नन्वत्र स्वार्थाप-

१ किं वा M. २ °पकृतिमेव D. ३ यस्याः M. ४ परस्परं शब्देन D. ५ तवास्थानं M. ६ महेश्वर T. ७ काव्यालंकारादयः T. ८ K. omits विपरीतलक्षणा. ९ K. inserts विपरीतरूपा before जहत्स्वार्थे°. १० अत्रापि K. ११ °पकार° K. १२ K. omits यत्र.

तत्संबन्धिनो विदुषो[1] लक्षयन्ति माहात्म्यद्योतनं तु प्रयोजनम्। इयमेव समासोक्त्यादेर्बीजम् । इयं पुनरुपादानलक्षणेति मतान्तरे गीयते ॥

**अंशेनैकेन पुनर्जहाति न[2] जहाति चान्येन । शब्दः स्वार्थं यदि जहदजहत्स्वार्था समा-ख्याता ॥ ८ ॥**

---

रित्यागे स्वार्थांशेऽभिधा अंशान्तरे लक्षणा चेत्येकस्यैव शब्दस्यैकदा वृत्तिद्वयापत्तिः । नैष दोषः । अत्रापि स्वार्थं हित्वैव तद्विशिष्टार्थान्तर[3]लक्षणात् । किं त्वभिधातः प्राग्[4]वद्वाच्यस्यैव लक्ष्यत्वेन तस्यापि स्वीकारादजहत्स्वार्थेति व्यपदेशः । गङ्गायां घोष इत्यादौ तु तदपि नास्ति सा जहत्स्वार्थेति भेद इति संतोष्टव्यम् । तदेवो-त्सूचयति । **तत्संबन्धिनो विदुषो लक्षयन्तीति** । तेन स्वार्थेन संबन्धिन-स्तद्विशिष्टानित्यर्थः । **इयमेव समासोक्त्यादेर्बीजमिति** । प्रस्तुतविशेषणसाम्या-दप्रस्तुत[5]स्य गम्यत्वे समासोक्तिः । यथा 'उदारकीर्तेरुदयं दयावतः' इत्यत्र निर्बाधरक्षितस्वोपस्कृतस्वदोहनादिविशेषणमहिम्ना मेदिन्यां गोत्वप्रतीतिः । तत्र दोहनक्रियासिद्ध्यर्थं मेदिन्याः स्वरूपानुपमर्देन गोत्वाक्षेपादजहल्लक्षणामूलत्वमिति भावः । **इयं पुनरुपादानलक्षणेति** । उपादानं स्वार्थापरित्यागस्तेनोपलक्षिता लक्षणोपादानलक्षणेत्यर्थः ॥

इह जहत्स्वार्थाजहत्स्वार्था चेति द्विधैव शुद्धेति **काव्यप्रकाशकारः** । तदुक्तम् ।

'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥' इति ।

---

१ स्वसंबन्धि° T., C., G., M. २ चान्येन न जहाति T.; नैनं जहाति चान्येन G., C., M. ३ °र्थान्तरा लक्षणा K. ४ प्रत्याय्य लक्षत्वेन D. ५ °मस्तुतत्व° D.

यत्कर्णतालप्रभवैः समीरैः[1]

प्रतापदीपाः शमिता रिपूणाम् ।

सोऽयं तव न्यक्कृतदिक्करीन्द्र-

लीलायितो वीर करेणुराजः ॥

अत्र यद्देशकालविशिष्टत्वं वारणेन्द्र[2]स्य पूर्वमासीत्तद्देशकालविशिष्टत्वमधुना नास्तीति सोऽयमित्यत्र तत्तांशे[3] जहाति स्वार्थमिदन्तांशे तु[4] न जहातीति जहदजहत्स्वार्थेयम् ॥

---

तदन्यथाकरणाय[5] तृतीयामाह[6] । अंशेनेति । उदाहरति । यत्कर्णतालेति[7] । लक्ष्ये लक्षणं योजयति । यद्देशेत्यादि । इदन्तांशे तु न जहातीति । एतद्देश[8]कालवैशिष्ट्यस्य संभवादिति भावः । अयमाशयः । किमिह लक्षणैव नास्तीति विवक्षया द्विधैवेत्युक्तं परैरुत सत्यापि तत्रैवान्तर्भूतेति विवक्षया वा । नाद्यः । विचारासहत्वात् । तथा हि यावता शब्देन यावनर्थः प्रतीयते तावानेव तस्य स्वार्थो न न्यूनो नाधिकश्च । प्रतीयते च सोऽयं वारणेन्द्र इति पदत्रयेणा[9]पाततस्तावत्तत्तेदन्ताविशिष्टं वस्त्विति तावानस्यार्थः । अत्र[10] तत्तांशबाधे[11] न्यूनोऽयमस्यार्थः कथमनेनाभिधीयेत तथापि प्रतीयत इत्यकामेनापि तत्तोपलक्षितमिदन्ताविशिष्टं वस्तु लक्ष्येत[12] इत्याश्रयणीयमेवेति कथमत्र नास्ति लक्षणा । नापि द्वितीयः । न तावदियं जहत्स्वार्था । एकांश[13]मात्रहान्या गङ्गायां घोष इतिवत् परार्थे स्वसमर्पणाभावात् । नाप्यजहत्स्वार्था । कुन्ताः प्रविशन्तीतिवत् स्वसिद्धये परानाक्षेपात् । किं तु स्वार्थस्यैवांशभेदेन हानाहानाभ्यामुभयवैलक्षण्यादन्यैवेति सुष्ठूक्तं शुद्धा त्रिवि[14]धेति । वेदान्तिनश्चैतामेवोपजीव्य महावाक्यार्थं वर्णयन्ति । किं तु[15] सोऽयं देवदत्त इत्यत्र तत्तांशवदिदन्तांशस्यापि त्यागेन स्वरूपमात्रा[16]परित्यागेन चोपल[17]-

---

१ T. inserts यथा before the verse यत्कर्ण°. २ वारणस्य T. ३ तत्तांशेन T., G., C., M. ४ °मिदन्तांशेन न जहाति T., C., G., M. ५ °करणतृती° D. ६ तृतीयां विधामाह D. ७ °तालेत्यादि K. ८ द्विधेत्यु° D. ९ °त्रयेण सा ततस्तत्तेद° K. १० तत्र K. ११ तत्तांशादेर्न्यूनो° K. १२ लक्षितमि° K. १३ पकार्थमा° K. १४ त्रिधेति K. १५ D. drops किं तु. १६ °मात्रात्या° K. १७ °चोभयोपल° D.

**विषयी विषयश्च यदा सारोपा स्यात्तदा द्विविधा ।**

**आरोप्यमाणारोपविषयौ यदानपह्नुतस्वरूपौ सामानाधिकरण्येन निर्दिश्येते तदा सारोपा । इयं च द्विविधा गौणी शुद्धा चेति । तत्र गौणी गुणाध्यारोपरूपात् सादृश्यात् प्रवर्त्तते ।**

**यथा**

---

क्षितं स्वरूपमात्रं लक्ष्यत इत्युक्त्वा तद्दृष्टान्तेन महावाक्येऽपि तत्त्वंपदार्थगतविशेषत्यागेन स्वरूपत्यागेन चोपलक्षितमेकमखण्डं वस्तु जहदजहल्लक्षणया प्रतिपाद्यत इत्येतावान् विशेष इत्यलं प्रसक्तानुप्रसक्त्या । अत्रायं लक्षणासंक्षेपः ।

'स्वार्थास्यागे समानेऽपि सह तेनान्यलक्षणा ।
यत्रेयमजहत्स्वार्था जहत्स्वार्था तु तं विना ॥
स्वार्थैकांशत्यागादंशान्तरमेव लक्ष्यते यत्र ।
सा जहदजहत्स्वार्था तत्त्वमसीत्यादिविषयदृश्येयम् ॥' इति ।

एवं त्रिविधापि शुद्धोक्ता ॥

अथ सारोपलक्षणाया लक्षणं विभागं चाह । **विषयीत्यादि** । विषयादिपदार्थान् विभजन्नेव लक्षणं व्याचष्टे । **आरोप्यमाणेत्यादि** । एतेन साध्यवसानातो भेद उक्तः । संग्रहे सारोपा द्विधेत्युक्तं किं तद्द्वैविध्यं तत्राह । **इयं चेति** । तत्र गौणी गुणतः सादृश्यनिमित्ता । यथाग्निर्माणवक इति । शुद्धा सादृश्येतरकार्यकारणभावादिसंबन्धनिमित्ता । यथा आयुर्घृतमित्यादिकेति भावः । एतेन लक्षणायाः पृथग्भूता गौणी वृत्तिरिति तान्त्रिकसमयः परास्त इति वेदितव्यम् । वक्ष्यमाणरीत्या लक्षणान्तर्भावादिति । तत्र गौण्याः प्रवृत्तिनिमित्तमाह । **तत्र गौणीति** । गुणतः सादृश्यमस्याः प्रवृत्तिनिमित्तमित्यर्थः । यथाहुराचार्याः ।

'अग्निस्वलक्षितार्थाद्यस्पैङ्गल्यादि गम्यते ।
तेन माणवके बुद्धिः सादृश्यादुपजायते ॥' इति

---

१ °वाक्येनापि K. २ चोभयोपल° D. ३ सारोपाया लक्ष° D. ४ D. drops विषयादि ५ विविञ्चन् K. ६ °त्यादिकामिति भावः. K. ७ K. drops इति वेदितव्यम्. ८ °भस्यां K

वीरश्रीस्वरसाभिसाररजनीनिर्माणकर्मान्तिक-
च्छायाकन्दलितान्धकारकलिकातापिच्छिताशाञ्चलः।
जीयादुत्कलभूमिपाल भवतः खड्गो रणप्राङ्गणे
शत्रुक्षोणिभृताममर्त्यनगरीयात्रासु कार्त्तान्तिकः॥

अत्र रिपु[1]विषयसुरपुरप्रस्थानोपदेशकारित्वादयो मौहूर्त्तिकगु[2]णा लक्ष्यमाणा अपि प्र[3]वृत्तिनिमित्ततां भजन्ते। ताद्रूप्यप्रतीतिः प्र[4]यो-

---

सादृश्यनिमित्ता लक्षितलक्षणेयं न तु मुख्यार्थाविनाभावमूलेत्यर्थः। गौणीमुदाहरति। वीरश्रीत्यादि। इह वीरश्रीरभिसारिका तस्याः स्वरसाभिसारः स्वेच्छाभिसरणं तदर्थं रजनीनिर्माणे कर्मान्तिकया सृष्ट्या छायया स्वभासा कन्दलिताभिरुत्पादिताभिरन्धकारकलिकाभिस्तापिच्छितास्तापिच्छवन्तस्तमालवन्तः कृताः श्यामलिता इत्यर्थः। तापिच्छशब्दात् "तत्करोति" इति ण्यन्तात् कर्मणि क्तः। प्राविष्ठवद्भावे "विन्मतोर्लुक्" इति मतुपो लुक्। ते आशाञ्चला दिगन्ता येन स तथोक्तः। कार्त्तान्तिको मौहूर्त्तिकः। इह कार्त्तान्तिकः खड्ग इत्युदाहरणम्। तत्र गौणीं व्युत्पादयति। अत्रेत्यादि। कार्त्तान्तिकशब्देन लक्ष्यमाणतद्गुणयोगनिमित्ता खड्गे लक्षणा गौणलक्षणा। यथाहुः।

'अभिधेयाविनाभूते प्रतीतिर्लक्षणेष्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥' इति।

सा च विषयनिगरणाभावात् सारोपेत्यर्थः। गुणाः स्वपरार्थसाधारण्येन लक्षणीयाः। अन्यथा स्वार्थगतानामर्थान्तरप्रवृत्तिनिमित्तत्वे वैयधिकरण्यदोषः। परार्थगतानां स्वार्थासंबन्धानां लक्ष्यत्वानुपपत्तिः। साधारण्ये तु नैतद्दोषावकाशः इत्याहुः। ताद्रूप्येति। तेनारोप्यमाणरूपेण रूपवत्तदुपरक्तत्वमिति यावत्। न तु तादात्म्यम्। विषयनिगरणविरहिण्यारोपे तदसंभवात्। शुद्धसारोपां लक्षयति।

---

१ T., C., G. and M. omit the words रिपुविषयसुरपुर. २ मौहूर्तिकगतगुणा G.; मौहूर्त्तिकगता गुणा C., M. ३ C., and M. insert रूपाणे after अपि. ४ D. has °प्रतीतिस्तु प्रयो°. ५ °लक्षणोच्यते K. ६ गुणाश्च स्वपदान्याश्रयेण K. ७ ताद्रूप्येण रोप्यमाणरूपेण D. ८ रूपवत्र रक्तपटवत्तदुप° D.

जनम् । शुद्धा पुनरुपचारवती । सादृश्येतरकार्यकारणत्वादिसंबन्धान्तरकारिणी वा । यथा

मदक्षीबक्षोणीपतिपरिषदायोधनमही–
जयाङ्कश्रीशङ्कावहगुणकिणश्रेणिललितः ।
भुवो भारं वोढुं भुजगपतिभोगप्रतिभट-
स्त्रिलोकीकल्याणं जयति तव दोरुत्कलपते ॥

अत्र कल्याणहेतुत्वात् कल्याणम् । अत्रापि ताद्रूप्यप्रतीतिः प्रयोजनम् । इयमेव रूपकादेर्बीजम् । उपचारश्च कार्यकारणभावादेर्निमित्तस्य पाञ्चविध्यात् पञ्चधा भवति । कार्यकारणभावे प्रागेवो-

---

शुद्धेति । अतत्त्वस्य तत्त्वेन व्यपदेश उपचारः । तद्वती । तद्वत्ता च सादृश्येतरसंबन्धान्तरनिमित्ता न तु सादृश्यनिमित्ता । अन्यथा गौण्यामतिव्याप्तेरित्यभिप्रेत्याह । सादृश्येतरेति । आदिग्रहणाद्वक्ष्यमाणतादात्म्यादिसंग्रहः । सादृश्येतरसंबन्धविशेषनिमित्ता शुद्धसारोपा यथा । आयुर्घृतमित्यादिकमित्यर्थः । स्वयमुदाहरति । मदेत्यादि । क्षीबो मत्तः । क्षीबृ मद इति धातोर्निष्ठायाम् "अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः" इतीटोऽभावतलोपयोर्निपातनात् साधुः । जयाङ्का जयचिह्ना श्रीर्जयश्रीरित्यर्थः । इह कल्याणं दोरित्युदाहरणम् । तत्र कल्याणहेतौ दोष्णि कल्याणशब्दस्य प्रवृत्तिनिमित्तं कार्यकारणभावसंबन्ध इत्याह । अत्र कल्याणेति । ताद्रूप्यं तद्रूपरक्तत्वमित्युक्तम् । स्वशास्त्रोपयोगमाह । इयमेवेति । इयं द्विविधापि सारोपलक्षणेत्यर्थः । मुखं चन्द्रः नेत्रानन्दश्चन्द्र इति चोभयमूलत्वेनापि रूपकस्योत्थानादिति । कार्यकारणभावादीत्यादिशब्दग्राह्याणि संबन्धान्तराणि दर्शयंस्तन्निमित्तमुपचारं पञ्चधा भिनत्ति । उपचारश्चेत्यादि । उपचारश्चातत्त्वस्य तत्त्वेन व्यपदेश इत्युक्तम् । प्रागेवोदाहृतमिति । कल्याणं दोरित्यत्रेत्यर्थः । अत्रैतद्भुजपालितानां नित्यमङ्गलमस्तीति व्यङ्ग्यम् । एवमुत्तरत्रापि

---

१ T., G., C., M. have उपचारश्च कार्यकारणभावादेर्निमित्तस्य पाञ्चविध्यात् पञ्चधा। तत्र कार्यकारणभावेन यथा for सादृश्ये°......वा. २ T., C., G., M. drop the words from अत्रापि ताद्रूप्य° to प्रागेवोदाहृतम्. ३ जयशब्दचिह्ना D. ४ °चारं च प° D. ५ नित्यं D.

दाहृतम्। तादर्थ्ये यथा। इन्द्रार्था स्थूणा इन्द्रः। स्वस्वामिभाव[1]-लक्षणसंबन्धे यथा। राजकीयः पुरुषो राजा। अवयवावयवि-भावे[2] यथा। अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः[3]। तात्कर्म्ये[4] यथा। अतक्षा तक्षा॥[5]

**विषयिनिगीर्णे विषये साध्यवसाना द्विधा ख्याता॥ ९॥**

द्विधा गौणी शुद्धा चेति। तत्राद्या यथा। अयं पारिजात इत्यत्र वितरणचणत्वादयः पारिजातस्य[6] गुणा वीरनरसिंहे[7] लक्ष्यमाणा अपि प्रवृत्तिनिमित्ततां भजन्ते। प्रयोजनं च सर्वथैवाभिन्नत्व-

---

क्रमादिष्टार्थप्रदत्वानुल्लङ्घनीयत्वसामर्थ्यातिशयकौशलविशेषा व्यङ्ग्या इति द्रष्टव्यम्। तत्र[8] हस्तसमानसारताद्योतनाय हस्ताग्र एव लक्षणया हस्तशब्दप्रयोगादग्रं चासौ हस्तश्चेति समानाधिकरणसमासश्च। अत एव 'हस्ताग्रा अग्रहस्ता अग्रद्वयोर्गुणगुणिनोर्भेदात्' इति वामनः॥

अथ साध्यवसानाया लक्षणमाह। विषयीति। यत्र[9] विषयिणारोप्यमाणेनान्यापदिष्टा विषयस्यारोपणाधिष्ठानस्य माणवकादेर्निगरणमत्यन्तापलापः क्रियते यथा घृतमाणवकयोरिदमायुरयमग्निरित्यादि सा लक्षणा साध्यवसानलक्षणेत्यर्थः। विभजति[10]। द्विधेत्यादि। अत्रापि पूर्ववत् सादृश्यनिमित्ता गौणी संबन्धान्तरनिमित्ता च। यथायमग्निरिदमायुरिति चेत्यनुसंधेयम्। सर्वथैवाभिन्नत्वप्रतीतिरिति[11]। अयं पारिजात इत्यत्रेदं शब्दो[12] न राजाख्यविषयपरामर्शी[13]। तथा[14] सारोपत्वप्रसङ्गात्। किं तु तत्रत्येदन्तामात्रं परामृशन्[15] विषयिणमारोप्यमाणं पारिजातमेव पुरोवर्त्य-

---

१ स्वस्वामिभावसंबन्धे G.; स्वस्वामिसंबन्धे D. २ C. has स्वभावे after °विभावे. ३ अग्रहस्तमात्रेऽवयवे हस्तः G., C., M. ४ तात्कार्ये D. ५ T., C., G., M. have अत्र ताद्रूप्य (°द्रुप्य M.) प्रतीतिः फल (प्रयाजनं T.)म्। इयमेव रूपकादे (°कादौ T.) बीजम् after तक्षा. ६ पारिजातगुणा G. ७ नृसिंहे T., G. ८ K. omits तत्र. ९ K. omits यत्र. १० विभजते D. ११ सर्वदैवा° K. १२ शब्दे D. १३ °परामर्शः D. १४ तथा K. १५ परामर्शन K.

प्रतीतिः । अन्यथा यथा । अयमानन्द इत्यत्रानन्दहेतुत्वादानन्दः । इयमेवातिशयोक्तेर्बीजम् ॥

**इत्यस्माभिर्भिदाः सप्त लक्षणायाः प्रदर्शिताः ।**
**संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ॥ १० ॥**

भेदाध्यवसायेनेदन्तया विशिनष्टि । तद्विशिष्टविषयी पारिजातो भिन्नविषयितया तादात्म्येन प्रतीयते । तदिह लक्षणायाः प्रयोजनमित्यर्थः । एवमयमानन्द इत्यत्राप्यूहनीयम् । केवलमिह सादृश्यादध्यवसानं तत्र तु संबन्धान्तरादिति भेदः । अत्रापि स्वशास्त्रोपयोगमाह । **इयमेवेति** । अध्यवसितप्राधान्ये त्वतिशयोक्तिरिति तल्लक्षणादिति भावः । इयमुभयरूपापि साध्यवसानलक्षणेत्यर्थः । उपसंहरति । **इत्यस्माभिरिति** । यदुक्तं काव्यप्रकाशे 'लक्षणा तेन षड्विधा' इति तत् प्रतिक्षिपति । **सप्तेति** । जहत्स्वार्थाजहत्स्वार्था जहदजहत्स्वार्था गौणसारोपा शुद्धसारोपा गौणसाध्यवसाना शुद्धसाध्यवसाना चेत्येवं सप्त भेदाः फलतो लक्षणायाः प्रदर्शिता इत्यर्थः । अस्मद्ग्रहणं विशेषदर्शित्वाभिमानसूचनार्थम् । विशेषश्चास्माभिर्व्याख्यातः प्राक् । अत्र गङ्गायां घोषः कुन्ताः प्रविशन्ति सोऽयं देवदत्त इति च जहदादयस्तिस्रः । आयुर्घृतमायुरेवेदमिति च सारोपसाध्यवसाने द्वे चेत्येवं पञ्च शुद्धाः । अग्निर्माणवकोऽयमग्निरिति द्वे गौण्यौ । तयोर्गुणयोगादेव शुद्धाभ्यः पञ्चभ्यो भेदः । शुद्धत्वं तासामगौणत्वमेव । आरोपाध्यवसानाभ्यामेव गौण्योरन्योन्यभेदः । सारोपसाध्यवसानशुद्धयोश्च ताभ्यामेवान्योन्यभेदः । जहदादित्रिशुद्धाभ्यस्तु कार्यकारणभावादिसंबन्धनिबन्धनोपचाराद्भेद इति न कुत्रापि संकरशङ्काकलङ्कावकाशः ॥

**संकरेणेत्यादि** । सप्तानामेकैकस्याश्चातुर्विध्यादष्टाविंशतिभेदा भवन्तीत्यर्थः । संकलनं मेलनम् । शुद्धभेदैरसंकलितभेदैरित्यर्थः । अष्टाविंशतेः सप्ताधिक्यात् पञ्च-

---

१ °प्रतिपत्तिः D. २ अन्या D. ३ प्रकीर्तिताः T. ४ विजातीयवि° D. ५ न तु K. ६ लक्षणा° K. ७ °भेदा° D. ८ पञ्चभ्योऽपि D. ९ शुद्धत्वं च तासा° D. १० तयोरन्योन्य° K. ११ °भेदात् D. १२ °संबन्धेनोपचारा° D. १३ K. drops कलङ्क.

अस्याः संकलनेऽन्योन्यमष्टाविंशतिरीरिताः।
पञ्चत्रिंशत् समाख्याताः शुद्धभेदैः[1] समं पुनः॥११॥
स्वैः प्रभेदैरलंकारैर्ध्वनिभेदैश्च संगता।
वितन्वती चमत्कारं संख्यामत्सरिणी मता॥१२॥

अङ्गाङ्गिभावेन संशयेनैकैकलक्षकानुप्रवेशेन च[2] भवन् संकरो न त्रिरूपतामतिवर्त्तते। क्रमेण यथा।

आक्रम्य स्मरवैरिशेखरसरित्पूरैकसिंहासनं
राजानं नरसिंह पार्थिव तथाहंकारभारोद्धुरः।
त्वत्कीर्त्तिप्रसरो हसत्ययमसौ शक्रस्य दन्तावलं
व्यालेन्द्रं मुसलायुधं[3] किमपरं देव्याश्च पञ्चाननम्॥

अत्राहंकारभारोद्धुरस्त्वत्कीर्त्तिप्रसरो यतस्तत एव हसतीत्यनयोः सजातीययोरङ्गाङ्गिभावेन संकरः॥

---

त्रिशङ्कराः स्युरित्यर्थः। स्वैः प्रभेदैर्[4]लक्षणाभेदैरित्यर्थः। संख्यामत्सरिणी असंख्येत्यर्थः। यदुक्तं संकरेण त्रिरूपेणेति तद्विभजते। अङ्गाङ्गिभावेनेति। आक्रम्येत्यादि। राजानं चन्द्रं नृपं च। 'राजा प्रभौ नृपे चन्द्रे' इति विश्वः। दन्तावलो दन्ती[5]। "दन्तशिखात्संज्ञायाम्" इति मत्वर्थीयो वलच्प्रत्ययः। "वले" इति दीर्घः। व्यालेन्द्रो भुजगेन्द्रः शेष इत्यर्थः। देव्याश्चण्डिकायाः पञ्चाननं वाहनसिंहमित्यर्थः। यः किल सिंहासनारूढो राजविजयी सोऽहंकरोति[6]। अहंकारमत्तश्च परान् हसतीति भावः। अत्र का लक्षणा कथं चाङ्गाङ्गिभाव इत्याकाङ्क्षायामाह। अत्राहंकारेति। अहंकारस्य हासहेतुत्वेन तच्छेषतया तदङ्गमित्यर्थः। अहंकारहासयोरचेतनकीर्त्तिप्रसरेऽसंभवादहंकारशब्देन तद्धेतुः कीर्त्तिगतधावल्यविशेषो लक्ष्यते। हासशब्देन तद्धेतुः सादृश्यं लक्ष्यत[7] इत्यनयोरुक्तरीत्याङ्गाङ्गिभावेन संकर इति भावः॥

---

१ शुद्धाभेदैः G. २ T. and D. drop च. ३ सहलायुधं D. ४ स्वप्रभेदै° D.
५ K. omits दन्ती. ६ सोऽयं कीर्त्तिप्रसरोऽहंकार° K. ७ सादृश्यमित्य° K.

एष चिन्तामणिः[1] किं नु किं न्वयं कल्पपादपः ।
किं वासौ[2] कामधेनुर्वा न चेत्त्यागः[3] किमीदृशः ॥

अत्र यद्येष इति विशेष्यं तदा सारोपेयम् । आहोस्विद्विशेषणं तदा साध्यवसानेत्यन्यतरानवधारणात् संदेहेनायं संकरः ॥

राकातारकराजमण्डलमहः[4] पाण्डित्यवैतण्डिकी
कीर्तिस्ते विदधाति यद्यपि जगच्छ्वेतं समन्तादपि ।
चित्रं वीर नृसिंह देव तदपि प्रत्यर्थिनामानना-
न्यालिङ्गन्ति[5] रुचं शिखावलशिखारिञ्छोलितापिच्छयोः ॥

---

संदेहसंकरमुदाहरति । एष इत्यादि । अत्रापि का लक्षणा कथं च संदेह इत्याकाङ्क्षायामाह । अत्र यदीति[6] । इह चिन्तामणिरित्यादौ निरतिशयवितरणगुणयोगात् सादृश्यनिमित्ता गौणी लक्षणेति तावदविवादम् । तत्रैष इत्यादिसर्वनाम्नाभिदन्ताविशिष्टराजरूपविशेष्यनिष्ठत्वे विषयनिगरणाभावादग्निर्माणवक इतिवत् सारोपा स्यादिदन्तामात्रनिष्ठत्वे तु[7] विषयनिगरणादयमग्निरितिवत् साध्यवसाना स्यात् । अत्रान्यतरनिश्चायकाभावेनेयमियं वेत्येकस्मिन्[8] संदेहज्ञाने[9]विषयतया संकीर्यमाणत्वात् संदेहसंकर इत्यर्थः ॥

तृतीयमुदाहरति । राकेत्यादि । नक्षत्रे तारकं तारकेति चाभिधानात् तारकशब्दस्य नपुंसकप्रयोगः । इह पाण्डित्यशब्देन औचित्याद्धावल्यातिशयो लक्ष्यते तस्य वैतण्डिकी खण्डनेत्यर्थः । स्वपक्षस्यापनहीना[10] परपक्षखण्डनवती कथा वितण्डा तां वेदेति वैतण्डिकी । "तदधीते तद्वेद" इति ठक् । शिखास्यास्तीति शिखावलः शिखी केकीत्यर्थः । "दन्तशिखात् संज्ञायाम्" इति वलच् । तस्य शिखा चूडा सैव रिञ्छोलिस्तापिच्छस्तमालस्तयोः रुचमालिङ्गन्ति[11] मलिनीभवन्तीत्यर्थः । अत्र सारोपसाध्यवसानलक्षणयोरेकलक्षकानुप्रवेशेन संकरं

---

१ किं वायं D. २ चासौ G., C. ३ नरे त्यागः D. ४ तारकमण्डलस्थितमहः° G.
५ °न्यालिम्पन्ति रुचां D. ६ यदिति K. ७ D. drops तु. ८ °त्यस्मिन् K,
९ K. drops ज्ञान. १० °स्थापनही° K. ११ रूपमालिम्पन्ति D.

अत्र वैतण्डिकत्वेन कीर्त्तेरारोपात्[1] सारोपा तावत्पाण्डित्यस्य शुभ्रत्वक्रोडीकारेण प्रवृत्तत्वात्[2] साध्यवसाना च। समासे सत्येकपदवद्भावादिति[3] सहासनोपवेशिन्योरनयोरेकलक्षकानुप्रवेशेन संकरः॥

दर्शयति। अत्रेति।[4] तत्र सारोपां दर्शयति। वैतण्डिकत्वेनेति। कीर्त्तिर्वैतण्डिकीति विषयनिगरणं विना कीर्त्तौ वैतण्डिकत्वारोपात् सारोपेयं लक्षणा गौणीत्यर्थः। साध्यवसानां च दर्शयति। पाण्डित्यस्येति।[5] शुभ्रत्वस्य विषयभूतस्य क्रोडीकारो गर्भीकारो निगरणमिति यावत्। तेन तच्च पाण्डित्याध्यवसानात् साध्यवसानलक्षणेत्यर्थः। तथापि कथमनयोर्भिन्नपदस्थयोः संकर इत्याशङ्क्याह। समासे सतीति। इह "समर्थः पदविधिः" इति समर्थयोः पदयोः समासः सामर्थ्यं च द्विविधं व्यपेक्षालक्षणमेकार्थीभावलक्षणं च। तत्राद्यं विग्रह[6]वाक्यविषयं द्वितीयं च समासगोचरम्[7]। तथा च पाण्डित्यवैतण्डिकीति[8] समासे पाण्डित्यवैतण्डिकपदयोरेकार्थीभावलक्षणसामर्थ्यात् क्षीरनीरवदेकलोलीभावेनैकपदे[9] तत्रैकत्र समासपदे द्वयोः समावेशादेकलक्षकानुप्रवेशलक्षणः संकर इत्यर्थः। नन्वेकपदानुप्रवेशेऽपि समासावयवगतयोः कथमेकलक्षकानुप्रवेशस्तत्राह। एकपदवद्भावादिति। एकलक्षकवद्भावादित्यर्थः। अन्यथा समासस्य मुख्यैकपदत्वे वतिप्रत्ययानुपपत्तेः। संप्रति तु वस्तुतो भिन्नयोरपि समासपदक्रोडीकारतिरोहितभेदयोरेकलक्षकवद्भावाद्वतिप्रत्ययोपपत्तिः। अत्रानुकूलं दृष्टान्तमाह। सहासनोपवेशिन्योरिति। यथैकस्मिन्नासने सहोपविष्टयोः प्रदेशभेदेऽपि [10]प्रदेशभेदात् समानदेशत्वव्यपदेशस्तद्वद्भिन्नावयववर्त्तिन्योरप्यनयोरेकयोरेकलक्षकानुप्रवेशव्यपदेशो न विरुद्ध इत्यर्थः[11]॥

१ °रारोपणात् T., G., C., M. २ प्रवृत्तत्वेन D. ३ सत्येकपदत्वादिह T., C., G., M. ४ अत्र K. ५ पाण्डित्यस्य शुभ्रत्वस्य D. ६ K. omits विग्रह. ७ समासविषयम् K. ८ तथा च सति पाण्डित्य° D. ९ क्षीरवदे° K. १० व्यपदेश्य° K. ११ इति भावः K.

संसृष्टिर्यथा ॥

द्विर्भावः पुष्पकेतोर्विबुधविटपिनः पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः ।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्व-
न्नानन्दं कोविदानां जगति विजयते भूपतिः श्रीनृसिंहः ॥

इयं सजातीयगौणसारोपाणां संसृष्टिः ।

सजातीयशुद्धसारोपाणां यथा ।

आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्त्तिमान्
विश्वासो नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः[2] परः ।
आनन्दः कलिकाकृतिः[3] सुमनसां वीरश्रियो[4] जीवितं
धर्मस्यैव[5] महोदयो[6] विजयते वीरः कलिङ्गेश्वरः ॥

एवमन्यासामपि लक्षणानां संकरसंसृष्टी द्रष्टव्ये । सर्वत्र चात्र प्रयोजनं व्यङ्ग्यमेव ॥

---

संसृष्टिमुदाहरति । द्विर्भाव इत्यादि । द्विः प्रयोगो[7] द्विर्वचनमिति पक्षे तस्यैव रूपान्तरं द्विर्भावः । एवं पौनरुक्त्यादिशब्दा अपि तत्पर्यायाः । इह मदनमन्दारादि-गुणयोगेन द्विर्भावादिशब्दानां विषयनिगरणं विना नृसिंहे प्रयोगात् सादृश्यनि-मित्ता गौणसारोपा लक्षणाः[8] सर्वा इति सजातीयसंसृष्टिरित्याचष्टे । इयं सजातीयेति ॥

शुद्धसारोपाणां संसृष्टिमुदाहरति । आयुरित्यादि । अत्रायुरादिशब्दानां तद्वेतौ राज्ञि विषयनिगरणं विना सादृश्येतरकार्यकारणभावसंबन्धनिमित्तप्रवृत्तत्वात् शुद्ध-सारोपाणां सजातीयानामेव संसृष्टिरिति द्रष्टव्यम् । ननु निष्प्रयोजनलक्षणाभावात् सर्वत्र प्रयोजनं वाच्यमित्यपेक्षायामाह । सर्वत्र चेति । पावनत्वादिज्ञानं प्रयो-जनं तच्च व्यञ्जनव्यापारैकसाध्यमिति भावः ।

---

१ °दलन° G. २ प्रतापः G., प्रकारः D. ३ कविताकृतिः G. ४ वीरः G., C. ५ धर्मस्यैष C., M. ६ महोत्सवो T. ७ °प्रयोगे K. ८ K. omits लक्षणाः. ९ व्यञ्जना° K.

ननु सप्रयोजनमेव लक्ष्यमस्त्विति चेन्न[1] । ज्ञानविषयोद्भिन्नत्वेन फलस्याभ्युपगमात् । विषयो हि नीलादिः । फलं तु प्राकट्यमिष्यते । अतो न विशिष्टे लक्षणा । किं तु[2] लक्षिते तटादौ शैत्यपावनत्वादयो विशेषाः स्फुरन्ति[3] ॥

**शब्दं व्यञ्जकमाहुर्व्यापारो व्यञ्जनं भवेद्यस्य[4] ।**

व्यञ्जन[5]व्यापारवान् शब्दो व्यञ्जकः । अत्र[6] चार्थ[7]स्यापि सहकारित्वम् ॥

---

तर्हि पावनत्वादिधर्म[8]विशिष्टमेव तटं लक्ष्यतां किमन्तर्गडुना व्यञ्जनाख्येन व्यापा[9]रान्तरेण कल्पनागौरवकलङ्कितेनेति शङ्कते । **नन्विति** । एवकारो भिन्नक्रमः । प्र[10]योजनं लक्ष्यमेवास्त्वित्यन्वयार्थौ । परिहरति । **नेति** । कुत इत्यत आह । **ज्ञानेति** । सर्वत्र ज्ञानस्यान्यो विषयः अन्यत् फलमित्यविवादमित्यर्थः । कुत्रेदं दृष्टं तत्राह । **विषयो हीति** । नीलादिर्घटादिरित्यर्थः । प्राकट्यं ज्ञातता । सा च ज्ञान[11]जन्या ज्ञानानुमापिका[12] विषयनिष्ठा[13] यत्प्रसादात् ज्ञातो[14] घट इति विशिष्ट व्यवहारो जायत इति ज्ञाततावादिनः । ततः किमत आह । **अत इति** । फलस्य विषयातिरेकदर्शनादित्यर्थः । **विशिष्ट इति** । फलविशिष्ट इत्यर्थः । गङ्गायां घोष इत्यादौ पावनत्वादिकं न विषयज्ञानगोचरः फलत्वात् प्राकट्यवत् । अन्यथा प्राकट्यस्यापि नीलादिज्ञानगोचरत्वप्रसङ्गः । प्रयोजनस्यापि लक्ष्यत्वे तत्रापि प्रयोजनान्तरापेक्षायामनवस्था स्यादिति च तर्क इत्यर्थः । कथं तर्हि फलज्ञानमत आह । **किं त्विति** । स्फुरन्ति व्यञ्जनवृत्त्या भासन्त[15] इत्यर्थः । **इति लक्षणा** ॥

अथ क्रमप्राप्तं व्यञ्जकं लक्षयति । **शब्दमिति** । व्यञ्जनावृत्त्यार्थबोधकः शब्दो व्यञ्जक[16] इति व्याचष्टे । **व्यञ्जनव्यापारवानिति** । ननु शब्दस्यार्थव्यतिरेकादर्शनादर्थस्यैव व्यञ्जकत्वमित्याशङ्क्याह । **अत्रेति**[17] । शब्दशक्तिमूले ध्वनौ शब्दस्यैव प्राधान्यमर्थस्य सहकारित्व[18]मात्रमित्यर्थः ॥

---

१ °विषयभिन्नत्वेन G. २ लक्षिते किं तु T. ३ परिस्फुरन्ति T., C., G., M. ४ °द्यस्या D. ५ व्यञ्जना° G., C., M. ६ तत्र T. ७ °चार्थार्थसह° G. ८ K. omits धर्म. ९ व्यापारान्तरकल्पना° D. १० प्रयोजनं च ल° D. ११ °जन्यो D. १२ °मापको D. १३ °जन्यो D. १४ °प्रसादाद्भासते घट° D. १५ °वृत्त्यावभासन्त° K. १६ व्यञ्जकशब्द K. १७ अत्रार्थस्यापीति K. १८ सहकारित्वमि° D.

**वाच्यो लक्ष्यो व्यङ्ग्यस्तेषामर्थो यथाक्रमं**
**वेद्यः ॥ १३ ॥**

तेषां वाचकलक्ष[1]कव्यञ्जकानाम् ।

काव्यप्रकाशकारेण पुनरेषामर्थानामपि व्यञ्जकत्वमुक्तम् ।

यथा

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥"

---

एवं शब्दान् निरूप्यार्थान् निरूपयति । **वाच्य इति** । ननु प्रकृतस्य व्यञ्जके[2]स्यैकवचनोपात्तत्वादन्यस्य चाप्रकृतत्वात् कथं तेषामिति बहुवचनोपपत्तिरित्याशङ्क्य वाच[3]कादीनां त्रयाणामपीह प्रकृतत्वात् वाच्यादिप्रतियोगित्वेन बुद्ध्यारोहाच्च वाचकादिविवक्षया बहुवचनमिति व्याचष्टे । **ते[4]षामिति** ॥

एवं शब्दस्य व्यञ्जकत्वमुक्त्वार्थस्यापि मतान्तरव्याजेनाह । **काव्यप्रकाशकारेणेति** । तदीयं वाक्यमुदाहरति । **वक्त्रित्यादि** । वक्ता वक्तृविशेषः । बोद्धव्यो बोधयितव्यः प्रतिपाद्यो जन इत्यर्थः । अन्तर्नीतणिजर्थः प्रायेणायं बुधिधातुः । यथा "एकश्रुतिदूरात् संबुद्धौ" इत्यत्र संबुद्धिशब्दे । काकुः स्वरविकारः । वाक्यं वाक्यविशेषः । वाच्यं वाच्यार्थविशेषः । अन्यसंनिधिर्जनान्तरसंनिकर्षः । प्रस्तावः प्रकरणम् । देशो विविक्तादिः । तथा कालश्च । आदिशब्दादभिनयादिसंग्रहः । एतैः सहकारिभिर्वैशिष्ट्यात् सहकारादर्थस्यापि व्यञ्जकत्वमस्त्येवेत्यर्थः । किं च शब्दशक्तिमूले ध्वनौ अर्थस्येवार्थशक्तिमूलेऽपि शब्दस्य सहकारित्वमित्यपि द्रष्टव्यम् । यथा

तथा गतायां परिहासपूर्वं
सख्यां सखी वेत्र[5]वती बभाषे ।
आर्ये व्रजामोऽन्यत इत्यथैनां
वधूरसूयाकुटिलं ददर्श ॥

---

१ °लाक्षणिक° T., C., G., M. २ व्यञ्जनस्य K. ३ वाचकानां त्रयाणामपि प्र° K. ४ तेषामित्यादि D. ५ वेत्रधरा D.

व्यङ्ग्यं तु[1] द्वेधा । गूढमगूढं[2] च । तत्राद्यं यथा ।

क्रीडासौधं कलानां शरणगतरिपुक्ष्मापविश्रम्भ[3]पात्रं
जायेत त्वां नृसिंह क्षितिप कवयितुं[4] को न कण्डूलजिह्वः ।
स्वान्तःसंतोषगौरीपतिविधुतशिरश्चन्द्रिकाचुम्बितोर्मि-[5]
स्फारस्वःसिन्धुबन्धुः सुरयुवतिगणैर्गीयते यस्य कीर्तिः ॥

अत्र कण्डूलत्वं स्वार्थतिरस्कारेण[6] स्तवनाभिलाषं लक्षयत् तत्पारवश्ये विश्राम्यति ॥

द्वितीयं यथा ।

भग्नद्वारा[7] लुलितपरिघाश्चूर्णिताट्टाः प्रनष्ट-
स्तम्भा दूरीकृतवलभयः प्रोषिताले[8]ख्यलीलाः ।

---

इत्यत्रान्यतोगमनप्रश्नकुटिलदर्शनरूपाभ्यामर्थाभ्यां क्रमात् सुनन्दाया इन्दुमतीचित्तज्ञानमिन्दुमत्याश्च तदीयस्वमर्मोद्घाटनाभिप्रायज्ञानं[9] च वक्तृबोद्धव्यकाकुप्रस्तावे[10] व्यज्यते । एवमन्यदप्युदाहार्यम् । ग्रन्थकारस्तु विस्तरभयात् काव्यप्रकाश एव प्रपञ्चितमित्युपेक्ष्य व्यङ्ग्यं विभजते । व्यङ्ग्यं त्विति । यन्निधिवत्गुप्तं विदग्धैक[11]वेद्यमुद्घाटितं सद्यमत्करोति तद्गूढम् । यत्त्वाच्यायमानतया बहिष्ठमिव धनं झटिति स्फुरति तदगूढमिति विवेकः । क्रीडेत्यादि । विश्रम्भपात्रं विश्वासस्थानमित्यर्थः । स्वःसिन्धुबन्धुः स्वर्नदी[12]कल्पेत्यर्थः । अत्र गूढव्यङ्ग्यं विविनक्ति । अत्रेति । तत्पारवश्ये स्तुतिपारवश्ये इत्यर्थः । तेन च कवीनां स्तुत्या[13] राजगोचरा रतिर्व्यज्यत इति भावः । अत्र लक्ष्यलक्षकयोस्तुष्टूषाकण्डूलत्वयोरनवरतजिह्वाव्यापारहेतुत्वसादृश्यनिमित्तत्वान्निगीर्णविषयत्वाच्च गौणसाध्यवसानलक्षणेयमित्यवसेयम् ॥

---

१ T. omits तु. २ रूढमरूढं च D.; शुद्धमशुद्धं च O. ३ °विस्रम्भ° T., O., G., M. ४ कलयितुं O. ५ °चालितो° M. ६ °तिरस्कारे D. ७ हन्त द्वा° T. ८ प्रोज्झिताले° D. ९ °मन्यास्तदीयसंसर्गोद्घाटनाभिप्राय° D. १० D. has °काकुप्रस्तावैः प्रदर्शितम् for प्रस्तावे व्यज्यते-°त्युपेक्ष्य. ११ विदग्धकाविवेद्यमुद्धा° D. १२ स्वर्णदी° D. १३ स्तुत्यराजगोचरो रतिभावो व्यज्यते D.

तास्ताः क्रीडा[1]शिखरिपतनान्मोटिताक्रीडभागा-
स्त्वद्विक्रान्ति रिपुवसतयः श्रीनृसिंह ब्रुवन्ति ॥

अत्र ब्रुवन्तीति यद्यपि व्यङ्ग्यमस्ति तथापि [2]कविपरम्परा[3]प्रयुज्यमा[4]नतयातिप्रसिद्धत्वाद्वाच्या[5]यमानमित्यगूढम् ॥

[6]इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्य[7]लंकारशास्त्रे शब्दार्थनि[8]रूपणं नाम द्वितीय उन्मेषः ॥

---

अत्रेत्याद्यगूढव्यङ्ग्योदाहरणेऽपि तद्व्यनक्ति । अत्र ब्रुवन्तीति । अत्र ब्रूधात्वर्थस्य वचनस्याचेतनासु रिपुवसतिष्वसंभवात् तत्कार्यज्ञापनमात्रं लक्ष्यते तेन च रि[9]पुसमूलोन्मूलनं व्यङ्ग्य[10]मानमपि सकलकविपरम्पराक्षुण्णतया वाच्यप्रायमित्यगूढत्वमस्येत्यर्थः । [11]इयं च स्वार्थबाधेन वचनस्य परार्थत्वादिति न्यायेन स्वार्थाविनाभूतज्ञापन[12]लक्षणा जहत्स्वार्था । एतेन गूढागूढव्यङ्ग्यतया पूर्वोक्तफलतो लक्षणाभेदा[13]नां सप्तानामपि प्रत्येकं द्वैविध्ये चतुर्दशविधत्व[14]मित्यनुसंधेयम् ॥

[15]इति श्रीपदवाक्यप्रमाणपारावारपारीणमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायामेकावलीव्याख्यायां तरलाख्यायां शब्दार्थनिरूपणं नाम द्वितीय उन्मेषः ॥ २ ॥

---

१ कीलभागा M., G., C. २ T. drops कविपरम्परा. ३ °परम्परया G., C., M. ४ °मानतया प्रसिद्धत्वा° D. ५ °द्वाच्योपमानमि° D. ६ इत्येकावल्यां D. ७ °नाम्न्य° M., G., C. ८ शब्दार्थस्वरूपनिरूपणं G., C., M. ९ रिपूमूलो° K. १० व्यञ्जितम° D. ११ इयं च स्वार्थत्यागात् परार्थं स्वसमर्पणमिति न्यायेन K. १२ °लक्षणात् K. १३ °फलतो लक्षणोपादानम्। सप्ताना° D. १४ °विधत्वमनुसंधेयम् K. १५ इत्येकावलीव्याख्यायां &c. D.

## अथ तृतीय उन्मेषः ।

अथ ध्वनिभेदा उच्यन्ते ।

**ध्वनिरविवक्षितवाच्यो भवति द्वेधात्र लक्षणामूलः ।**

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्यविवक्षितमप्रधानीकृतं वाच्यं यत्र स तथा । येन चाविवक्षितेन सता वाच्येनाविवक्षितवाच्य इति ध्वनिमाचक्षते । तदर्थान्तरसंक्रमितात्यन्ततिरस्कृत-

---

ननु प्रथमोन्मेषे ध्वनिनिरूपणात् तदनन्तरमेव तद्भेदनिरूपणे कर्तव्ये किमिति संमेह संप्रति क्रियत इत्याशङ्क्य संगमयन्नवतारयति । अथेति । शब्दार्थनिरूपणानन्तरमित्यर्थः । तथा च शब्दार्थशक्तिमूलत्वेन तज्ज्ञानान्तरीयकज्ञानतया[2] तदनन्तरमेव ध्वनिभेदनिरूपणं संगतमिति भावः । तर्हि काव्यशरीरभूतशब्दार्थनिरूपणानन्तरं तद्धर्माणां गुणदोषालंकाराणामवसरस्तत्राह । ध्वनिभेदा उच्यन्त इति । सत्यम् । सात्मकस्यैव शरीरस्यालंकार्यत्वादात्मनि ध्वनावपि धर्मिणि साकल्येन ज्ञाते पश्चात्तदुभयधर्मगुणादिजिज्ञासावकाश इति भावः । इह तावद्ध्वनिर्लक्षणामूलोऽभिधामूलश्चेति प्रथमं द्विविधः । तत्राद्योऽविवक्षितवाच्य[3] इत्युच्यते । द्वितीयस्तु विवक्षितान्यपरवाच्य इति । तत्राद्यस्य विभागं लक्षणं[4] चाह । ध्वनिरिति[5] । यो लक्षणामूलो ध्वनिः सोऽविवक्षितवाच्य इत्यर्थः । विशेषलक्षणस्य सामान्यलक्षणापेक्षत्वात् तत्पूर्वकं व्याचष्टे । लक्षणामूलेति । गूढव्यङ्ग्यप्रधानं ध्वनिरिति ध्वनेः सामान्यलक्षणम् । तत्र गूढेत्यगूढव्यङ्ग्यव्युदासः[6] । प्रधानमिति गुणीभूतव्यङ्ग्यनिरासः । लक्षणामूलो ध्वनिरविवक्षितवाच्यध्वनिरिति विशेषलक्षणम् । लक्षणामूल इत्यभिधामूलध्वनिव्युदासः[7] । ध्वनिरिति लक्ष्यार्थव्युदासः ।

---

१ °शुद्ध° O. २ तज्ज्ञानानन्तरीयक° D. ३ तत्राद्यो ध्वनिरवि° D. ४ लक्षणं विभागं K.
५ ध्वनिरेवेति K. ६ °व्युदास· K. ७ °भिधामूलव्युदासः K.

त्वाभ्यां द्विधा भवद्वाच्यमविवक्षितवाच्याभिधानध्वनिमपि द्वैविध्ये [2]स्थापयत्यर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति। तत्र योऽर्थ उपपद्यमानोऽप्यनुपयोगाद्बाधितोऽर्थान्तरे परिणमति सोऽर्थान्तरसंक्रमितस्तादृशो वाच्यो यत्र सोऽर्थान्तरसंक्रमितवाच्य उच्यते। व्यञ्जनव्यापारसहका[3]रिप्रभावो णिचा द्योत्यते। अयं च पदवाक्यप्रकाश्यत्वेन भवन् न द्वैविध्यं परिहरति।

क्रमेण यथा।

श्रीरमणः श्रीरमणः सुधांशुमौलिः सुधांशुमौलिरसौ।
नरसिंहो नरसिंहः प्रभवति जगतामपि त्रितये॥

अत्र द्वितीयं श्रीरमणादिपदं तद्गुणमात्रशा[4]लित्वेन परिणमत् तद्गुणसाक[5]ल्यं व्यनक्ति।

---

संज्ञां व्युत्पादयति। अविवक्षितमिति। तथेति। तथोक्त इत्यर्थः। द्विधेति विभागवचनभागं विवृणोति। येनेत्यादि। भेदद्वयस्य संज्ञाद्वयं निष्कृष्याह। अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति। तत्राद्यं व्युत्पादयति। तत्र योऽर्थ इति। अनुपयोगादिति। न तु प्रमाणविरोधादित्यर्थः। ननु संक्रमितेत्यत्र प्रयोजको णिजर्थः क इत्यत्राह। व्यञ्जनेति। इहार्थान्तरसंक्रमस्य व्यङ्ग्यैकप्रयोजनत्वाद्व्यञ्जनव्यापार एव तत्प्रयोजको णिजर्थ इत्यर्थः। तं च द्वेधा विभजते। अयं चेति। अत्र द्वितीयमिति। प्रथमेनैव स्वार्थस्योक्तत्वाद्द्वितीयं पदमनुपयोगाद्बाधितवाच्यमित्यर्थः। तद्गुणेति। तच्छब्दनिष्ठया षष्ठ्या लक्ष्यलक्षकयोः समवायसंबन्धः सूचितः। परिणमत् संक्रामल्लक्षयदित्यर्थः॥

---

१ °स्कृतत्वेन G., C., M. २ व्यवस्थापयति G., C., M. ३ °सहकारी प्रभावो G. ४ शालित्वे परि° T., C., G., M. ५ °साफल्य° D. ६ °प्रयोजनकत्वा° K. ७ व्यञ्जनाख्या° K. ८ °प्रयोजकेन णिजर्थः K.

एषा ते कथयामि सांप्रतमहं तिष्ठन्त्वमी मन्त्रिणः
सर्वे यत् प्रतिभाति तत् कुरु रुचिं बुद्ध्या विमृश्य स्वयम्।
इत्युक्तः प्रियया रिपुक्षितिपतिस्त्वज्जैत्रयात्रोत्सवे
स्तैमित्यं कलयन् नृसिंहनृपते तूष्णीमभूदानतः॥

अत्र कथनादिकमुपदेशरूपतया परिणमदवश्यकर्त्तव्यतां व्यनक्ति॥

यः पुनरनुपपद्यमानतयैव बाधितोऽर्थान्तरप्रतिपत्तिं कृत्वा पलायित इव सोऽत्यन्ततिरस्कृतस्तादृशो वाच्यो यत्र सोऽत्यन्ततिरस्कृतवाच्यः। असावपि पूर्ववद्द्विविधः।

क्रमेण यथा।

जायेत त्वां नृसिंह क्षितिप कवयितुं को न कण्डूलजिह्वः।

अत्र कण्डूलत्वं स्वार्थतिरस्कारेण स्तवनाभिलाषं लक्षयत् तत्पारवश्ये विश्राम्यति।

---

वाक्यगतमर्थान्तरसंक्रमितवाच्यमुदाहरति। एषा त इत्यादि। रुचिमिति। रुचिमिच्छाम्। बुद्ध्या विमृश्येति। विमर्शपूर्विकया रुच्या कर्त्तव्यं न रुचिमात्रेणेत्यर्थः। अत्र कथनादिकमित्यादि। कथनमात्रं परप्रवृत्त्यनुपयोगित्वाद्बाधितं तत्सामान्यविशेषभावसंबन्धेन कथनविशेषरूपोपदेशलक्षणया परप्रवर्त्तकं सत् कथितस्यावश्यकर्त्तव्यतां व्यञ्जयतीत्यर्थः। आदिशब्दाद्बुद्ध्यादिसंग्रहः। बुद्धिमात्रस्य विमर्शानुपयोगात् तद्विशेषभूतप्रमापकबुद्धिलक्षणया विमर्शस्यानपनोद्यत्वं व्यनक्तीत्याद्यूह्यम्॥

अत्यन्ततिरस्कृतवाच्यं व्युत्पादयति। यः पुनरित्यादि। पूर्ववदिति। पदवाक्यप्रकाशकत्वेनेत्यर्थः। जायेतेत्यादि व्याख्यातं प्राक्॥

---

१ तिष्ठन्त्यमी D. २ चिरं T., C., G., M. ३ रुचिमित्यादि K. ४ बुद्ध्या भाविमृश्येति K. ५ °प्रामाणिक° K.

बाणैः पञ्जरिता गजाः कति कति क्षुण्णा रथा मुद्गरै-
जीवग्राहमरातयः कति हयैः सार्धं गृहीतास्त्वया ।
मुक्ताः प्राञ्जलयः कतीति[1] निभृतामर्षस्मिताः स्वप्रियान्
संग्रामापसृतान् नृसिंह नृपते पृच्छन्ति वैरिस्त्रियः ॥

अत्र नरसिंह[2]नरेश्वरात् समरभुवि[3] परिभवं प्राप्य निवृत्तवतः परिपन्थिनः पार्थिवान् प्रति प्रथमप्रार्थिताभिक्रमानिवर्त्तनस्यावरोधे[4][5]-जनस्येयमुक्तिः ॥

**अभिधामूलोऽपि तथा विवक्षितान्यपरवाच्य इत्युक्तः ॥ १ ॥**

वाक्यगतमुदाहरति । बाणैरित्यादि । पञ्जरिताः[6] पञ्जरीकृताः[7] । जीवान् प्राणतो गृहीत्वा जीवग्राहं गृहीताः । "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति णमुल्प्रत्ययः । कथादित्वादनुप्रयोगश्च[8] । अमर्षप्रयुक्तं स्मितममर्षस्मितं न तु संतोषप्रयुक्तमित्यर्थः । तन्निभृतं स्थिरं यासां तास्तथोक्ताः । अत्र पलायिता[9]गतान् पार्थिवान् प्रति परगज-घटपञ्जरीकरणा[10]दिप्रश्नवाक्येनात्यन्तस्वार्थबाधात् तद्विरुद्धनिजगजाद्यपच्छेदलक्षणायाः स्वोपदेशावधीरणफलमनुभूतमिति मर्मोद्घाटनं व्यज्यते । तदेतदभिव्यक्तु विषयं विविनक्ति । अत्र नरसिंहेति । अभिक्रमोऽभियानं ततो निवर्त्तनं निवृत्तिः प्रथममेव प्रार्थितं येन तस्येत्यर्थः ॥

तदेवं लक्षणामूलाविवक्षितवाच्यध्वनिं चतुर्विधं चाभिधायाधुनाभिधामूलविवक्षि-तान्यपरवाच्यध्वनिं प्रपञ्चयितुं तत्सामान्यलक्षणं तावदाह । **अभिधामूलोऽ-पीति** । योऽभिधामूलो ध्वनिः स विवक्षितान्यपरवाच्य इत्यर्थः । संज्ञां व्युत्पादयति ।

---

१ कतीह T. २ नृसिंह° G. ३ समरे भुवि D. ४ °ताहवाभिक्रमनिवृत्तस्या° G., M.; °ताहवाभिक्रमनिवर्त्तस्या° C.; °ताहवनिवृत्तस्या° T. ५ °रोधवधूजन° G., C., M. ६ पिञ्जरिताः K. ७ पिञ्जरीकृताः K. ८ K. drops च. ९ पलायितान् गतान् K. १० °पिञ्जरी-करणा° K.

विवक्षितमन्यपरं व्यङ्ग्यनिष्ठं वाच्यं यत्र स विवक्षितान्यपरवाच्यो ध्वनिः । तथेति ग्रहणादयमपि द्विधा । असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति । क्रमस्यासंलक्ष्यत्वे तु न विप्रतिपत्तिः । न खलु विभावानुभावव्यभिचारिण एव रसः । अपि

---

विवक्षितमिति । लक्षणामूलवद्बाधाभावाद्विवक्षितत्वं व्यङ्ग्योपसर्जनत्वं व्यङ्ग्यनिष्ठत्वम् । तथाशब्दार्थमाह । तथेति ग्रहणादिति । नन्वसंलक्ष्यक्रमेत्यसंगतम् । क्रमः सन्नेव न संलक्ष्यते नास्त्येव वेति संदेहादित्याह । क्रमस्यासंलक्ष्यत्वे तु न विप्रतिपत्तिरिति । कुत इत्याशङ्क्य किमिह रसस्य विभावादेरभेदात् क्रमाभावो भेदेऽपि क्रमावेदकप्रमाणाभावाद्वेति द्विधा विकल्प्याद्यं निराचष्टे । न खल्विति । विभावादिरेव रस इति न कस्यापि दर्शनमित्यर्थः । तथा हि । विभावैरुत्पादितोऽनुभावैः प्रत्यायितः संचारिभिरुपचितो रामादिगतो रसस्तदभेदभावनया नटे प्रतीयत इत्युत्पत्तिवादिनो भट्टलोल्लटादयः । रामाद्यभेदभावितेन नटे तत्प्रकाशितैरेव विभावादिभिरनुमितः स्थायी सामाजिकैश्चर्व्यमाणो रस इत्यनुमितिवादी श्रीशङ्कुकः । काव्यनाटकशब्दव्यापारसहकृतेन साधारणीकृतेन विभावादिकेन भावकव्यापारेण नटादिगतत्वपरिहारेण साधारण्यतयानुसंधीयमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दसंविन्मयेन भोगापरनाम्ना भावनाख्यव्यापारेण भुज्यत इति भुक्तिवादी भट्टनायकः । लोकप्रसिद्धैः कार्यकारणसहकारिभिरेव काव्ये गुणालंकारमहिम्ना नाटके चतुर्विधाभिनयमहिम्ना चालौकिकविभावादिशब्दव्यपदेश्यैः साधारण्येनानुसंधीयमानैः स्वगत एव सामाजिकानां स्वानुभवजनितवासनात्मतया स्थितो रत्यादिकः स्थायी विभावादिभिरास्वाद्यतां गमितश्चिदास्मानन्दमयो रसो व्यज्यत इति व्यक्तिवादिनोऽभिनवगुप्तादयः । द्वितीयं परिहरति । अपि त्विति । उक्तरीत्या दर्शनचतुष्टयेऽपि तेभ्यो रस उत्पद्यतेऽनुमीयते भुज्यते व्यज्यते वा न तु त एव रस इति भेदः सर्ववादिसंप्रतिपन्नः । अन्य-

---

१ तथाहि न खलु T., C., M. २ °वेदनप्रमाणा° K. ३ K. omits द्विधा. ४ °कृतविभावा° K. ५ भावव्यापारेण D. ६ °नन्दविस्मयेन K. ७ लोके प्रसिद्धै° D. ८ कारणकार्य° D. ९ वालौकिक D. १० गतः स्वप्रकाशचिदात्मा° K.

तु तेभ्य एव रस इति सतोऽपि क्रमस्योत्पलदलशतव्यतिभेदवत्त्रिभावादिप्रतीतावाशुभावित्वेनासंलक्ष्यमाणत्वादसंलक्ष्यक्रमव्यङ्ग्य इत्यन्वर्थतामप्यसावाश्रयति । अस्य रसभावरसाभासभावाभासभावशान्तिभावोदयभावसंधिभावशबलत्वरूपतयाष्ट प्रकाराः। तेष्वेकोऽपि यत्र प्राधान्यमवलम्बते तत्रालंकार्य एव । यत्र पुनरप्राधान्यं तत्र रसवदादिरलंकारः । तत्र रसस्वरूपमेव प्रथमं निरूप्यते ॥

विभावैर्ललनादिभिरालम्बनकारणैरङ्कुरितः सितकरकोकिलालापमलयानिलकेलिकाननादिभिरुद्दीपनकारणैः कन्दलितोऽनुभावैर्नेधनान्तावलोकितास्मितभुजवल्लीवेल्लनादिभिः प्रतीतिपद्धतिमध्या-

---

थोत्पाद्योत्पादकभावाद्यभिधानायोगात् । स च पूर्वापरीभावनियत इति क्रमसिद्धेस्तद्वेदकप्रमाणाभावविकल्पो गर्भस्रावेण गत इति भावः । तत्तदर्शनोत्थित क्रियाध्याहारसिद्धये क्रियापदस्याप्रयोगः । तर्हि किमिति न संलक्ष्यतेऽसौ तत्राह । इति सतोऽपीति । इति प्रमाणवत्त्वाद्धेतोरित्यर्थः । अथैनं विभजते । अस्येति । नन्वेषां रसवदाद्यलंकारत्वं वक्ष्यते । ध्वनित्वेऽलंकार्यत्वं चेति विरोध इत्याशङ्क्याह । यत्रेति । अन्यथा त्वन्यथात्वमित्याह । यत्र पुनरिति । प्राधान्याप्राधान्याभ्यामुभयं व्यवस्थाप्यमित्यर्थः । तर्हि कोऽयं रस इति जिज्ञासायामाह । तत्रेति ॥

इह रसस्योत्पत्त्यनुमितिभुक्तिपक्षाश्चत्वार इत्युक्तमस्माभिः । तत्र व्यक्तिपक्षं सिद्धान्तयन्नाह । विभावैरित्यादिना रसोऽभिधीयते इत्यन्तेन । आलम्बनकारणैः समवायिकारणैरित्यर्थः । अङ्कुरितः प्रादुर्भावितः । कन्दलितः प्रवर्धितः । पल्लवितः परां काष्ठां प्रापितः । अनुभावानां च रसकार्यतया तत्प्रत्यायनद्वारा पोषकत्वमभिप्रेत्योक्तं प्रतीतिपद्धतिमध्यारोपित इति । एतेन विभावादिभिः स्वपरो-

---

१ °सूचि° G., C., M. २ °प्रतिभेद° D. ३ °शबलस्वरूपतया D. ४ एष्वेको° G., T., M. ५ शीत° G., C., M. ६ भ्रूवल्ली° G. ७ °वल्लि° C., M. ८ प्रतीतिपदम्° G.; प्रतीतिपथम्° C.

रोपितो व्यभिचारिभिश्चिन्तादिभिः पल्लवितः कदाचिदपि[1] नानुभूतोऽभिधया न कर्णातिथीकृतस्तात्पर्येण न लक्ष्यीकृतो[2] लक्षणया न स्वविषयं प्रापितः[3] प्रत्यक्षेण नात्मनः सीमानमानीतोऽनुमानेना-[4]परिशीलितसरणिः[5] स्मरणेन नाक्रान्तः कार्यतया न ज्ञातो ज्ञाप्यतया विगलितवेद्यान्तरत्वेन परिमितावनधीती ध्वननाभिधानाभिनवव्यापारपरिरम्भनिर्भरतयानुकार्यानुकर्तृगतत्वपरिहारेण सामाजिकानां वासनात्मतया स्थितः स्थायी *रत्यादिको भाव एव

दासीनसंबन्धपरिहारेण साधारणतयानुसंधीयमानः सामाजिकानां मनस्यभिव्यक्त इत्युर्क्तमिस्यनुसंधेयम् । तस्य व्यङ्ग्यत्वसिद्धये व्यापारान्तरविषयत्वं विशेषणमुखेन निराचष्टे कदाचिदपीत्यादिना[7] । नानुभूत इत्यादौ सर्वत्र[8] तद्विषयीकृत इत्यर्थो द्रष्टव्यः । तृतीयान्ताश्च ताः सर्वाः कर्त्रर्था द्रष्टव्याः । विभावाद्यन्वयव्यतिरेकानुविधानात् कार्यो रस इत्याशङ्क्याह । नाक्रान्तः कार्यतयेति । कार्यत्वे घटादिवत् विभावादिनिमित्तनाशेऽपि[9] रसानुवृत्तिप्रसङ्ग इति भावः । न चास्यालौकिकस्य स्वप्रकाशानन्दात्मकस्य लौकिकप्रमाणगम्यत्वमित्याह । न ज्ञात इति । तस्य निरतिशयानन्दात्मकत्वं सूचयति । विगलितेति । विगलितानि वेद्यान्तराणि यस्मिन् तस्य भावस्तत्त्वं तेनोपलक्षितः । निरतिशयानन्दात्मकतया विजातीयविषयस्फुरणपरिहारेण स्वयमेवाद्वितीयभावेनावभासमान[10] इत्यर्थः । तस्य ब्रह्मस्वरूपाभेदं सूचयति । परिमिताविति । अनधीती अपरिचिती अपरिमित इति यावत् । अधीतमनेनाधीती । "इष्टादिभ्यश्च" इतीनिप्रत्ययः । "क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्" इति सप्तमी । ननु प्रत्यक्षादिप्रमाणाविषयत्वे[11] कथमस्यावभास इत्यत आह । ध्वननेति । ध्वननाभिधानो व्यञ्जनाख्यो योऽभिनवोऽपूर्वो व्यापारस्तस्य परिरम्भो विषयभावस्तस्य निर्भरतया दौर्ध्येनाव्यभिचा-[12]

१ कदापि T., C., G., M. २ नाक्षिलक्षीकृतो T., M.; न लक्षीकृतो G., C. ३ प्राप्तः G, C., M. ४ प्रतिसीमानमानीतो° D. ५ °परिशीलित आगमसरणिस्मरणेनाक्रान्तः C, M. ६ इत्युक्तमनुसंधेयम् D. ७ कदापीत्यादिना K. ८ सर्वत्र विषयीकृत इ° K. ९ विभावादिनिमित्ततारोपितरसानुवृत्तिप्रसङ्ग° D. १० °भावेन भासमान इ° K. ११ प्रत्यक्षादिप्रमाणविषयत्वे कथमस्यानवभासः इ° D. १२ दीर्घेणाव्यभिचारोऽत्यर्थं D.

विभावादिजीवितावधिः[1] पानकरसन्यायेन चर्व्यमाणश्चर्व्यमाणैकप्राणः[2] समुल्लसन्[3] ब्रह्मास्वादसब्रह्मचारी लोकोत्तरचमत्कारकारी शृङ्गारादिको रसोऽभिधीयते ॥

---

रेणेत्यर्थः । समुल्लसन्निति व्यवहितेनान्वयः । अलौकिकेन व्यञ्जनाव्यापारेण प्रतीयमान इत्यर्थः । भट्टलोल्लटादिमतं निरस्यति । अनुकार्यानुकर्तृगतत्वपरिहारेणेति । अनुकार्यस्य रामादेरतीतत्वात् । अनुकर्तुर्नटस्याभिनय[4]सम्भारञ्जनधनाद्यर्जनाद्यभिनिविष्टमनस्कतया रसास्वादासंभवात् । संभवे वा तस्यापि सामाजिकत्वमेवेति[5] भावः । तर्हि किमाश्रयोऽसावत आह । सामाजिकानामिति । किं तेषूत्पद्यते । नेत्याह । वासनात्मतयेति । तेषां स्वयं रत्याद्यनुभवेन[6] या वासना संस्कारस्तदात्मकतया[7] स्थित इत्यर्थः । स्थायी रत्यादिको भाव एव शृङ्गारादिको रसोऽभिधीयत इत्यन्वयः । स्थाय्येव विभावादिभिः स्वादुतामानीतो रस इत्युच्यत इत्यर्थः । तर्हि विभावादीनां रसव्यतिरिक्तत्वे पृथगवभासः[8] किमिति नास्तीत्यत आह । पानकरसन्यायेनेति । यथा पानकरसास्वादेन नानारसोऽपि न पृथग् विभाव्यते किं तु सर्वोऽपि पानकरस इत्येव गृह्यते तद्वदत्रापि सर्वोऽपि रस इत्येवाभिमन्यत इत्यर्थः । तस्यालौकिकत्वमाह । चर्व्यमाणैकप्राण इति । अनुभवैकजीवित इत्यर्थः । ननु सर्वं सुखमीदृगेव[9] ज्ञातैकरसत्वात्[10] एतावता कथमलौकिकत्वमित्याशङ्क्याह । ब्रह्मास्वादसब्रह्मचारीति । ब्रह्मास्वादकल्प इत्यर्थः । यथा योगिनां नित्यसिद्धोऽपि ब्रह्मानन्दो[11] धारावाहिनि ध्यानसन्ताने स्वयं[12] प्रकाशते न प्रागूर्ध्वं च तथा रसोऽपि नित्यसिद्धात्मानन्दसंदोहात्मा[13] काव्यार्थानुसंधानचतुरचेतसां व्यञ्जनाव्यापारसहकृतान्तःकरणवृत्तिनिरस्तावरणतया विगलितवेद्यान्तरः[14] स्वयमेव भासते । न चैवं लौकिकं सुखमिति कथं नालौकिकभावः[15] । किं च ब्रह्मानन्द एवायमन्यत्र योगगम्यः । अत्र तु[16] विभावाद्यनुसंधानगम्य इतीयान् भेदः । किं च लोकोत्तरचमत्कारकारितया सकलसहृदयहृदयसंवेदनसाक्षिकेयं रसप्रतीतिः न केनापि दुरपह्नवेत्यभिप्रायेणाह । लोकोत्तरचमत्कारकारीति ॥

---

१ D. omits विभावादिजीवितावधिः  २ °प्रमाणः C., M.  ३ समुल्लसन्न° T.  ४ °भिनय° D.  ५ K. drops भावः  ६ रसाद्यनु° K.  ७ °दात्मतया K.  ८ भागवभासः K.  ९ °मेतादृगेव K.  १० °रसत्वात् तावता K.  ११ नित्यसन्धो ब्रह्मा° D.  १२ °सन्ताने सति स्वयं D.  १३ °संदोहकल्पा° D.  १४ गलितवेद्या° K.  १५ कथं नालौकिकमिति भावः K.  १६ K. omits तु.

अयं च स्वप्नेऽपि परिहरति वाच्यताम् । तथा हि । वाच्यो भव-न्नयं स्वशब्देनोच्यतां शृङ्गारादिशब्देन वा । इदमुभयमपि न संभवास्पदम् । रसादिशब्दाप्रयोगेऽपि विभावादिप्रतिपादनद्वारैव तस्य प्रतीतिपथपथिकत्वात् । रसादिशब्दप्रयोगेऽपि विभावाद्य-प्रयोगे तस्य प्रतीतिपथानधिरोहादित्यन्वयव्यतिरेकाभ्यां विभावा-द्यभिधानद्वारैव प्रतीतिपद्धतिमध्यास्त इति प्रतीयमानतामेवार्हति ॥

उत यदि तात्पर्यगोचरतामवतरति रस इति भवन्मनासि निवि-शते तदपि न विचारचारु । रसस्याभिधेयत्वानधिकरणत्वादभि-हिते च तात्पर्यस्य प्रगल्भनात् । विधेयानुवाद्यसमभिव्याहारेण विधेयार्थमनुवाद्यमुपादीयते । अप्राप्तं तु विधेयम् । यथा लोहि-

---

अत्र यदुक्तमभिधातात्पर्यादिविषयत्वं रसस्य नास्तीति तदेकैकमेवोपपादयन्नन-भिधेयत्वं तावदुपपादयति । अयं चेति । स्ववाचकः शब्दः स्वशब्दो रसशब्दः शृङ्गारादिशब्दस्तद्विशेषवाचकस्तेन सामान्यशब्देन विशेषशब्देन वेत्यर्थः । काव्या-र्थानुसंधानवतां तावदन्तरेणापि रसप्रतीतेस्तद्विरहिणां तु सहस्रशस्तच्छब्दाभ्यासेऽपि रसाप्रतीतेर्न तज्जन्येयं प्रतीतिरिति परिहरति । इदमुभयमपीति । यद्यपि घटादिशब्दैस्तदर्थवद्रसशृङ्गारादिशब्दैरपि संगतिग्रहणशालिनां परोक्षा रसप्रतीति-रस्त्येव किं तु काव्यार्थानुसंधानसमनन्तरभाविनी ब्रह्मानन्दसहोदरी येयमानन्द-प्रकाशरूपा प्रतीतिस्तस्या एवायमभिधातात्पर्यादिविषयतानिषेध इत्यविरोधः ॥

तात्पर्यव्यापारविषयत्वं निरस्यति । उत यदीति । कुत इत्यत आह । रस-स्येति । अनुपदमेवानभिधेयत्वस्योक्तत्वादिति भावः । ततः किमित्याशङ्क्य तात्पर्यविषयं सोदाहरणमाह । विधेयेत्यादि । विधेयार्थमिति । भूतं भव्या-

---

१ °प्रतीतिचोदनद्वारैव T. २ प्रतीतिपथिकत्वात् T.; प्रतीतिपदपथिकत्वात् G. ३ प्रयोगपथा° D.; प्रतीतिपदानारोहा° G., C., M. ४ °भिधाद्वारेणैव C., M.; °भिधानुसारेणैव T.; °भिधानद्वारेणैव G. ५ प्रतीतिपदम° C, M. ६ तावन्मनासि D. ७ °चेत्यर्थः T. ८ भावान्तरेणापि for तावदन्तरेणापि D. ९ °नन्दस्वादसोदरी K.

तोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र ऋत्विक्प्रचरणे प्रमाणान्तरतः[1] प्राप्ते लोहितोष्णीषत्वम्[2]प्राप्तं विधेयम् । एवमन्यत्रापि यावदप्राप्त-मभिहितं च तावति शब्दस्यार्थे तात्पर्यं नाम[3] व्यापारः प्रगल्भते । न पुनः प्रतीतिमात्रे[4] । यदि प्रतीतिमात्रेऽपि[5] तात्पर्यं प्रभविष्णु-तामासादयति तदा पूर्वो धावतीत्यादावपरार्थेऽपि[6] तात्पर्यं पर्य-वस्येत् । अपरोऽपि[7] धावतु वा न वा न तत्र तात्पर्यम् ॥

अथ यदि लक्षणीयो रसस्तदपि न क्षोदक्षमम् । मुख्यार्थबाधा-दिरहितैरेव विभावादिभिरस्याभिव्यज्यमानत्वात्[8] ॥

प्रत्यक्षप्रमाणग्राह्यो[9] रस इति चेत्तर्हि प्रत्यक्षेण गृह्यमाणो रसः किं निर्विकल्पेन गृह्यते सविकल्पेन वा । न तावन्निर्विकल्पकज्ञान-गोचरः । विभावाद्यनुसंधानेनैवास्य सत्तासाधनसमर्थत्वात्[10] ।

---

योपदिश्यते इति न्यायादिति भावः । उक्तमन्यत्राप्यतिदिशति । एवमन्यत्रा-पीति । यथा दध्ना जुहोतीत्यत्र दध्नः करणत्वमात्रं रक्तं पटं वयेत्यत्र द्रव्यगुण-क्रियाणामेकं द्वयं त्रयं वा यावदप्राप्तमदग्धदहनन्यायेन तावन्मात्रविधौ तात्पर्य-मित्यर्थः । रसस्तु व्यञ्जितो न त्वभिहित इति न तात्पर्यगोचर इत्याशयेनाह । न पुनः प्रतीतिमात्र[11] इति । विपक्षे बाधकमाह । यदि प्रतीतिमात्रेऽपीति[12] । इष्टापत्तिं परिहरति । अपरोऽपीति ॥

लक्ष्यत्वं निराचष्टे । अथेत्यादि ॥

तर्ह्यपरोक्षावभासित्वात् प्रत्यक्षो रस इति शङ्कते । प्रत्यक्षेति । तदपि विकल्प्य दूषयति । तर्हीति । विभावाद्यनुसंधानेनैवेति । विशिष्टार्थानुसंधानलब्ध-

---

१ °माणान्तरप्राप्ते G., C., M. २ °षत्वमात्रमत्राप्रा° C., M. ३ तात्पर्यनामा C., G. ४ प्रतीतमात्रे T.; प्रतीतिमात्रेण D. ५ प्रतीत° T. ६ T. drops अपि. ७ अपरो हि D., T., C., M. ८ विभावादिभिर्व्यज्य° T. ९ T. drops प्रमाण. १० °साधन° C., M. ११ न पुनरिति D. १२ यदि प्रतीति°. K.

अशेषविशेषणरहित[1]वस्तुमात्रपरिच्छेदरूपं हि निर्विकल्पकम्। तर्हि सविकल्पकज्ञानविषय इति चेन्न। निर्विकल्पक[2]स्यानन्तरमुपजायमानत्वात् सविकल्पकस्य। यदि च कारणाभावेऽपि कार्यस्य जन्म तदा कारणानुसंधानप्रयासः क्वचिदपि नानुभूयेत[3]॥

ननु सीतादिसंयोगवियोगजनितसुखदुःखवशंवदरामादिभाव[4]नटनपटु[5]नटप्रकटिततद्भावविलोकनाविर्भूतानुभूततत्तत्स्वगतभावानुचिन्तनानुमितया[6] तया[7] रामादिस्थयावस्थयात्मानं[8] सामाजिकः

---

स्वरूपस्य विशिष्टानन्दात्मनो रसस्य स्वरूपमात्रावगाहि[9]निर्विकल्पकाविषयत्वायोगादित्यर्थः। द्वितीयमाशङ्कते। तर्हीति[10]। यत्र निर्विकल्पकं नास्ति न तत्र तत्कार्यस्य सविकल्पकस्योत्थानमिति कुतस्तद्विषयत्वप्रत्याशेत्याह। नेत्यादि। कारणं विनापि कार्योत्पादे लोके कुलालादीनां कारणकलापसंपादनप्रवृत्तिर्न स्यादिति तर्कमाह। यदि चेति। अपरोक्षावभासित्वं तु रसस्य लोकोत्तरानन्दानुभूतिस्वभावस्य नित्यापरोक्षचिदानन्दब्रह्मस्वरूपाभिन्नस्यालौकिकव्यञ्जनापास्तसमस्तावरणस्य स्वयंप्रकाशतानिबन्धनमित्यनुसंधेयम्॥

अनुमेयत्वपक्षमाशङ्कते। ननु सीतादीत्यादि। सुखदुःखवशंवदस्तत्परवश इत्यर्थः। "प्रियवशे वदः खच्" इति खचि[11] मुमागमः। आविर्भूतं यदनुभूतं तत्तत्स्वगतभावानुचिन्तनं पूर्वं स्वयमनुभूतनानाभावस्मरणं तदनुमितया तद्दृष्टान्तेनानुमितयेत्यर्थः। सुखाकरोति दुःखाकरोति च सुखं दुःखं चानुभावयतीत्यर्थः। "सुखप्रियादानुलोम्ये दुःखात् प्रातिलोम्ये" इति च डाच्प्रत्ययः। रामः पराकाष्ठागतसुखदुःखपरवशो भवितुमर्हति तादृग्विभावादिकारणयोगित्वात् य एवं स एवं

---

१ अविशेषविशेषराहित° C., M. २ निर्विकल्पानन्तर° T.; निर्विकल्पकज्ञानानन्तर° G., C., M. ३ नानुभूयते D., C., M. ४ °भावेन नट° D. ५ C. and M. drop नटनपटु. ६ °भावानुमितया G. ७ तया तया M. ८ रामादिस्थयात्मानं G., C., M. ९ °मात्रग्राहिनिर्विकल्पक° K. १० तर्ह्यसाध्विति K. ११ खच्प्रत्ययः। मुमागमः। K.

सुखाकरोति दुःखाकरोतीति वेत्यनुमेयोऽस्तु[1] रस इति चेत् तदपि न । लोकप्रसिद्धव्याप्त[2]ताप्रयोजकीभूतकारण[3]त्वादिपरिहारेण स्थायिनं प्रति विभावादीनां प्रत्यायकत्वमात्रेण लिङ्गत्वासिद्धेः रसं प्रति वि[4]भावादेः कारणत्वादि निवर्त्तमानं स्वव्या[5]प्तां लिङ्गतामादायैव निवर्त्तते । लोके तु कारणकार्यसहकारिण्येवाभिधीयन्ते न विभावानुभावव्यभिचारिणः ॥

---

यथाहमिति रामस्य रसवत्तामनुमाय तेनानुमीयमानेनापि लोकोत्तरस्वादुस्वभावतया स्वाद्यमानेन सामाजिकः स्वयं सुखायते इत्यनुमेयवादी मन्यते । अथेमं पक्षं पराचष्टे । तदपि नेति । कुत इत्याशङ्क्य किं विभावादीनां कार्यकारणादिरूपेण लिङ्गत्वमुत विभावा[6]दिरूपेणेति द्वेधा विकल्प्याद्यं दूषयति । लोकप्रसिद्धेति । प्रत्यायकत्वमात्रेण व्यञ्जकत्वमात्रेणेत्यर्थः । मात्रशब्दः कारणत्वव्यावृत्त्यर्थः । तथा हि कार्यं कारणसंयोगिसमवायिविरोधि चेति शास्त्रे कार्यादीनां लिङ्गत्वमुक्तम् । यथा धूमाद्धूमध्वजानुमानं नभस्वद्गमनात्नभोनभस्वत्संगमानुमानमित्यादि । विभावादीनां तु व्यञ्जकत्वाभिमतानां लोकप्रसिद्धकारणत्वा[7]दिव्यावृत्त्या तद्व्याप्यलिङ्गत्वा[8]दिव्यावृत्तेर्न रसानुमापकत्वमित्यर्थः । द्वितीयं दूषयति । लोके त्विति । लोके विभावादीनामप्रसिद्धत्वान्न तद्रूपेण लिङ्गत्वमसिद्धि[9]प्रसङ्गादित्यर्थः । एतेन शास्त्रे कार्यादिग्रहणमुपलक्षणम् । अन्वयव्यतिरेकावेव व्याप्तेः प्र[10]योजकौ तेनाकारणत्वेऽप्यन्वयव्यतिरेकाभ्यामेवैषां रसलिङ्गत्वमित्यपि निरस्तम् । लोकतोऽप्रसिद्धानामन्वयव्यतिरेकयोरपि दुर्ग्रहत्वादिति । किं चातिसुन्दरस्यापि वस्तुनोऽन्यगतस्यानुमीयमानस्यात्यन्तपरोक्षत्वादास्वादनापरोक्षावभासित्वलोकोत्तरच[11]मत्कारकारित्वादिकल्पनापि साहसमेवेति प्रामाणिकानां परिहरणीय एवायम[12]नुमेयपक्ष इति तात्पर्यम् ॥

---

१ °स्ति रस° G. २ व्याप्ततया प्रयो° T. ३ °कारणतादि° G., C. ४ रसं प्रति हि विभा° T. ५ स्वव्याप्यां D.; स्वव्याप्तलि° C.; स्वव्याप्यान्मालि° M. ६ विभावादीनां रूपे° D. ७ °कारणत्वव्यावृ° D. ८ °लिङ्गत्वव्यावृ° D. ९ °मप्रसिद्धि° D. १० व्याप्तिप्रयोजकौ D. ११ °चमत्कारकारित्वकल्पना° K. १२ K. drops अनुमेयपक्षः

स्मरणगोचरत्वमपि रसस्य कथमस्तु । वस्तुविषयस्तावदात्मन्यनुभवपूर्वमिन्द्रियसंनिकर्षा[1]दिना जन्यते । जनितेन[2] संस्कार आधीयते । आहितेन च[3] तेन कालान्तरे स्मृतिरुत्पद्यते । संस्का[4]राधानद्वारा स्मृतिं प्रत्यनुभवस्य कारणत्वम् । अनुभवस्तु वस्तुतो[5] रसे नास्ति[6] विभावादिगतस्य रसगत[7]त्वेनोपचर्यमाणत्वात् । किं च रसस्यानुभूयमानत्वाभ्युपगमे व्यङ्ग्यत्वविरोधः । तस्मादनुभवाभावे स्मृतेरप्यभाव इति स्मृतिविषयो न रसः किं तु व्यङ्ग्य एव ॥

यत् पुनरिहाकार्यत्वमुक्तं रसस्य तन्नटगतविभावाद्यनुत्पाद्यत्व-

---

स्मृतिपक्षं प्रतिक्षिपति । स्मरणेति । कथमस्तु न कथंचिदप्यस्त्वित्यर्थः । कुत इत्याशङ्कयानुभवाभावादिति प्रक्रियापूर्वकमाह । वस्त्वित्यादि । इन्द्रियसंनिकर्षादीत्यादिशब्देन[8] शब्दलिङ्गादिसंग्रहः । अस्त्वनुभवसंभवात् स्मृतिः रसोऽप्यनुभूयत इति स्मृतिगोचरीभविष्यतीत्याशङ्कयाह । अनुभवस्त्विति । तथा व्यपदेशस्त्वौपचारिक इत्याह । विभावादिगतस्येति । मुख्यत्वेऽनिष्ट[9]माह । किं चेति । समीचीनोऽसमीचीनो वेन्द्रियलिङ्गादिसमुत्थः प्रत्ययोऽनुभवः । तत्संस्कारमात्रसमुत्थस्तु स्मृतिः । तदुभयविलक्षणं तु व्यञ्जनमिति भावः ॥

यत् प्राक् प्रतिज्ञातं नाक्रान्तः कार्यतयेति तद्विवृणोति । यत् पुनरिति । विभावैरुत्पादितोऽनुभावैर्ज्ञापितः संचारिभिरुपचितो रामादिगतः स्थायी तादूप्यभावनया नटे प्रतीयत इति केचित् । तन्निषेधाभिप्रायं तदित्यर्थः । नटगतविभावादीति । कारणविशेषाभिधानं तु परेषां प्रक्रियाभिधानमात्रपरं[10] न त्वन्योत्पाद्यत्वाभ्यनुज्ञानपरमुत्पत्तेरेवानङ्गीकारात् । तदङ्गीकारे घटादिवान्निमित्तानिवृत्तावपि रसानुवृत्तिप्रसङ्गः कार्यद्रव्ये तथा नियमादित्युक्तम् । रस उत्पद्यत इति प्रायिकव्यपदेशस्त्वास्वादनाधर्मस्यास्वाद्येऽप्युपचारात् । अत एव चर्वणानिष्पत्त्या तस्य निष्पत्तिरुप-

---

१ °संनिकर्षेण G. २ जनितेन तेन T., G., O., M. ३ T. drops च. ४ इति संस्का° T., G., M. ५ वस्तुनि रसे G. ६ नास्ते D. ७ °गतस्य तस्य रस° T., G., M.; गतस्य तस्य तस्य रस° O. ८ °पदेन K. ९ मुख्येत्व निष्कर्षमाह K. १० प्रक्रियामात्रपरं K.

मभिसंधाय । यदपि[1] रसस्याज्ञाप्यत्वाभिधानं तदपि रामस्य रतेरतीतत्वात् [2]संनिहितदेशवर्त्तमान[3]कालेन्द्रियसंनिकर्षाद्यज्ञाप्यत्वाभिप्रायेण ॥

अतः कारकत्वज्ञापकत्वव्यावृत्तौ[4] विभावादिश्चर्वणोपयोगित्वमात्रेण हेतुरलौकिको भवन्नलौकिकत्वमेव रसस्याभिव्यनक्ति ।

यदुक्तम् ।

---

र्यंत इति काव्यप्रकाशकारः । ननु रसस्य विभावादिव्यङ्ग्यत्वं नाम तज्ज्ञाप्यत्वमेवेति कथमज्ञाप्यत्वं प्रतिज्ञातं प्रागित्याशङ्क्य तदपि विवृणोति । यदपीति । तदप्यलौकिकत्वाद्रसस्य लौकिकप्रत्यक्षादिज्ञाप्यत्वप्रतिषेधाभिप्रायं न तु ज्ञाप्यत्वमात्रनिषेधपरं तेनालौकिकव्यञ्जनगम्यत्वाविरोधः । आदिशब्दाच्छब्दलिङ्गादिसंग्रहः । रामस्य रतेरतीतत्वादिति । अनैन्द्रियकत्वमात्रे दृष्टान्तार्थमुक्तम् । अतीतरतिवद्वर्त्तमानापि नेन्द्रियादिज्ञाप्येति[5] व्याख्येयम् । अन्यथा यथाश्रुतार्थस्वीकारे वर्त्तमानस्येन्द्रियादिज्ञाप्यत्वाभ्यनुज्ञाने पूर्वोक्तरसकलसंदर्भविरोधोऽतीतरतेः शब्दलिङ्गज्ञाप्यत्वबाधश्च । तस्माद्रसस्याज्ञाप्यत्वाभिधानं लौकिकप्रमाणमात्राभिप्रायमित्येव व्याख्यानमुचितम् । एवं विभावादे रसस्य चालौकिक एवायं हेतुहेतुमद्भावः सिद्ध इति ॥

फलितमाह अत इति । उक्तरीत्या रसस्याकार्यत्वादज्ञाप्यत्वाच्चेत्यर्थः । उत्पत्तिज्ञप्त्योरहेतोर्विभावादेः कुत्र हेतुत्वं तत्राह । चर्वणेति । मात्रशब्दः कारकत्वज्ञापकत्वव्यावृत्त्यर्थः । विभावादिगतव्यञ्जनव्यापाराख्यालौकिकमहासहायलब्धबलान्तःकरणवृत्तिविशेषनिरस्तसमस्तावरणस्यात्मानन्दसागरस्यैव रसव्यपदेश्यस्य[9] [10]लोकोत्तरचमत्कारकारिणः सकललौकिकप्रमाणनिरपेक्षै[11]ः स्वयंप्रकाशात्मा विगलितवेद्यान्तरस्फुरणविशेषश्चर्वणं स्वादनमिति व्याख्यायते । उक्तरीत्या

---

१ D. drops तदपि. २ संनिहिते D. ३ °वर्त्तमानेन्द्रिय° G. ४ °व्यावृत्तो रसं प्रति विभावा° G., C., M. ५ °भिप्रायकं K. ६ °गम्येति D. ७ °न्द्रियज्ञाप्य° D. ८ पूर्वोक्तसकल° K. ९ °व्यपदेशस्य D. १० लोकान्तर° D. ११ °निरपेक्षस्वयं° K.

'यो लौकिकोऽप्यतिजनः कारकसिद्धोऽप्यकार्यभूतश्च।
सविकल्पोऽप्यविकल्पः स रसः केनोपमीयेत॥'

ननु

'तत् प्रेक्ष्यं पश्यतां श्राव्यं सम्यग् भावयतां हृदि।
अलौकिक[1]सुखास्वादो रस इत्यभिधीयते॥'

तत[2]श्च करुणादीनां दुःखरूपत्वात् कथंकारमुपपद्यते रसत्वमिति चेन्न। विगलितवेद्यान्तरत्वमानन्दस्य रूपम्। तद्यदि विभावानुभावव्यभिचारियथोचितो[3]पनिबन्धमहिम्ना काव्यश्रवण[4]समसमयमेव समुल्लसति तर्हि करुणादावपि कुतस्त्यं[5] दुःखसंवेदनम्॥

---

तन्मात्रोपयोगाद्धेतुत्वम्। एतदेवैषां व्यञ्जकत्वं व्यङ्ग्यत्वं च रसस्येति सर्वमलौकिकमेवेत्यर्थः। अलौकिकत्वे संमतिमाह। य इत्यादि। लोकविदितत्वाल्लौकिकः। "तत्र विदितः" इत्यस्मिन्नर्थे लोकसर्वलोकाभ्यां ठञ्। लोकोत्तरसहृदयैकसंवेद्यत्वादलौकिकश्चेत्याह। अतिजन इति। विभावादिवृन्दव्यपदेश्यकारणसाध्यत्वात् कारकसिद्धस्तैरपि व्यज्यते न तूत्पाद्यत इत्यकार्यभूतश्च। विभावादिविशेषणविशिष्टरूपत्वात् सविकल्पः। तथापि स्वसंवेदनत्वादविकल्पो विकल्पाविषयश्चेत्यप्रतिमोऽयमित्यर्थः। करुणादीनां दुःखात्मकानामानन्दैक[6]रसत्वं कथमिति शङ्कते। नन्विति। कथंकारं कथमित्यर्थः। "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्" इत्यनर्थकादेव करोतेः कथंपूर्वाण्णमुल्प्रत्ययः। परिहरति नेति। कुत इत्यत आह। विगलितेति। काव्यनिबद्धविभावादिव्यञ्जकमहिम्ना लोकोत्तरेण भावकव्यापारेण सर्वोऽपि स्थायी तदानीमानन्दात्मकतयैव समुल्लसति। अन्यथा कथं सामाजिकानां करुणाद्यभिनयेऽपि महान्तमानन्दमन्वभूवमिति पश्चादानन्दात्मकताप्रतिसंधानं भूयोऽपि तत्र प्रवृत्तिश्चेति भावः॥

---

१ अलौकिकः T., C. २ ततः G. ३ °यथोदितो° G. ४ काव्ये श्रवण° T., C., M. ५ कुतो दुःख° G. ६ °मानन्दात्मकरसात्मकत्वं K.

स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।
विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः ॥
विकासः कुसुमस्येव पादपस्येव विस्तरः ।
क्षोभोऽब्धेरिव विक्षेपो मारुतस्येव चेतसः ॥

तत्र विकासोपाधिकः शृङ्गारः । विस्तरो[1]पाधिको वीरः । क्षोभोपाधिको रौद्रः । विक्षेपोपाधिको बीभत्सः । उपाधिर्भूमिकाश्रय इति यावत् । हास्याद्भुतकरु[2]णभयानकेष्वपि विकासादिरेवोपाधिरित्येभिः सह मिश्रता शृङ्गारादीनां न तु कार्यकारणभावः । तेषां प्रत्येकं विभावादिकारणभेदस्य दृष्टत्वात् । ननु तदाष्टावेव रसा भवितुमर्हन्ति न तु नवमः[3] । ततः कोऽयमभिनवो नाम शान्त इति चेन्न । मुनिनास्य विभावाद्यप्रतिपादनाल्लक्षणाकर-

तदेवं रसस्वरूपं निरूप्य तत्स्वरूपं निष्कृष्य दर्शयति । स्वाद इति । स्वाद्यत इति स्वादो रसः यतो रसशब्दं निब्रुवते । रसतेः स्वादनार्थत्वाद्रस्यन्त एते रसा इति । काव्यार्थः काव्यस्य वाच्यार्थो विभावादिः तस्य संभेदाद्व्यञ्जकत्वेन संबन्धादात्मैवानन्दः तस्य समुद्भवः समुद्भूतिराविर्भावः काव्यार्थानुसंधानसंभव आत्मानन्दर[4]सो यः स स्वादापरनामा रस इत्यर्थः । तस्य शृङ्गारादिभेदाश्रयणेन विकासाद्युपाधिकं चातुर्विध्यमाह । विकासेत्यादि । इह शब्दविषये विस्तारशब्दश्चिन्त्यः । शृङ्गारादिचतुष्टयोक्तं चातुर्विध्यं हास्यादिचतुष्टयेऽतिदर्शयं[5]स्तेषां द्वयानामपि यथासंख्यं द्वयोर्द्वयोरेकोपाधिनिबन्धनो[6] मिथो मिश्रते[7]त्याह । हास्येत्यादि । कार्यकारणनिबन्धनैषां मैत्रीति केचित् । तान् निरस्यति । न त्विति । कार्यकारणभावस्यैवाभावात् क्वचिद्भावेऽप्यननुगमान्न तन्निबन्धनेत्यर्थः । नन्वेवं ग्रन्थकरणादष्टौ रसा इति शान्तो नवमो न स्यादिति शङ्कते । ननु तदेति । शान्तो नामेत्यन्वयः । अथैकदेशी परिहरति । नेति । नास्ति शान्त इत्यर्थः । तयो[8]पपत्तिमाह । मुनिनेति । रागद्वेषानुच्छेदे शान्तस्थायिनो निर्वेदस्याभावात् कुतः शान्त

१ विस्तारो° D. and Com. २ °भयानककरुणेष्व° D. ३ नव नवमस्तु रसः कोऽय° T. ४ °नन्दप्रकाशो K. ५ दर्शयन् तेषां° K. ६ °निबन्धनात् K. ७ °तेत्याशङ्क्याह K. ८ तथेति K.

णाच्च । अनादिकालप्रवाहायातस्य रागद्वेषादेरत्यन्तमुच्छेत्तुमशक्यत्वाच्च । अपरे पुनरेवमिह विवदन्ते । यथा तथास्तु नाम शान्तो रसः । सर्वथा नाटकादावभिनयात्मनि स्थायित्वमस्य निषिध्यतेऽस्माभिस्तस्य सकलव्यापारोपरमरूपस्याभिनयायोगात् । एतच्च विचारविकलम् । अमङ्गलरूपस्यापि निर्वेदस्य शान्तरसस्थायित्वप्रकाशनायैव मुनिना व्यभिचारिषु प्रथमं निर्दिष्टत्वात् ।

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥"

इति स्थायिव्यभिचारिमध्येऽस्य पठनादुभयरूपत्वमस्याभि-

---

इत्यर्थः । सत्येऽपि शान्तस्य तत्स्थायिनो निर्वेदस्य नाट्यानुपयोगित्वादिह स्थायित्वेनास्य निबन्धो निषिध्यत इत्येकदेश्यन्तरमतमाह । अपरे पुनरिति । अस्येति । निर्वेदस्येत्यर्थः । उभयमप्यप्तु मुनिनाप्यस्य स्थायित्वसूचनादिति परिहरति । एतच्चेति । कण्ठतोऽनुक्तिस्तु सूत्रकाराणां भूषणमेव । यथा कणादस्य चशब्देन गुरुत्वादिगुणसप्तकं समुच्चिकायेतिभावः । प्रथमनिर्देशमभिव्यङ्क्तुं सूत्रं पठति । रतिरित्यादि । सूत्रतात्पर्यं व्यनक्ति । स्थायीति । अयं भावः । संचारिभाय-

---

१ प्रथमनि° G., C., M. २ मोहो धृतिः स्मृतिः T. ३ परिपठना° D. ४ °स्यानुमत° T., G, C. ५ °एतच्चेत्यादि K. ६ समुच्चकारे° K. ७ विविनक्ति K.

मतमिति मुनेराशयस्य लक्ष्यमाणत्वाच्च। तस्मादस्ति शान्तो रसः। अतश्च नवैव रसा इति नः संमतम्॥

राजा तु शृङ्गारमेकमेवं शृङ्गारप्रकाशे रसमुररीचकार। यथा

“वीराद्भुतादिषु च येह रसप्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति।
लोके गतानुगतिकत्ववशादुपेता-
मेतां निवर्त्तयितुमेष परिश्रमो नः॥
शृङ्गारवीरकरुणाद्भुतहास्यरौद्र-
बीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दश रसान् सुधियो वयं तु
शृङ्गारमेव रसनाद्रसमामनामः॥”

रसानां लक्षणानि क्रमेण यथा।

स्त्रीपुंसमाल्यादिविभावा स्तम्भस्वेदाद्यनुभावा जुगुप्सालस्यौ-ग्र्यवर्ज्यव्यभिचारिका[2] रतिः संभोगविप्रलम्भात्मा शृङ्गारः।

विकृतवेषादिविभावो नयनविकासाश्रुपाताद्यनुभावो लज्जादि-सहकारी[3] हासो हास्यः।

पितृविपत्तिप्रभृतिविभावो दैवोपालम्भाश्रुप्रभृत्यनुभावो[4] दैन्या-दिसहकारी शोकः करुणः।

---

पाठमात्रेण संचारित्वसिद्धावपि अमङ्गलतया प्राथम्यानर्हस्यापि निर्वेदस्य प्राथम्य-करणं स्थायिसांनिध्यात् स्थायित्वसिद्ध्यर्थमेवेति कण्ठोक्तिं विनापि स्थायित्व-सिद्धिरित्यर्थः। उपसंहरति। तस्मादिति॥

भोजराजमतमाह। राजा त्विति। तदपि भरतोक्तिशास्त्रविरोधादतिदुर्बलतयै-वोपेक्षैव प्रतिक्षेप इति मत्वा रसानां विशेषलक्षणान्याह। रसानामित्यादि।

---

१ विवर्त्तयितु° G., D. २ °ग्र्यमरणव्यतिरिक्तव्यभि° G., C., M. ३ °व्यभिचारी T. ४ °वोपलम्भा° D. ५ भरतशास्त्र° K.

असुहृद्दर्शनादिविभावः स्वेदनिर्भर्त्सनाद्यनुभावोऽमर्षादिव्यभिचारी क्रोधो रौद्रः।

प्रतिमल्लविलोकनादिविभावो रोमाञ्चकृपाणकम्पनाद्यनुभावो हर्षादिभिर्व्यभिचारिभिरुपचित उत्साहो वीरः।

प्रतिभटदर्शनादिविभावं कम्पकातराक्षिविलोकनाद्यनुभावं दैन्यादिव्यभिचारि भयं भयानकः।

पूतिपरासुदर्शनादिविभावा नासापिधानवैवर्ण्याद्यनुभावा मोहादिव्यभिचारिणी जुगुप्सा बीभत्सः।

विचित्रवस्तुदर्शनादिविभावः स्तम्भस्फारनेत्रविलोकनाद्यनुभावो वितर्कादिव्यभिचारी विस्मयोऽद्भुतः।

भवभङ्गुरताविभावनादिविभावः पुलकनयननिस्तरङ्गताद्यनुभावो धृत्यादिव्यभिचारी निर्वेदः शान्तः।

अत्र कामस्य सकलजीवलोकानन्दकन्दलनक्षमतया सर्वान् प्रति हृद्यतेति तन्मूलः पूर्वं निर्दिष्टः शृङ्गारः। तदनुगामितया हास्यः। ततो निरपेक्षभावत्वात् तद्विपरीतः करुणः। ततस्तन्निमित्तमर्थप्रधानो रौद्रः। अथ कामार्थयोर्धर्ममूलत्वाद्धर्मप्रधानो वीरः। तस्य भीताभयप्रदानसारत्वाद्वीरानन्तरं भयानकः। तद्विभावसाधारण्यसंभवाच्च तद्धेतुस्ततो बीभत्स इति। यद्वीरेणाक्षिप्तं वीरस्य पर्यन्तेऽद्भुतः फलमिति तदुपादानम्। ततस्त्रिवर्गात्मकप्रवृत्तिधर्मविपरीतानिवृत्तिधर्मात्मकोऽपवर्गफलः शान्तः॥

---

निगदव्याख्यानमेतत्। अथ रसानां क्रमनियामिकाः संगतीराह। अत्र कामस्येत्यादि। इदमपि निगदव्याख्यानमेव॥

---

१ हर्षादिव्यभि° २ प्रतिभय° D. ३ °क्ष्यवलो° G. ४ चित्रवस्तु° T. ५ °द्भुतरसः C. ६ °निस्तरलता° T. ७ हृद्यत्वामिति C., G., M. ८ पूर्व° G., D. ९ निर्दिष्ट° D. १० निरपेक्षभावात् G.; निरपेक्षकारित्वात् T. ११ फलमिति ततस्तदुपा° T.

चाटुषु प्रभुविषयस्य रत्याख्यस्य कविभावस्य प्राधान्यं भविष्यतीति रसादिध्वनेः प्राधान्यप्रकाशनाय परकीयाण्येवास्माभिः[1] पद्यान्यत्र क्रमेणोदाह्रियन्ते । तत्र रसो[2] यथा ।

'ममासनार्धे भव[3] मण्डनं ततः[4]
प्रिये मदुत्सङ्गविभूषणं भव ।
भ्रमात्क्रमादालपमङ्ग मृष्यतां
विना[8] ममोरः कतरत्तवासनम् ॥'

वीर नरसिंह नृपते तव विरहे भाति पाण्डुता वपुषि भृशम् ।
तस्या हृदयगतस्य त्वन्मुखचन्द्रस्य चन्द्रिकाभरमधुरा[5] ॥

अत्र सखी वक्त्री ।

'उत्कासे कण्ठदाहः प्रचुरघृतपयःपानमामज्वरार्त्ते[6]
रक्ता क्लृप्तिः कृशानामुदरभयहरा[7] कर्कटी सक्तुमिश्रा ।
पथ्या पथ्यातिसारे दृशि सरुजि पुनः क्षारचूर्णप्रयोग-
स्तत्तत्पथ्योपचारैस्तरुणयति यमाडम्बरं जन्तुकेतुः ।'

---

अथ रसादिध्वनेरन्यदीयश्लोकानुदाहरिष्यन् 'करोमि नरसिंहस्य चाटुश्लोकानुदाहरन्' इति स्वकृतप्रतिज्ञाभङ्गदोषं परिहरति । चाटुष्विति । रसभावादिभेदादसंलक्ष्यक्रमध्वनिरष्टविध इत्युक्तं तत्राद्यस्य रसध्वनेः शृङ्गारादिभेदेन नवविधस्यापि क्रमेणोदाहरणानि वक्तुमाह । तत्र रसो यथेति । ममेत्यादि । संभोगशृङ्गारोदाहरणं परकीयम् । वीरनृसिंहेति विप्रलम्भशृङ्गारोदाहरणं स्वकीयम् । तत्र पूर्वोक्तप्रभुविषयरत्याख्यभावध्वनिशङ्कां परिहरति । अत्र सखी वक्त्रीति । न तु कविरिति शेषः । तथा चोक्तशङ्कानवकाश इति भावः । अत्र सर्वत्र स्त्रीपुंसेत्यादिलक्षणानि योज्यानि । उत्कास इति । कर्कटी उर्वारुः । 'उर्वारुः कर्कटी स्त्रियाम्'

---

१ परकीयान्येव D. २ तत्र शृङ्गाररसो यथा T., G., M. ३ तव D.; मम G., C., M. ४ ननु T., G. ५ चन्द्रिकेव सुमधुरा T. ६ °ज्वरार्त्तौ T., G. ७ °भरहरा T., G., C, M. ८ इत्यादि K.

‘ हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ॥’

‘ केयं माता पिशाची क इव स जनको भ्रातरः केऽत्र कीटा
वध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽपि ।

हस्तौ निष्पीड्य

आगर्भं यावदेषां कुलमिदमखिलं नैव निश्शेषयामि
स्फूर्जन्तः क्रोधवह्नेर्दधति न विरतिं तावदङ्गे स्फुलिङ्गाः ॥’

‘ क्षुद्राः संत्रासमेनं विजहित हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥’

‘ ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥’

इत्यमरः । पथ्या हरीतकी । ‘हरीतकी पथ्या’ इति विश्वः । पथ्या हिता । जन्तुकेतुर्नाम कैश्चिद्दग्धहस्तो वैद्याभासस्तद्विडम्बनेयम् । ग्रीवाभङ्गेत्यादि । पश्चार्धे पश्चादर्धं चरमकायः । पृषोदरादित्वात्साधुः । स्वमते तिर्यग्गतस्यापि रसस्यानाभासत्वात् सारङ्गगत-

१ मे प्रियं D. २ इति G. ३ विपुलसुहृ° D. ४ निष्पिष्य D. ५ कुलमतिविमलं D. ६ निष्पेषयामि D. ७ °मेतं T. ८ °यो भिन्न° T., G., C., M. ९ °यकाः संपत° T., G., C., M. १० त्वमपि T. ११ रुषो T., G., C. १२ बद्धदृष्टिः G., C., M. १६ कश्चन दग्ध° K.

'[1]दसमाणुसमांसभालके
कुंभसहस्सवशाहिं शंचिदे।
अणिसं च पिबामि सोणिदं
बलिशशदं समले भवीयदु॥'

'पश्य कश्चन चकोरलोचने
लोचनाविषयमैन्द्रजालिकम्।
इक्षुरि[2]ष्वसनमङ्कुराः शरा
लक्ष्यमेतदखिलं चराचरम्॥'

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्॥'

अत्र भावितीव्रनरकयातनानुचिन्तनादिभिर्विभावैर्जनितः कौपीन-

---

भयोदाहरणमित्यनुसंधेयम्। दसमाणुसेत्यादि। समरसीम्नि वसासृङ्मांसमत्तायाः कस्याश्चिद्राक्षस्या अपभ्रंशभाषेयम्।

दशमानुषमांसभाराः कुम्भसहस्रवसाभिः सञ्चिताः।
अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु॥

पश्येत्यादि। अत्रात्यन्ताघटमानार्थघटनदर्शनादद्भुतः। कदेत्यादि। इह सामान्यलक्षणप्रस्तावोक्तान्यपि विभावादीनि पुनर्विप्रतिपत्तिनिरासशङ्कार्यमुद्भावयति। अत्र भावितीव्रेति। एतेन नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागः शमदमादिसाधनसंपत्तिर्मुमुक्षुत्वं चेति साधनचतुष्टयसंपत्तिरुद्दीपिकेत्युक्तम्।

---

१ हदमाणुशमंशभाअणे कुंभशहद्दशवशाभि शंचिप
अणिशं च पिबामि शोणिदं बलिशशदं शमळे भविभदु॥ D.

२ 'भ्रुकाण्डधनुरङ्कु' D.

धारणशिरोऽञ्जलिपुटघटनादिभिरनुभावैरभिव्यक्तः कदेतिपदसूचितेन चिन्ताख्येन व्यभिचारिभावेन पुष्टः स्वात्मावमानलक्षणो निर्वेदः स्थायी शान्तरसरूपतां बिभ्रद्विश्रान्तिधाम । विभावास्त्वत्राक्षेपलभ्याः ॥

शृङ्गारादिरसभेदाः पुनः शास्त्रान्तरसुलभनिरूपणा इति नेह प्रपञ्चिताः ॥

भावो यथा ।

भावो हि नाम देवद्विजगुरुपुत्रमित्रादिविषया रतिर्विभावाद्यापूरितो व्यभिचारी च कान्ताविषयाया रतेः शृङ्गारत्वेनाङ्गीकारात् । तत्र देवविषया यथा ।

> ' छिन्त्से ब्रह्मशिरो यदि प्रथयति प्रेतेषु सख्यं यदि
> क्षीबः क्रीडति मातृभिर्यदि रतिं धत्ते श्मशाने यदि ।
> सृष्ट्वा संहरति प्रजा यदि तथापाधाय भक्त्या मन-
> स्तं सेवे करवाणि किं त्रिजगती शून्या स एवेश्वरः ॥ '

---

नन्वेते विभावाः श्लोकेनोक्ता इत्याशङ्क्याह । विभावास्त्विति । कौपीनधारणादिकार्योन्नेया इत्यर्थः । ननु शृङ्गारादीनामवान्तरभेदाः किमिति नोद्दिष्टास्तेऽत आह । शृङ्गारादीति । अस्माकं त्वेतावतैव ध्वनिस्वरूपनिरूपणसिद्धेरलमिति भावः । मित्रादीत्यादि । आदिशब्देन शिष्यनृपादिसंग्रहः । ओपु-

---

१ °मानन्ल° T., C. २ °लक्षणनिर्वे° T. ३ °धामा T. ४ °भावास्तत्रा° G. ५ °द्विजसुहृत्पुत्रादि° D. ६ °वानुभावाङ्कु° G., C., M. ७ भिन्नं G.; छिन्नं C., M. ८ °प्यादाय T. ९ किं नु जगती C., M. १० °शून्याथवा सेश्वरा G., C., M. ११ °न्ते तत्राह K. ११ पुत्रा° K. १२ अङ्कुरित K.

अत्र भगवद्विषया[1] रतिः प्रतीयते। एवं द्विजातिविषयाप्युदाहार्या। पुत्रविषया तु रतिर्वत्सलो रस इति कैश्चिदुच्यते॥

यद्यपि सकलमेव काव्यं रसेनैव जीवति रसश्चैकघनचम[2]त्कारात्मा तथापि क्वापि व्यभिचारिणः सकाशादधिकश्चमत्कारो भवतीति सोऽपि विभावानुभावप्रकाशितो[3] भाव उच्यते। यथा

'किमसुभिर्गलितैर्जड[4] मन्यसे
मयि निमज्जतु भीमसुतामनः।
मम किल श्रुतिमाह तदर्थिकां
नलमुखेन्दुपरां विबुधः स्मरः॥'

---

रित उपचित इत्यर्थः। एवं द्विजातीति। तत्र द्विजाविषये 'अर्थ्य[5] क्रियाः कामदुधाः[6] क्रतूनाम्' इत्यादि। गुरुविषये रघुवंशे 'ससैन्यश्चान्वगाद्रामम्' इत्यादि रामे[7] रौद्रि भरतवृत्तान्तः। पुत्रविषये 'आलक्ष्यदन्तमुकुलान्' इत्यादि शाकुन्तले। मित्रविषये तु 'अद्वैतं सुखदुःखयोरनुगतम्' इत्यादिकं बोदाहार्यमित्यर्थः। आदिशब्दान्नृपतिविषया माह्याः। तत्र स्वष्टात् श्लोक एवोदाहरणमिति भावः। पुत्रविषयारतिर्वत्सलोनाम दशमो रस इति केचित्। न तत्स्वमतमित्याशयेनाह। कैश्चिदिति। तस्याः पृथग्रसत्वे देवद्विजादिविषयाणामपि पृथग्रसत्वप्रसङ्ग इति भावः। ननु रसस्य लोकोत्तरचमत्कारकारित्वाद्[8] ध्वनित्वमस्तु व्यभिचारिणः कथं तथात्वमिति शङ्कामनूद्य विभावादिमहिम्ना कदाचित् सोऽपि तथेत्याह[9]। यद्यपीति। किं तस्य रसत्वमपि नेत्याह। भाव उच्यत इति। किमित्यादि। गलितैरुत्क्रामितैः। तदर्थिकां मृतमनसां चन्द्रमसि विलय इत्येवमर्थपरामित्यर्थः। इह विरहवेदनया चन्द्रातपमसहमाना दमयन्ती चन्द्रमुपालभते। एषा मृता[10] मयि मग्नमना भविष्यति। 'यत्रास्य पुरुषस्य मृत-

---

१ तु वत्सलो T., G., O. २ °घने चम° D. ३ °प्रकाशतो O. ४ °र्गलैर्पते° D. ५ अत्र क्रियाः K. ६ °दुघा इत्यादि. ७ रामभरत° K. ८ °कारित्वध्वनि° K. ९ तथैवे° K. १० मृतापि मन्मना D.

अत्र शशिनं प्रत्यसूया दमयन्त्याः प्रतीयते ऽतिरेकेणेति विप्रलम्भेऽप्यसूयाख्यव्यभिचारित्वमतिक्रियाप्रयुक्त आस्वादातिशयः ॥

रसाभासो यथा।

'ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः।
वीणां संहर नारद स्तुतिकथालापैरलं तुम्बरो
सीतारल्लकभल्लभग्नहृदयः स्वस्थो न लङ्केश्वरः ॥'

अत्र न कथमपि मिथिलाधिराजतनयायाः प्रेमभाजनं भवति

---

स्यादिति वागग्न्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते' इति श्रुतिप्रामाण्यादिति यदि तेऽभिमानस्तदपि 'व्याख्यानतो विशेषप्रतिपत्तिः' इति न्यायेन विद्वत्कामदेवव्याख्यानान्नलमुखेन्दुपरमेव श्रुतेरिति हताशो भवानित्यर्थः। एतेनेह नलैकपराया मम परत्रापि तत्सायुज्यमेवेति व्यज्यते तेन रतेः स्थायित्वं चेति स्थिते सत्याह। अत्रेति। अपकारिणि चन्द्रे मन्युप्रयुक्ता तत्पाण्डित्यासहनरूपासूयेर्ष्यापराख्यो भावो व्यज्यत इत्यर्थः। 'परोत्कर्षाक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि वा' इति लक्षणम्। अत्र विप्रलम्भप्रतीते रसध्वनौ जृम्भमाणे कुतो भावध्वनिरित्याशङ्क्य तत्संभवेऽप्युद्भटत्वादयमुद्ग्राह्य इत्याह। अतिरेकेणेति। अत्र परकीयापकारादयो विभावा निन्दानादरभ्रूभङ्गादयोऽनुभावा इत्यनुसंधेयम् ॥

ब्रह्मन्निति। सीतारल्लकः सीताविरहः। अत्र रावणस्य सीतायां विप्रलम्भशृङ्गारः प्रतीयते। तस्याभासत्वं व्यनक्ति। अत्रेति।

'एकत्रैवानुरागश्चेत् तिर्यङ्म्लेच्छगतोऽपि वा।
योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥'

---

१ °यते व्यतिरेकेण T., G., C., M. २ °प्रलम्भसंभवे° T., C., G., M. ३ °व्ययनाय T. ४ तुम्बुरो T., G., C., M. ५ °वल्लभ° D. ६ °तनयायाः भाजनं D. ७ तद्विदग्ध्का° D. ८ नलैकव्रताया D. ९ मे K. १० तस्याभास° K.

रामभद्रेतरस्ततः सर्वथा तस्यामनौचित्येन रतिः प्रावर्त्तत[1] रावणस्य[2] रसाभासः समजनि विप्रलम्भशृङ्गारः[3]। इदमत्र[4] तात्पर्यम्। यत्र परस्परानुकूल्यकल्लोलितः प्रवर्त्तते स्थायी तत्र रसः। यत्र पुनरेकतरानुरागस्तत्र स्थायिनोऽनौचित्येन प्रवृत्तत्वात्[5] तदाभास एव। अपरे तु रसाभासं तिर्यक्षु[6] प्रचक्षते तन्न परीक्षाक्षमम्। तेष्वपि विभावादिसंभवात्। विभावादिज्ञानशून्यास्तिर्यञ्चो[7] न भाजनं[8] भवितुमर्हन्ति रसस्येति चेन्न। मनुष्येष्वपि केषुचित्तथाभूतेषु रसविषयभावा[9]भावप्रसङ्गात्। विभावादिसंभवो हि रसं प्रति प्रयोजको न विभावादिज्ञानम्। ततश्च तिरश्चामप्यस्त्येव रसः।

यथा

> 'ददौ सरःपङ्कजरेणुगन्धि
>   गजाय गण्डूषजलं करेणुः।
> अर्धोपभुक्तेन[10] बिसेन जायां
>   संभावयामास रथाङ्गनामा॥'

---

इत्युक्तत्वात् तिर्यग्गतोऽपि रसाभास इति केचित्। तन्मतमुपन्यस्य[11] निरस्यति। अपरे त्विति। तिरश्चां विभावादिसंभवेऽपि तदनुसंधानवैधुर्यान्न रसाश्रयत्वमिति शङ्कते। विभावादिज्ञानेति। समाधत्ते। नेति। कुत इत्याशङ्क्य किमेषां विभावादित्वेन ज्ञानं प्रयोजकं स्वरूपमात्रज्ञानं वेति विकल्प्याद्यं प्रतिबन्द्या समाधत्ते। मनुष्येष्वपीति। रसविषयभावो रसाश्रयत्वम्। द्वितीयं तत्र[12]ाप्यस्तीत्याशयेनाह। विभावादीति। संभवः स्वरूपज्ञानसंभवः। न विभावादिज्ञानं विभावादय इति विशेषज्ञानमित्यर्थः। अन्यथा ज्ञानमात्रनिषेधेऽत्यन्तानुपलभ्यमानानामपि तच्चेष्टादीनामुद्दीपकत्वप्रसङ्गः। उपसंहरति। ततश्चेति[13]। उदाहरति। ददाविति[14]॥

---

१ प्रवर्त्तते T., M. २ °स्येन्याभासः T., G., O., M. ३ °शृङ्गारस्य O., M. ४ °मत्रेदम्पर्यम् T., G., O. ५ प्रवृत्तत्वेनाभास° G.; प्रवृत्तत्वादाभास° T., O., M. ६ तिर्यक्ष्वेव G. ७ °ञ्चोऽपि T. ८ भाजनीभवि° G. ९ °विषयीभावा° T., O., M., G. १० °र्धोपयुक्तेन T., O., M. ११ °पन्यस्यति D. १२ द्वितीयं तत्राप्य° D. १३ तस्वं चेति K. १४ °वित्यादि K.

अत्र गजेनालम्बनविभावेन जनिता वसन्तादिभिरुद्दीपनविभावैरुद्दीपिता सुरभिगण्डूषजलदानानुभावप्रकाशिता हर्षादिभिर्व्यभिचारिभिरुपचिता करेणोः संभोगशृङ्गारितां प्रतिपन्नैव रतिः । एवं रथाङ्गविषयापि ॥

भावाभासो यथा ।

'अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजय-
प्रह्वीभूतसुरासुराणि भवतो भूमेः सुता शृण्वती ।
पत्यौ द्वेषकषायितेन मनसा स्निग्धा मयि स्थास्यति
स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम् ॥'

अत्र रावणस्यौत्सुक्यमनौचित्येन प्रवृत्तम् ॥

रसस्य मुख्यत्वे सत्यपि राजानुगतविवाहप्रवृत्तभृत्यवत् कदाचिदङ्गित्वमनुभवन्ति भावशान्त्यादयः ॥

तत्र भावशान्तिर्यथा ।

'पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलोलदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥'

---

ननु रसाङ्गभूतानां भावशान्त्यादीनां ध्वनित्वेऽङ्गित्वं चेति विरोधमाशङ्क्य दृष्टान्तेन निराचष्टे । रसस्येति । यथा राजानुगतभृत्यस्य राजशेषत्वेऽपि विवाहोपाधिना तं प्रत्येव तात्कालिकं शेषित्वं न विरुध्यते तथैषामपि कविताात्पर्येण प्रतिपादनेन शेषित्वमविरुद्धं प्रत्युत रसोद्दीपकं सदुपकारकमेवेत्यर्थः ॥

पश्याम इति । अत्र कश्चित् कामी स्वप्रियासंभोगमरहस्यं वयस्याय कथयति ॥

---

१ हर्षादिव्य° T. २ °शृङ्गारतां T., G. ३ प्रपन्नेव G. ४ °विषयेऽपि T., G., C., M. ५ °भृत्यवदङ्गित्वं कदाचिदनु° T. ६ °मो मयि किं G. ७ °विलक्ष° T., G., C., M. ८ मुक्तस्तु बाष्पस्तया G.; बाष्पश्च मुक्तस्तया C. ९ प्रतिपादनेऽपि K. १० रसस्योद्दीप° K. ११ K. drops समागम.

अत्रेर्ष्याकृतस्य नायिकायाः कोपस्य शान्तिः । विशिष्टस्यापि कोपस्य कोपत्वानवगमात् ॥

भावोदयो यथा ।

‘ तदद्य विश्रम्य दयालुरेधि मे
दिनं निनीषामि भवद्विलोकिनी ।
अदर्शि पादेन विलिख्य पत्रिणा
तवैव रूपेण समः स मत्प्रियः ॥ ’

अत्र नलं प्रति दमयन्त्या औत्सुक्यरूपस्य भावस्योदयः ॥

विरुद्धयोर्भावयोः परस्परस्पर्धिभावेनोपनिबन्धो भावसंधिः ।

यथा ।

‘ अर्धे चेतसि जानकी न विरमत्यर्धे च लङ्केश्वरः
किं चार्धे विरहानलः कवलयत्यर्धे च रोषानलः ।
इत्थं दुर्विधिवैशसव्यतिकराद्हाहे समेऽप्यर्धयो-
रेकं वेद्मि तुषाग्निदग्धमपरं दग्धं करीषाग्निना ॥ ’

---

तदद्येति । इन्द्रसंदेशहारिणमाविष्कृतनिजाकारं नलं प्रति तत्स्वरूपं जिज्ञासमानायास्तदालोकनकौतुकाकृष्टचित्ताया दमयन्त्या वचनमेतत् । पक्षिणा पूर्वं नलप्रहितेन हंसेनेत्यर्थः ॥

अर्ध इति । दुर्विधिवैशसव्यतिकराद्दुष्टदैवप्रातिकूल्यमेलनादित्यर्थः । विशसति हिनस्तीति विशसो हिंस्रः । शसु हिंसायामिति धातोः पचाद्यच् । तस्य भावो वैशसं क्रौर्यं प्रातिकूल्यमिति यावत् । युवादित्वादण् प्रत्ययः । अग्नेरिन्धनविशेषाद्दाहकत्वविशेषः प्रसिद्धः । तदिह तुषाग्नेः सह्यत्वं करीषाग्नेरसह्यत्वं चोति विवक्षित्वोक्तम् । एकं वेद्मीत्यादि । ‘ धान्यत्वचि विमुषास्तुषः ’ ‘ गोविंदे गोमयेऽस्त्रियां तत्तु शुष्कं करीषोऽस्त्री ’ इति चामरः ॥

---

१ विस्पृष्टस्या° D. २ कोपत्वानपगमात् D. ३ विश्राम्य G., M. ४ औत्सुक्यभावस्य D. ५ परस्परविभावे° D. ६ न G., O., M. ७ °त्यर्धे D. ८ न C., M. ९ वेदि T. १० तदेत्यादि K. ११ °काविष्ट° K. १२ कारीषा° K. १३ वेदीत्यादि K. १४ त्वचि तुषः पुमान् K. १५ °विंशा D. १६ गोमयेऽस्त्रियाम् D. १७ तद्दिशुष्कं D.

अत्र रतिक्रोधयोः संधिश्चर्वणास्पदम् ॥

बहूनां भावानां पूर्वपूर्वोपमर्देनोपनिबन्धो[1] भावशाबल्यम्।

यथा

'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये[2] श्रुतमहो[3] कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति[4] ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां[5] शबलता विश्रान्तिधाम ॥

---

क्वेत्यादि। एतच्छकुन्तलायामज्ञाताभिजनविशेषायामासक्तस्य राज्ञो दुष्यन्तस्य ब्राह्मणीशङ्काकलितचेतसो वचनम्। तत्राष्टभिर्वाक्यैः क्रमेणाष्टौ वितर्कादयो भावा[6] ध्वन्यन्ते। तत्र

'तर्को विचारः संदेहाद्भ्रूलताङ्गुलिनर्त्तकः।'
'कालाक्षमत्वमौत्सुक्यम्।'
'तत्त्वमार्गानुसंधानात् तत्त्वनिर्धारणं मतिः।'
'स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते॥'
'अनिष्टाभ्यागमोत्प्रेक्षा शङ्का'।
'सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसंभवम्।'
'धृतिश्चित्तस्य नैःस्पृह्यं ज्ञानाभीष्टागमादिभिः।'
'ध्यानं चिन्तेहितानाप्तेः शून्यताश्वासतापकृत्।'

एवमसंलक्ष्यक्रमव्यङ्ग्यध्वनिरष्टधा निष्टङ्कितः[7] ॥

---

१ °पमर्दोपनिबन्धो T.; °पमर्दकभावेनोपनिबन्धो G.; °पमर्दभावेनो° C., M. २ °णां प्रशमाय नः T., M.; °णां पशमाय मे G., C. ३ श्रुतिर° G. ४ पास्यति C. ५ धृति° विभावानां D. ६ K. omits भावा. ७ स्कैङ्कगा° K.

संलक्ष्यक्रमव्यङ्ग्यस्तु त्रिधा । शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्य उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति । तत्राद्यस्तावदलंकारस्य वस्तुनो वा व्यज्यमानत्वेन भवन् प्रथमं द्विधा भवति । द्विविधोऽपि पदवाक्यप्रकाश्यः स्यादिति चतुर्विधः ।

क्रमेण यथा

नरसिंह धरापाल के वयं तव वर्णने ।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥

अत्र राजपदेनेन्दोर्विषयस्य प्रस्तुतत्वे विषयिणो नृपस्याक्रमणादिप्रकृतोपयोगिनः प्राधान्येन प्रतीतेः परिणामो व्यज्यते ।

---

अथ संलक्ष्यक्रमव्यङ्ग्यध्वनिं विभजते । संलक्ष्येति । वीणादिवादनानन्तरभावी यो निस्वानस्तदनुरणनं तस्येव रूपं यस्य सोऽनुरणनरूपव्यङ्ग्यः । अत [1]एवोक्तं काव्यप्रकाशे ।

'अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥' इति ।

असंलक्ष्यक्रमव्यङ्ग्यस्तु स्वकारणविभावादिसंबन्धितयैव [2]प्रतीतेर्नानुरणनरूप इति भावः । तत्र शब्दशक्तिमूलं चतुर्धा विभजते । तत्राद्य इति । पदगतशब्दशक्तिमूलानुरणनरूपसंलक्ष्यक्रमालंकारध्वनिः पदगतं[3]शब्दशक्तिमूलानुरणनरूपसंलक्ष्यक्रमवस्तुध्वनिः । एवं वाक्यगतौ द्वौ भेदावित्येवं चतुर्विध इत्यर्थः । आद्योदाहरणेऽलंकारध्वनिमुद्भावयति । अत्र राजपदेनेति । विषयिण आरोप्यमाणस्येत्यर्थः । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति लक्षणम् । आरोप्यमाणस्य नृपस्य स्वतादात्म्येन प्रकृतस्येन्दोराक्रमणीयत्वापादनेनोपयोगात् परिणामालंकारो राजपदमहिम्ना ध्वन्यत इति पदगतशब्दशक्तिमूलत्वम् । तस्य ध्वनित्वे हेतुमाह ।

---

१ °एव निरुक्तं काव्य° K. २ प्रतीयते । तत्र D. ३ तादृग्भूतवस्तुध्वनिः K.

आक्रम्य समरवैरिशेखरसरित्पूरैकसिंहासनं
राजानं नरसिंह पार्थिव तथाहंकारभारोद्धुरः।
त्वत्कीर्तिप्रसरो हसत्ययमसौ शक्रस्य दन्तावलं
व्यालेन्द्रं मुसलायुधं किमपरं देव्याश्च पञ्चाननम्॥

इह करकलितमुसलतया भगवतः सीरपाणेः समरधुरंधरत्वरूपं[1] वस्तु मुसलायुधपदेन व्यज्यते।

हिरण्यकशिपुक्षेत्रदानदर्शितविस्मयः।
न कस्य श्लाघनीयोऽसि नरसिंह जगत्पते॥

अत्र राजनि प्राकरणिकत्वेनाभिधाया[2] नियन्त्रितत्वादप्राकरणिकनृसिंहलक्षणद्वितीयार्थाभिधाने कुतः शक्तिः। सकृदुच्चारितस्य शब्दस्यैकार्थाभिधान एव सामर्थ्यं न द्वितीयार्थाभिधाने। अथाने-

---

प्राधान्येनेति। अन्यथा गुणीभूतव्यङ्ग्यं स्यादिति भावः। आक्रम्येत्यादि। गतमेतत्। अत्र वस्तुध्वनिमुद्भावयति। इहेति।

अथ वाक्यगतशब्दशक्तिमूलमलंकारध्वनिमुदाहरति। हिरण्येति। हिरण्यस्य कशिपुनोऽन्नाच्छादनस्य[4] क्षेत्रस्य भूमेश्च दानेन वितरणेनान्यत्र हिरण्यकशिपोरसुरस्य क्षेत्रदानेन गात्रखण्डनेन दर्शितविस्मयः। अत्र हिरण्यादिवितरणाद्भुतो राजेति प्रकृतो वाच्यार्थः। असुरगात्रखण्डनाद्भुतो भगवान् देवो नृसिंह इत्यप्रकृतो व्यङ्ग्यार्थः। सोऽप्यन्वयव्यतिरेकाभ्यां शब्दशक्तिगम्य एवेति वाक्यगतः शब्दशक्तिमूलोऽलंकारध्वनिरिति[5] भावः। नन्विह न कश्चिदलंकारः प्रतीयते प्रत्युत वाक्यस्यासंबद्धार्थप्रतिपादकत्वं प्राप्तमिति प्रत्यवतिष्ठते। अत्रेत्यादिना यदभिधीयत इत्यन्तेन। कथमसंबद्धत्वमित्याशङ्क्याभिधासंबन्धं तावन्निरस्यति। राजनीति। तर्ह्यभिधान्तरमस्त्वित्याशङ्क्याह। सकृदिति। अनेकार्थस्यापि शब्दस्यैकोच्चारणे एकैवाभिधाशक्तिश्चेष्टते इतरा तु विद्यमानाप्यप्रकृतत्वादुदास्त इत्यर्थः। तर्ह्येकैव शक्तिरर्थान्तरेऽप्यनुवर्ततामित्याशयेन शङ्कते। अथेति। परिहरति। नेति। कुत

---

१ °दुर्धरत्व° T., C., M.; दुर्धरत्वं वस्तु G. २ प्राकरणिकगतत्वे° G., C., M.
३ °नरसिंह° T. ४ °कशिपोः शयनाच्छादनस्य D. ५ °रित्यर्थः K.

कार्थोऽयं शब्दस्तावन्न विरमति यावन्न द्वितीयमर्थमभिधत्त इति चेन्न। अनेकार्थस्य शब्दस्यैवाभावात्। यत् पुनरेकस्यैव शब्दस्यानेकार्थत्वमिव क्वचन प्रतीतिसरणिमनुसरति स महिमा सादृश्यनिबन्धनस्य भ्रमस्य। ततोऽस्य वाक्यस्यासंबन्धार्थाभिधायकत्वमेव प्रसक्तम्। अतो निष्फल एवायं श्लिष्टशब्दान्वेषणप्रयासः कवेरिति यदभिधीयते तदमीमांसितरमणीयम्। नरसिंह इव नरसिंह इत्युपमाया वाक्येन प्रतीयमानत्वात्।

यथा वा

> गौडगुर्जरकर्णाटलाटमालवसेवणाः।
> नरसिंहनृपे दृष्टे भवन्ति करहाटकाः॥

---

इत्याशङ्क्य विरम्य व्यापाराभावोरिति परिहारे स्थिते पक्षान्तरावलम्बनेन मूले कुठारमारोपयति। अनेकार्थस्येति। एकस्य शब्दस्यैक एवार्थ इति न्यायादिति भावः। तर्ह्यनेकार्थताप्रतीतेः का गतिरिति चोद्यमनूद्य गतिमाह। यत् पुनरित्यादि। यत्रानेकार्थोऽयमेकः शब्द इति प्रतीतिर्जायते तत्राप्येकस्य शब्दस्यैक एवार्थ इति न्यायादर्थभेदाच्छब्दभेदे सत्यपि सादृश्यादेकत्वभ्रमः कारणमित्यर्थः। ततः किमत आह। तत इति। एकस्यानेकार्थत्वाभावादित्यर्थः। ततोऽपि किमत आह। अत इति। अलंकारध्वनिस्तु दूरापास्त इति भावः। सर्वलोकप्रसिद्धस्यानेकार्थत्वस्य दुरपह्नवत्वादविचारितरमणीयमुक्तमिति समाधत्ते। तदिति। भ्रान्तत्वाभ्रान्तत्वचिन्ता तु किं नः कवीनामिति भावः। किं त्वभिधायाः कुण्ठत्वादुपक्रम्यत्वमुच्यते असंबद्धत्वं च नास्त्यौपम्यपर्यवसानादित्याह। नरसिंह इवेति। तस्मादयमलंकारध्वनिरिति भावः। अक्लिष्टमुदाहर्तुमाह। यथा वेति। गौडेति[13]। करे हाटकं येषामिति करहाटकाः सुवर्णोपायनपाणयो भवन्तीत्यर्थः। करहाटको नाम देशविशेषोऽप्यस्ति तथा च कथं गौडादयः करहाटका इति

---

१ यावद् द्विती° T. २ द्वितीयार्थं° T. ३ °नेकार्थमिव D. ४ D. omits क्वचन; यत्र क्वचन G., C., M. ५ अतो° T., G., C., M. ६ वाच्यस्या° D. ७ ततो T. ८ स नर° T. ९ वाच्येन D. १० °कलिमालव° D. ११ °सेवुणाः C. १२ व्यापारापत्ति° D. १३ गौडेत्यादि K.

अपिप्रभृतेर्विरोधाभिधायिनः शब्दस्यात्राभावाच्छब्दशक्त्यैव विरोधो वाक्येन व्यज्यते। यद्यप्ययं क्वचन वाक्यार्थे पुरालंकार[1]भावमुपमादिरूपतयानुभवन्नासीत् संप्रति पुनरलंकार्यतामवलम्बते तथापि प्रत्यभिज्ञानबलादलंकारदशापरित्यागेऽप्यलंकारध्वनिरित्यभिधीयते ब्राह्मणश्रमणन्यायेन। तद्रूपाभावेन[2] तूपलक्षितं[3] वस्तुमात्रमुच्यते। मात्रग्रहणमिह रूपान्तरनिराकरणाय। तत्तु यथा

सत्त्वसागर नृसिंह भूपते
तावकैरलममीभिराशुगैः।
वैरिणामसव एव यद्भव-
न्त्याशुगाः कलितकार्मुके त्वयि॥

विरोधालंकारः शब्दशक्त्या वाक्येन ध्वन्यते। ननु यद्यत्र विरोधो व्यङ्ग्यः क्व तर्हि वाच्य इत्याशङ्क्याह। अपिप्रभृतेरिति। यत्र विरोधार्थस्याप्यादेः प्रयोगस्तत्र विरोधस्य परिस्फूर्तिकत्वाद्विरोधो वाच्यः। अत्र तु वैपरीत्याद्व्यङ्ग्य इति भावः। नन्वलंकारस्य ध्वनित्वेऽलंकार्यस्य[4] सतः कथमलंकार[5]व्यपदेशः प्राधान्याप्राधान्ययोरेकत्र विरोधादित्याशङ्क्याह। यद्यपीति। यद्यप्यलंकार्यतामवलम्बते तथापीत्यन्वयः। ब्राह्मणश्रमणन्यायेनेति। श्रमणः शबरः। यथा ब्राह्मणः शबरत्व[7]मागतोऽपि भूतपूर्वगत्या ब्राह्मण इति व्यपदिश्यते तद्वदित्यर्थः। वस्तुतस्तु तदपि वस्त्वेवेति द्रष्टव्यम्। तर्हि वस्तुध्वनिः कीदृगत आह। तद्रूपेति[9]। भूतपूर्वालंकार[10]त्वरहितं यद्वस्तु तद्वस्तुमात्रमित्युच्यते तद्ध्वनिर्वस्तुध्वनिरित्यर्थः। रूपान्तरं भूतपूर्वालंकारभावः। सत्त्वेत्यादि। आशुगा बाणाः शीघ्रं[11]मार्गगत्वराश्च। अत्र व्यङ्ग्य-

१ पुनरलं° T., G.; पुरार्थालंका° C., M. २ तद्भावाभावेन D. ३ °भावेनोपलक्षितं तु T.; अलंकाररूपाभावेनोपलक्षितं C., M. ४ इत्यर्थः D. ५ °स्यासतः K. ६ °लंकार्यव्य° K. ७ श्रमणत्व° K. ८ ब्राह्मणव्यपदेशभाक् K. ९ तद्रूपेणेति D. १० °वस्तुमात्रमुच्यते K. ११ शीघ्रनिर्गत्वराश्च K.

अत्र तव[1] धनुर्धरणमात्रेणैव समरप्राङ्गणेषु सत्वरमेव भवन्ति गत्वराः परिपन्थिनां प्राणा इति वस्तु शब्दशक्तिमहिम्नैव वाक्येन व्यज्यते ॥

अर्थशक्ति[2]मूलानुरणनरूपव्यङ्ग्ये[3] त्वर्थस्य[4] स्वतःसंभवी कविप्रौढोक्तिमात्रनिष्पन्नशरीरः कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरश्चेति त्रयो भेदाः। तेषु त्रिष्वपि भेदेषु वस्तुना वस्त्वलंकारो वालंकारेणापि[5] वस्त्वलंकारो वा व्यज्यत इति चतुष्प्रकार[6]तयास्यार्थशक्तिमूलस्य ध्वनेर्द्वादश प्रकाराः संभवन्ति। एते च पदवाक्यप्रबन्धप्रकाश्यतया प्रत्येकं त्रिधा भवन्तः षट्त्रिंशद् भवन्ति। एकावयवगतेन भूषणेन कामिनीव पदप्रकाश्येनापि व्यङ्ग्येन भारती भवति चमत्काराय[7] सहृदयानाम्। तत्र पद[8]प्रकाश्यत्वेनोदाह्रियन्ते[9]।

---

वस्तु व्यनक्ति। अत्रेति[10]। आशुगादिशब्दशक्त्यैवोक्तवस्तुप्रतीतेरयं वाक्यगतशब्दशक्तिमूलः संलक्ष्यक्रमवस्तुध्वनिरित्यर्थः। एवं शब्दशक्तिमूलश्चतुर्धा दर्शितः ॥

अथार्थशक्तिमूलं विभजते। अर्थशक्तीत्यादि। ननु पदगतेन ध्वनिना काव्यैकदेशवर्तिना चमत्कारः कियानित्याशङ्क्याह। एकावयवगतेनेति। यथा नासामलग्नेन मुक्ताफलेनेति भावः। तत्र पदप्रकाश्यत्वेनेति। तत्र षट्त्रिंशतो भेदानां मध्ये इत्यर्थः। तत्र द्वादश पदगता द्वादश वाक्यगता द्वादश प्रबन्धगताश्च। तत्र पदगतास्तावदुच्यन्त इत्यर्थः। तेऽपि स्वतःसिद्धार्थशक्तिमूला वस्तुना वस्त्वलंकारध्वनी अलंकारेण च वस्त्वलंकारध्वनी इति चत्वारः। एवं कविप्रौढोक्तिसिद्धार्थशक्तिमूलाः कविनिबद्धार्थशक्तिमूलाश्चेति विवेकः। एवं वाक्यगतप्रबन्धगतेष्वपि द्रष्टव्यम्। तत्र पदगतस्वतःसिद्धार्थशक्तिमूलकं संलक्ष्यक्रमे वस्तुना

---

१ T. drops तव २ T. drops शक्ति. ३ °रूपे तु व्यङ्ग्ये T. ४ °र्थतः संभवी C. ५ °लंकारेण व° T., G. ६ चतुःप्रकार° D. ७ °चमत्कारिणी C., M. ८ पदगतप्रका°. ९ उदाह्रियते G., M. १० अत्रेत्यादि K..

नृसिंह वसुधाधिप त्वयि रणोन्मुखे धावतः
प्रतीपपृथिवीपतेः पथि पथि प्रदीप्तक्षुधः।
चिरादगुरवन्ध्यतां दुरवगाहविन्ध्याटवी-
पलाशिविटपाञ्चलाहृतफलार्पणेन द्विपाः॥

अत्रावन्ध्यतामगुरित्यादिना वस्तुना गजगतं युद्धवन्ध्यत्वरूपं वस्तु चिरादिति पदेन व्यज्यते।

नृसिंह क्ष्मापाल त्रिदशतटिनीवीचितुलिते
यशःपूरे दूरात्तव जगदिदं पूरितवति।
समुन्मीलत्कालागरुबहुलधूमप्रणयिनी-
स्तमस्तोमस्ताम्यन् विशति कबरीः पक्ष्मलदृशाम्॥

अत्र प्रवेशनादिरूपेण वस्तुना त्वद्यशोधवलिते जगति पक्ष्मलदृशां कबरीष्वेव श्यामिकेति परिसंख्यालंकारः कबरीपदेन व्यज्यते।

समरवसुन्धरासु नरसिंह धराधिपते
रिपुनृपमौलिनीलमणयस्तव पादयुगे।
सरसविकस्वरारुणसरोरुहलोभलग-
न्मधुकरमण्डलीललितडम्बरमादधते॥

वस्तुध्वनिमुदाहरति। नृसिंहेति। पलाशिविटपाञ्चला वृक्षशाखाग्राणि। विन्ध्याटवीग्रहणं वृक्षाणामस्यौन्नत्यद्योतनार्थम्। चिरादिति पदेनेति। तदर्थशक्त्येत्यर्थः। पदस्य तु तत्सहकारित्वम्। एवमुत्तरत्रापि द्रष्टव्यम्। वस्तुनालंकारध्वनिमुदाहरति। नृसिंहेत्यादि। कबरीः केशपाशान्। "जानपद—" इत्यादिना ङीप् प्रत्ययः। कबरीष्वेवेति। कबरीष्वन्यत्र च प्राप्तायाः श्यामिकायाः कबरीष्वेव नियमनात् परिसंख्या। 'एकस्यानेकत्र प्राप्तावेकत्र नियमनं परिसंख्या' इति लक्षणादित्यर्थः। अलंकारेण वस्तुध्वनिमुदाहरति। समरेत्यादि। अत्र निदर्श-

१ पलाश° G., O., M. २ °रूपवस्तु D. ३ °ललिते D. ४ °गुरु° G. ५ °बहल° T. ६ °धूप° M. ७ °नीतमणय° D. ८ नृसिंहेत्यादि K. ९ पलाश° K.

अत्र निदर्शनालंकारेण रणक्षोणीषु[1] क्षणमपि तव[2] चरणप्रणामाद्विरमन्ति न त्राणार्थिनः प्रत्यर्थिन इति वस्तु लगदिति पदेन व्यज्यते।

पूर्वं पयोधेरुदरे स्थितासि
ततः सुधे त्वं हृदये सुधांशोः।
मुखे कलिङ्गाधिपतेरिदानीं
यथोत्तरं धाम तवाभिरामम्॥

अत्र पर्यायालंकारेण वाक्सुधयोर्भेदेऽप्यभेद इत्येवंरूपातिशयोक्तिर्मुख इति पदेन व्यज्यते। एषूदाहरणेषु स्वतःसंभविनोऽर्थस्य व्यञ्जकत्वम्॥

हेमाद्रेः कन्दरायां[3] रतिरमणरणाटोपविच्छिन्नहार[4]-
व्यस्तं मुक्ताफलानां तमसि तत इतः स्तोममन्वेषयन्त्याः।
कस्याश्चित् स्वस्तरुण्या निकटगतनिजप्राणनाथोपगीता
कीर्त्तिज्योत्स्ना त्वदीया क्षणमकृत मुदं श्रीनृसिंह क्षितीन्द्र॥

अत्र वस्तुना तमस्यपि[5] प्रकाशं कृतवती भवतः कीर्त्तिरिति वस्तु मुदमिति पदेन प्रकाश्यते।

---

नेति। अन्यस्यान्यधर्मस्वीकारासंभवात् डम्बरमिव डम्बरमिति सादृश्याक्षेपाद्वस्तुसंबन्धरूपा निदर्शनेत्यर्थः। विरामे लगत्वासंभवाल्लगत्वादस्य व्यञ्जकत्वमित्यर्थः। अलंकारेणालंकारध्वनिमुदाहरति। पूर्वमिति[6]। अत्रैकस्याः सुधाया उदराद्यनेकाधारवृत्तिनिबन्धनात् क्रमेणैकस्यानेकत्र वृत्तिरूपः पर्यायभेदः। तस्य च मुखे मुख्यसुधानुपपत्तेः वाचि सुधात्वाध्यवसानमन्तरेणानिर्वाहान्मुखपदार्थशक्त्या तद्व्यञ्जकत्वमित्यर्थः। स्वतःसिद्धार्थशक्तिमूलाश्चत्वारो भेदा दर्शिता इत्याह। एष्विति॥

अथैवं कविप्रौढोक्तिसिद्धार्थशक्तिमूलानपि चतुरो भेदान् क्रमेणोदाहरति। हेमाद्रेरिति। रतिरमणरणं सुरतक्रीडा। अत्र वस्तुनेति। मोदकरणरूपेणेत्यर्थः।

---

१ °क्षोणिषु T. २ T. and M. drop तव. ३ कन्दराणां D. ४ °हारे D. ५ D. drops अपि. ६ °मित्यादि K.

अम्भोजभूचन्द्रकलावतंस-
कंसद्विषः कुत्र पदं लभन्ताम्।
यशश्रियस्ते महिमा समन्ताद्
व्याप्नोत्ययं वीर नृसिंह देव ॥

अत्र वस्तुना त्वद्यशोधवलिते जगति पुण्डरीकप्रभृतयो[1] न[2] शक्यन्ते विभावयितुमिति महिमेति पदेन सामान्यालंकारः प्रकाश्यते।

तनौ दत्त्वा पाकोन्मुखशरसखीं कामपि रुचिं
रिपुस्त्रीभ्यस्तासां कलयसि[3] कलिङ्गक्षितिपते[4]।
प्रभां ताटङ्कानां श्रवणकुसुमानां विलसितं[5]
स्मितानामालोकं स्तनमलयजानां श्रियमपि ॥

अत्र परिवृत्त्यलंकारेण त्वत्पलायितारि[6]तरुणीतनौ विरहपाण्डिमा समुज्जृम्भत इति वस्तु पाकोन्मुखशरसखीमिति पदेन प्रकाश्यते[7]।

---

अम्भोजेत्यादि। कुत्र पदं लभन्तामिति। स्वाश्रयपुण्डरीकहिमाद्रिक्षीराब्धीनां यशोमग्नतया दुर्ग्रहत्वान्न कुत्रापि पदलाभ इत्यर्थः। अत्र वस्तुनेति। यशोव्याप्तिरूपेणेत्यर्थः। पुण्डरीकप्रभृतय इत्येव पाठः। क्वचिद् भूशब्दः प्रामादिकः। अन्यथा सामान्यालंकारानुत्थानात्। 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति तल्लक्षणम्। न च पुण्डरीकभूप्रभृतीनामिव पुण्डरीकप्रभृतीनां गुणसाम्येन यशसैक्यं संभवति। अन्यथा श्लोके पदग्रहणं बाध्येत। प्रभृतिशब्देन हिमाचलपयःपारावारयोः संग्रहः। तनावित्यादि। शरसखीं शरसदृशीमित्यर्थः। स्वपरपदार्थविनिमयः परिवृत्तिः सा चेह न्यूनाधिकस्वीकाराभ्यूनपरिवृत्तिरिति विशेषः।

---

१ पुण्डरीकभूप्रभृतयो D. २ विभावयितुं न शक्यन्त इति T. ३ कलयति D. ४ °क्षितिपतिः D. ५ विकसितं G. ६ त्वद्रुपला° T., G., C., M. ७ प्रकाशते G.

त्वत्खड्गधारा समरे पतन्ती
मूर्ध्नि द्विषां वीर नृसिंह देवे।
विलोक्यतां क्षालयति क्षणेन
तदङ्गनानां स्तनपत्रभङ्गान् ॥

अत्रासंगत्यलंकारेण नवजलधाराविलक्षणेयं तव करवालधारेति व्यतिरेकालंकारो विलोक्यतामिति पदेन प्रकाश्यते। एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम् ॥

भुवः केलीतल्पं जयति नरसिंहक्षितिभुजो
भुजः शौर्यक्रीडाडमरसमरारम्भलटहः।
नवप्रेयोलाभप्रमुदितसमस्ताम्बरचरी-
विकीर्णैर्मन्दारैर्विततमुपहारं भजति यः ॥

अत्र वस्तुना समराभिमुखानशेषानपि सर्वथा निहन्त्येव रिपूनयमिति वस्तु नवप्रेयोलाभेनेत्यादिना पदेन द्योत्यते।

धूर्ताधोरण देव वासव कथं पङ्केन लिप्तः करी
पातुं तोयमुपागतः सुरनदीं तत्रास्ति पङ्कः कुतः।
सर्वाशाविजयोत्सवं प्रति कृतोद्योगे कलिङ्गेश्वरे
स्फायन्ते करिकर्णतालपवनोद्धूताश्वमूरेणवः ॥

त्वदित्यादि। अत्र कार्यकारणयोः क्षालनधारापातयोर्भिन्नदेशत्वादसंगत्यलंकारः। उपमेयस्य करवालधाराया धारान्तरादुपमानादाधिक्यप्रतीतेर्व्यतिरेको ध्वन्यत इत्यर्थः। कुतूहलपदेत्यनेन श्लोके विलोक्यतामित्यत्र कुतूहलादिति पाठ उन्नेयः।

अथ कविनिबद्धार्थशक्तिमूलांश्चतुरो भेदान् क्रमेणोदाहरति। भुव इत्यादि। डमरो भयंकरः। लटहः प्रौढः। अत्र वस्तुनेति। विशिष्टमन्दारोपहारभजनरूपेणेत्यर्थः। धूर्तेत्यादि। स्फायन्ते संमूर्च्छन्तीत्यर्थः।

१ भूप D. २ कुतूहलात् is also noticed in the Com. ३ नवजलधरधारा° C., M. ४ D. omits अर्थस्य. ५ लभटः D.; लटहः C. ६ °मन्दारैः स्तिमित° G. ७ T. omits अशेषान्. ८ स च नदीं M. ९ स्फायन्ति D. १० द्विपकर्ण° D.

अत्र वस्तुना सुरनद्याश्मूरेणुभिरसंबन्धेऽपि संबन्धः कृत इति स्फायन्ते[1] इति पदेनातिशयोक्ति[2]रलंकारो द्योत्यते[3] ।

आयोधनेषु रभसादधिरूढवत्या
वीरश्रियः स्तननितम्बभरातिभारात् ।
हन्तुं नृसिंह नृपतेर्न भुजः कथंचित्
पादोपकण्ठपतितान् क्षमते विपक्षान् ॥

अत्र जीवन्त एव परिपन्थिनो मुक्ता इति कार्ये पृष्टे[4] नृसिंहनृपतिभुजः कथमपि न हन्तुं क्षमते[5] इति कारणाभिधानरूपाप्रस्तुतप्रशंसोपजीवनप्रवृत्तप्रतीयमान[6]हेतूत्प्रेक्षा[7]नुप्राणितेन व्याजस्तुत्यलंकारेणानवरतक्षात्रधर्माचरणप्रवणत्व[8]रूपं वर्णनीयविषयं वस्तु पादोपकण्ठपतितानित्यनेन पदेन द्योत्यते ।

---

अत्र वस्तुनेति करेणुभिः पङ्कलेपरूपेणेत्यर्थः । आयोधनेष्वित्यादि । इहाप्रस्तुतप्रशंसोत्प्रेक्षाव्याजस्तुतीनामङ्गाङ्गिभावेन संकरः । तेन राज्ञो नित्यविजयित्वं वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिरिति व्यनक्ति । अत्रेत्यादि । कार्यकारणसामान्यविशेषसरूपाणामन्यतमस्याप्रस्तुतस्य कथनात् तत्प्रतियोगिनः प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसा । अत्र हन्तुमक्षमत्वरूपकारणाज्जी[9]वनामोचनरूपकार्यावगमेन कारणात् कार्यावगमरूपाप्रस्तुतप्रशंसा । पृष्ट इत्यनेन कार्यस्या[10][11]प्रस्तुतत्वमुक्तम् । तद्विषयभूताक्षमत्वेऽतिभारादिवेति हेतोरुत्प्रेक्षणादुत्प्रेक्षायास्तदुपजीवनप्रवृत्तत्वं व्यञ्जकाप्रयोगात् प्रतीयमानत्वम् । निन्दया स्तुतेः स्तुत्या वा निन्दाया गम्यत्वे व्याजस्तुतिः । अत्राक्षमत्वरूपया निन्दया राज्ञः शरणागतत्राणपरायणत्वपरमकारुणिकत्वनिषेधभीरुत्वादिरूपस्तुतिप्रतीतिर्व्याजस्तुतिभेदः । स चाक्षमत्वनिर्वाहायोक्तोत्प्रेक्षासापेक्षत्वात् तदनुप्राणितः 'क्षात्रधर्मोऽपि विजयः क्षत्रि-

---

१ स्फायन्तीति D. २ °योत्तयलंकारो T. ३ व्यज्यते T. ४ दृष्टे D., T. ५ क्षम इति G. ६ °वस्तूत्प्रे° G. ७ °त्प्रेक्षणानु° T. ८ °प्रवणात्मरूपं G. ९ °जीविता° K. १० कार्यत्वा° K. ११ कार्याप्र° K.

बाहुस्ते नरसिंह देव विजयश्रीकेलिसौधध्वज-
स्तत्रापि प्रलयाग्निधूमरुचिना खड्गेन सख्यं गतः ।
निर्मर्यादविशीर्यमाणविशिखप्राग्भारशात्कारिणि
प्राक्रीडत् समरे सपत्नहरिणाक्षीणां ह हा हा विधिम् ॥

इह कारणाभिधानरूपाप्रस्तुतप्रशंसानुगृहीतेन काव्यलिङ्गेन सपत्नहरिणाक्षीणां दशा वचनगोचरतामपि नेतुं न शक्यत इति भणितिनिषेधेन वक्ष्यमाणविषय आक्षेपालंकारो ह हा हा विधिमिति पदेन द्योत्यते । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम् ॥

वाक्यप्रकाश्यत्वेन यथा ॥

---

यस्य हि जीवितम्' इति तद्वृत्तिस्मरणादिति भावः । बाहुरित्यादि । स्वदाहुर्निसर्गजित्वरस्तत्रापि खड्गग्राही रणे प्रवृत्तः किल तदरिनारीणां विधिं दुर्दशां हा धिक् विधिः किमुच्यते इत्यर्थः । "अभितः परितः——" इत्यादिना हा शब्दयोगे द्वितीया । अत्र प्रस्तुतारिनारीविधिज्ञानाय तत्कारणभुजमहिमाभिधानादप्रस्तुतप्रशंसाभेदे तद्विषयभूतस्य महिम्नो भुजविशेषणानुप्रवेशनारीदुर्दशाज्ञानहेतुत्वेन पदार्थहेतुककाव्यलिङ्गोत्थापकत्वादनुगृहीतं तदिति तत्संकीर्णकाव्यलिङ्गमिह वाच्योऽलंकारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' । तेनाक्षेपो व्यज्यत इत्यलंकारेणालंकारध्वनिरित्यर्थः । प्रकृतस्योक्तस्य वक्ष्यमाणस्य वा निषेधाभास आक्षेपः । तत्र द्वितीये उक्तानिषेध एव यथा । 'सा नूनमाः किमथवा हतजीवितेन' इति । उक्ताः पदगताः ॥

अथ वाक्यगतानपि पूर्ववद्द्वादशभेदानुदाहर्तुमाह । वाक्यप्रकाश्यत्वेनेति ।

---

१ 'विकीर्यमाण' D. २ °क्षीणामपि G. ३ °गोचरतां नेतुं G. ४ इति निषेधे वक्ष्य° T. ५ 'विषयाक्षेपा' D. ६ 'संकीर्ण K. ७ पूर्ववद् वाक्यदशभे° K.

एतास्ताराः समन्ताद्दिशि दिशि नभसि प्राप्य धाम स्वकीयं
निःसापत्न्यप्रकर्षप्रकटनपटुतां नाटयन्त्यः स्फुरन्तु ।
किं चन्द्रः कुत्र तिष्ठत्ययमियमधुना तस्य वार्त्तापि लुप्ता
कीर्त्तौ विस्फूर्त्तिमत्यां शुभचरितनिधेः श्रीनृसिंहस्य राज्ञः ॥

अत्रैतास्ताराः स्फुरन्त्विति विधिरूपेण वस्तुना न स्फुरन्त्विति निषेधरूपं वस्तु व्यज्यते । विधिनिषेधौ हि भावाभावरूपतया विरुद्धाविति न कस्यापि विमतिः । अनयोस्तु वाच्यत्वं तावन्न यौगपद्येन । असंभवात् । नापि क्रमेण । विरम्य व्यापाराभावात् ।

संघर्षोत्कर्षरिङ्खत्प्लवनकपिकुलोन्मूलितोत्तालशैल-
प्राग्भारैः सेतुबन्धो दशवदनशिरश्छेदनाय व्यधायि ।
पूर्वं तावत् त्वयासौ महति जलनिधौ सांप्रतं तत्र सेतुं
कं वा जेतुं नृसिंह क्षितिप रचयसि स्वैर्यशश्चन्द्रकान्तैः ॥

अत्र रावणवधाय वारिधौ सेतुस्त्वया बद्ध इत्येवंरूपेण वस्तुना त्वमेव राम इति रूपकं व्यज्यते ।

---

ततः स्वतःसिद्धार्थशक्तिमूलेषु वस्तुना वस्तुध्वनिमाह । **एता** इत्यादि । यत्र चन्द्रोऽपि तत्र स्फुरति न ताराः स्वयं स्फुरन्तु नामेति काक्वा तासां कुतः स्फुरणमिति निषेधो व्यज्यत इत्याह । **अत्रेति** । नन्विह विधिनिषेधयोर्द्वयोरपि वाच्यत्वं किं न स्यादित्याशङ्क्य तयोः परस्परपरिहारात्मकत्वं तावदाह । **विधिनिषेधाविति** । ततः किमित्याशङ्क्य नानयोर्युगपत् क्रमाच्च न वाच्यत्वमित्याह । **अनयोरि**त्यादिना । वस्तुनालंकारध्वनिमाह । **संघर्षे**त्यादि । संघर्षोत्कर्षः स्पर्धातिरेकः तेन रिङ्खत्प्लवनैः प्रवृत्तप्लवैः कपिकुलैरुन्मूलिता

---

१ °परतां T. २ वार्त्ता विलुप्ता T., G. ३ कान्तौ D. ४ स्फुरन्तीति G. ५ यौगपद्ये त्वसंभ° T. ६ संकर्षो° T. ७ °रिङ्खत्प्रबलकपि° T., G., C., M. ८ नावाच्यत्व° K. ९ वस्त्वलंकार° K.

16

पृथ्वीभारावतारं कृतवति भवतो दोष्णि हर्षेण दूतः
[1]शेषेण [2]प्रेषितोऽसौ निवसति भुजगः कोऽपि संवादहेतोः ।
[3]क्रुध्यत्कालीकटाक्षद्युतिदलनकलाकेलिकारस्त्वदीये
पाणौ नायं कृपाणः शुभचरितनिधे श्रीनृसिंह क्षितीन्द्र ॥

अत्रापह्नुत्या सकलैरपि विपक्षैर्दुर्निरी[4]क्ष्यस्त्वत्कौक्षेयक इति वस्तु व्यज्यते ।

सेनारजोभिस्तव तिग्मभानु-
राच्छादितोऽसौ नरसिंह देव ।
विरोधिशुद्धान्तमृगेक्षणानां
वक्त्रेन्दुरासीन्मलिनप्रकाशः ॥

[6]इहासंगत्यलंकारेण ध्वजिनीसमुद्भूतधू[7]लीश्यामलितनभोमण्डलावलोकनसमकालमेव रिपुभू[8]पालाः पलायन्त इत्यतिशयोक्तिरलंकारो व्यज्यते । उत समरपराङ्मुखत्वमभजन्त भूभुज इति कार्ये प्रस्तुते रजःपुञ्जपिञ्जरितगगनतलनिर्भालनानुमितस्याप्रस्तुतस्य

---

उत्पादिता उत्ताला उन्नता ये शैलप्राग्भाराः शैलराशयस्तैरित्यर्थः । पृथ्वीत्यादि । संवाद एव हेतुस्तस्य तदर्थमित्यर्थः। "षष्ठी हेतुप्रयोगे" इति षष्ठी । अत्रापह्नुत्येति । ...ऽयं न कृपाण इत्यारोप्यापह्नवरूपयेत्यर्थः । कुक्षौ भवः कौक्षेयकोऽसिः । "कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु" इति शैषिको ढकञ्प्रत्ययः । सेनेति[11] । अत्र भानौ रजश्छादनं वक्त्रेन्दोर्मालिन्यमिति कार्यकारणयोर्भिन्नदेशत्वरूपोऽयमसंगत्यलंकारो वाच्यः । तेन बहवोऽलंकारा व्यज्यन्त इत्याह । इहासंगत्यलं[12]कारेणेति । अतिशयोक्तिरिति पलायनावलोकनयोः समकालमेवेत्येककालत्वोक्त्या कार्यकारणपौर्वापर्यविध्वंसनरूपेत्यर्थः । उतेति । अथवेत्यर्थः ।

---

१ दोषेण D. २ प्रेरितो G. ३ क्रुध्यन् D. ४ °रीक्षस्ते कृपाण° T., G., C., M. ५ °प्रभावः M. ६ अत्रा° C. ७ °धूलि° T., M. ८ °भूपाः T. ९ भूपतय G., C., M. १० °विभावना° D. ११ °त्यादि K. १२ °कारेणेत्यादिना K.

सेनाबाहुल्यरूपस्य कारणस्याभिधानादप्रस्तुतप्रशंसा । उतस्वि-द्विषादाद्यनुभावत्वेनोपनिबद्धाद्विरोधिवधूवदनमालिन्यलक्षणात् कार्यात् प्रस्तुताज्झटिति रिपुसुभटरणापसरणादिरूपस्य कारणस्य प्रस्तुतस्यैव प्रतीतेः पर्यायोक्तम् । एषूदाहरणेषु स्वतःसंभविनोऽर्थस्य व्यञ्जकत्वम् ॥

सुराङ्गनाभ्यो मलये त्वदीयं
श्रुत्वा यशो वीर नृसिंह देव ।
जिह्वाञ्चलान्युल्ललयन्ति दुग्ध-
मृणाललोभादुभयेऽपि नागाः ॥

अत्र रसनाञ्चलोल्लोलनरूपेण वस्तुना विशिष्टचैतन्यशून्यानामपि चमत्कारं करोति यशस्त्वदीयमिति वस्तु व्यज्यते ।

वियोगिनो बिभ्यति वैरिवीराः
कौतूहलीमश्नुवते चकोराः ।
त्वत्कीर्त्तिमालोक्य कलिङ्गनाथ
विजृम्भमाणां बहुलेऽपि पक्षे ॥

---

निर्भालनमीक्षणम् । निर्भालयत ईक्षत इति भट्टमल्लः । अप्रस्तुतप्रशंसेति । कारणकथनात् कार्यावगमरूपेत्यर्थः । प्रस्तुतकार्योक्त्या प्रस्तुतस्यैव कारणस्य गम्यत्वे पर्यायोक्तम् ॥

अथ कविप्रौढोक्तिसिद्धार्थशक्तिमूलानाह । सुराङ्गनाभ्य इति । दुग्धं क्षीरम् । उभयेऽपि नागाः सर्पा गजाश्च । अत्र वस्तुना वस्तुध्वनिमुद्भावयति । अत्रेति । अत्र नागानां यशसि दुग्धमृणालभ्रान्त्या भ्रान्तिमदलंकारः । तेन यशसो दुग्धमृणालौपम्यं गम्यत इत्यलंकारेणालंकारध्वनिर्भाति तथापि व्युत्क्रम इति नोद्भावितः । वियोगिन इत्यादि । कुतूहलमेव कौतूहली । चातुर्वर्ण्यादित्वात्

---

१ °निबद्धविरोधि° D. २ भूप D. ३ °भूपाः G., C., M. ४ कौतूहलं संदधते T., G., C.; कुतूहलं संदधते M. ५ बहुलेऽथ G. ६ निहालन° K. ७ निहाल्यत K. ८ °त्यादि K. ९ K. omits अत्र. १० °ध्वनिरस्ति D.

अत्र वस्तुना भ्रान्तिमदलंकारो व्यज्यते।

उद्गीयमानमनिशं सुरसुन्दरीभि-
र्दानं निशम्य भवतो नरसिंह भूप।
म्लानेषु निर्जरतरोर्नवपल्लवेषु
शच्या तवैव यशसा विहितोऽवतंसः॥

अत्र परिणामेन निरतिशयं तव वितरणमिति वस्तु व्यज्यते।

पृथ्वी पूर्वापरगिरिघनोत्तुङ्गवक्षोजनम्रा
भूषा बाह्वोरजनि भवतः श्रीनृसिंह क्षितीन्द्र।
बाहुश्चास्याः सुरगजकरस्थूलदीर्घः समग्रां
कान्तिं पुष्णात्यघटघटनाचातुरीयं विधातुः॥

अत्रान्योन्यालंकारेणोपमेयोपमा व्यज्यते। एषु कविप्रौढोक्तिमात्र-निष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम्॥

---

स्वार्थे ष्यञ्प्रत्ययः। "षिद्गौरादिभ्यश्च" इति ङीष्। अत्र वस्तुनेति। वियोगिनां चकोराणां च कीर्त्तिविलोकनहेतुकभयकुतूहलप्राप्तिरूपेणेत्यर्थः। तस्य यशसि चन्द्रिकाभ्रान्तिनिबन्धनत्वाद्भ्रान्तिमदलंकारव्यञ्जकत्वमित्यर्थः। उद्गीयमानमित्यादि। अत्र यशसावतंसं विहितमिति यशस्यारोप्यमाणस्यावतंसस्य स्वतादात्म्येन प्रसाधकत्वसाधकत्वेन तदुपकारकत्वात् परिणामः। पृथ्वीत्यादि। न घटत इत्यघटो दुर्घटः। पचाद्यजन्तेन नञ्समासः। तस्य घटना। अत्र पृथ्वीबाह्वोरन्योन्यशोभाजनकत्वादन्योन्यालंकारः। 'तदन्योन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्।' तेनानयोरन्योन्यमेकैकस्यैव क्रमेणोपमानोपमेयरूपतारूपोपमेयोपमालंकारो व्यज्यते। 'पर्यायेण द्वयोस्तस्मिन्नुपमेयोपमानता' इति॥

---

१ °भिः श्रुत्वा यशस्तु भव° T. २ रचितो° G., C., M. ३ हे नृसिंह M. ४ G. drops मात्र. ५ D. drops शरीर. ६ यशसां वतंसत्वं K. ७ °कारकत्वेन K.

कस्त्वं भद्र वनेचरः कथय नः कुञ्जं कमप्युद्भट-[1]
ध्वान्तं साध्वसमीदृशं तव कुतो जातं कलिङ्गेश्वरात्।
गीतैस्तस्य यशोभिरस्ततमसः कुञ्जास्ततः किं मया
कार्यं मा भव कातरः स हि सदा जागर्ति वीरव्रते॥

अत्र वस्तुना वाक्यार्थरूपेण[2] भीतं पलायितमरण्यवासिनं हन्ति किं भवन्तमिति नरसिंहनरपतिविषयमनवरतक्षत्रधर्माचरणप्रवण[3]त्वरूपं वस्तु व्यज्यते।

युक्ता विपक्षेषु कृपा न कर्त्तु-
मेते विकुर्वन्ति हि[4] कार्यकाले।
इत्याहवे वीक्ष्य कलिङ्गनाथं
नाथन्त्यमी प्राञ्जलयः सपत्नाः॥

अत्र वस्तुना तद्दूषणावसरे न वयं शत्रव इति ध्वन्यते। निषेध

अथ वाक्यगतानेव कविनिबद्धार्थशक्तिमूलांश्चतुरोऽपि भेदानाह। कस्त्वमित्यादि। इहाष्टप्रश्नोत्तरवाक्यानि। वीरव्रतमपरावृत्तहननं तत्र जागर्त्ति ततो न प्रमाद्यति। अतस्त्वामेष न हन्तीति भावः। अत्र व्यङ्ग्यव्यञ्जकत्वे विविनक्ति। अत्र वस्तुनेति। वाक्यार्थेनेति। वीरव्रतजागरणरूपेणेत्यर्थः। हन्ति किं न हन्त्येव। 'न भीतं न पलायितम्' इति निषेधादितिभावः। क्षात्रधर्मो धर्मविजयित्वम्। वस्तुमालंकारध्वनिमाह। युक्तेत्यादि। आहवे सपत्नाः कलिङ्गनाथं वीक्ष्य स्वामिन् विपक्षेषु कृपा न युक्ता हि यस्मात् ते कार्यकाले विकुर्वन्त्यपकुर्वन्तीति नाथन्ति याचन्त इत्यन्वयार्थौ। अत्र केन वस्तुना कोऽलंकारो व्यज्यत इत्याकाङ्क्षायामाह। अत्र वस्तुनेति। शत्रवो नानुकम्प्या इति याञ्चारूपवाक्यार्थेनेत्यर्थः। दूषणावसरे एते विकुर्वन्तीति शत्रुदूषणसमय इत्यर्थः। तेन स्वयमेव स्वदूषणायो-

१ किमप्यु° T. २ वाक्यात्मरूपेण G. ३ D. drops प्रवण. ४ च D. ५ इति .त्रः K.

एवायमिति किं हृदयम्। न हि न हि। स्वयं शत्रुभिरेव शत्रुत्वनिषेधस्य कृतत्वात्। ततश्च एष निषेधो बाधितः शत्रूणां निर्विकारत्वसततहितकारित्वादिविशेषं व्यनक्तीत्युक्तविषय आक्षेपो व्यज्यते।

प्रागासीन्मकरन्दपिच्छिल[2]तले पद्मस्य गर्भे ततः
शौरेः कौस्तुभकान्तिपूर[3]सुभगाभोगे भुजाभ्यन्तरे।
आवासस्तव लक्ष्मि संप्रति पुनर्निर्व्याजमूर्च्छत्कृपा-
स्रोतःशीतलिते नृसिंहवसुधानाथस्य नेत्राञ्चले॥

अत्र पर्यायालंकारेणोन्नतपदप्राप्तिकृतार्थीकृतात्मनो लक्ष्म्याः कलिङ्गेश्वरं प्रति प्रेमातिशयरूपं वस्तु व्यज्यते।

---

गाद्यात्मनि शत्रुनिषेधप्रतीतेराक्षेपालंकारो व्यङ्ग्य इत्यर्थः। गूढाभिसन्धिः परः पृच्छति। **निषेध एवेति**। मुख्यनिषेध एव किमित्यर्थः। एवकारो निषेधाभासव्यावृत्त्यर्थः। निषेधस्य मुख्यत्वे तदाभासात्मक आक्षेपो न संभवतीति भावः। ज्ञातपराभिसंधिरुत्तरमाह। **न हीति**। न मुख्योऽयं निषेध इत्यर्थः। अमुख्यत्वे हेतुमाह। **स्वयमिति**। अग्न्यानुष्णत्ववत् प्रमाणसिद्धस्यैव शत्रुत्वनिषे[4]धादित्यर्थः। ततः किमत आह। **ततश्चेति**। ततश्चानुष्णत्वनिषेधवदाभास इत्यर्थः। निषेधाभासस्य फलमाह। **शत्रूणामिति**। निर्विं[5]कारत्वमेते विकुर्वन्तीत्युक्तदोषरहितत्वम्। फलितमाह। **इतीति**। न शत्रवो वयमिति शत्रुत्वानुवादेन निषेधादुक्तविषय आक्षेप इ[6]त्यर्थः। उक्तस्य वक्ष्यमाणस्य वा प्रकृतस्य निषेधाभास आक्षेप इत्युक्तम्। अलंकारेण वस्तुध्वनिमाह। **प्रा[7]गिति**। व्यङ्ग्य[8]व्यञ्जके विविनक्ति। **अत्रेति**। **पर्यायालंकारेणेति**। क्रमेणैकस्यानेकाधारवृत्तिरूपेणेत्यर्थः।

---

१ °निर्विकारित्वात् तदहित° T.; निर्विकारत्वात् तदहित° C., M. २ °पिच्छलदले D.; °पिञ्जरतले M. ३ °पुञ्ज° G. ४ °निषेधवदेवा° D. ५ निर्विकारित्व° D. ६ D. drops इत्यर्थः ७ प्रागित्यादि K. ८ व्यङ्ग्यव्यञ्जकत्वे D.

का त्वं भीरु वधूः प्रसूनधनुषः किं कर्त्तुं[1]मागाः पुनः
स्नातुं कुत्र मुने निसर्गविमले मन्दाकिनीस्रोतसि ।
मा गास्तत्र नृसिंहपार्थिवकरश्लाघासमाकर्णन-
म्लानस्वस्तरुशीर्णपर्णपटलीपातैः[2] कषायं पयः ॥

अत्रातिशयोक्त्यानितरसाधारणं[3] नृसिंहभूपतिवितरणमिति व्यतिरेको व्यज्यते । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य व्यञ्जकत्वम् ॥

य[4]द्यपि शब्दार्थयोः प्रत्येकं व्यञ्जकत्वमुक्तं तथापि यत्र शब्दस्य व्यञ्जकत्वं तत्रार्थस्यापि सहकारित्वम् । यत्र पुनरर्थस्य व्यञ्जकत्वं तत्र शब्दस्य ॥

---

अलंकारेणालंकारध्वनिमाह । का त्वमित्यादि । अत्र कस्यचित् मुनेः कामस्य वध्वाश्च प्रश्नोत्तरवाक्यानि पूर्वार्धे षट् । तत्र स्नातुं कुत्रेति चागमनक्रियानुषङ्गात् पृथग्वाक्यद्वयम् । कषायं गन्धदूषितमित्यर्थः । अत्रातिशयोक्त्येति । मन्दाकिनीपयसोऽपि विशिष्टदुर्गन्धासंबन्धेऽपि संबन्धोक्तेरसंबन्धे संबन्धरूपयेत्यर्थः । व्यतिरेक इति । उपमानात् कल्पतरोरुपमेयस्य राज्ञ आधिक्यादाधिक्यवर्णनरूप इत्यर्थः ।

ननु शब्दस्य व्यञ्जकत्वेऽर्थस्य वैयर्थ्यं तथार्थस्य व्यञ्जकत्वेऽपि शब्दस्येत्याशङ्क्याह । यद्यपीति । शब्दव्यङ्ग्येष्विति शेषः । सर्वत्र शब्दार्थयोरन्यतरस्य प्राधान्यमन्यस्य तत्सहकारित्वं न तु वैयर्थ्यमित्यर्थः । उक्ता वाक्यगताः ॥

---

१ °जीर्ण° T. २ °पुञ्जैः D. ३ नेतर° D. ४ G., C. and M. have the following before यद्यपि—अथेदानीं मध्यकाव्यं निरूप्यते । अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ यद्यपि ध्वननं नाम शब्दव्यापारः and D. has the following:—यद्यपि ध्वननं नाम शब्दव्यापार.

प्रबन्धप्रकाश्यत्वेन यथा श्रीमहाभारते गृध्रगोमायुसंवादे

'अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥'

अत्र बन्धुषु निवृत्तेषु ममोपभोगाय [2]भवत्वयं शव इति दिवावलोकिनो गृध्रस्य गोमायुवञ्चनाभिलाषरूपं वस्तु [4]वस्तुनैव प्रबन्धेन व्यज्यते ।

'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किताः ॥'

अत्रापि रात्रौ [6]ममैवायमु[7]पभोगाय संपत्स्यत इति पुरुषव्यावर्त्तनपरस्य गोमायोर्गृध्रप्रतारणाभिप्रायरूपं वस्तु वस्तुनैव प्रबन्धेन द्योत्यते । एवमपरेऽप्यर्थशक्तिमूलस्य ध्वनेरेकादशप्रबन्धप्रकाश्यभेदाः प्रबन्धान्तरेषु द्रष्टव्याः ॥

---

° अथ प्रबन्धगतार्थशक्तिमूलानपि वक्तुमाह । प्रबन्धेति । तत्रापि स्वतःसिद्धार्थशक्तिमूलेषु वस्तुना वस्तुध्वनिमाह । अलमिति । वस्तुनैवेति । प्रबन्धार्थरूपेणेत्यर्थः । भेदान्तराणि स्वेकादशापि प्रबन्धगतानि स्वयमूह्यानि । विस्तरभयान्नोदाह्रियन्त इत्याह । एवमपरेऽपीति ॥

---

१ D. omits श्री. २ भवत्ययं D. ३ G. drops वस्तु. ४ अनेनैव वस्तुना T. ५ द्योत्यते T., G., O., M. ६ ममाय° T.; °वयमेव ममोपभोगाय G. ७ °मुपयोगाय D. ८ G. drops वस्तु. ९ °मूलध्वने° D. १० G. drops प्रबन्धान्तरेषु. ११ °मित्य..रेना K. १२ °न्तराण्येकादशा° K.

उभयशक्तिमूलानुरणनरूपव्यङ्ग्यस्तु वाक्ये[1] एव संभवति। यथा

सच्चक्रनन्दकः श्रीमान् महात्यागदयान्वितः।
महानुभावः केन त्वं नरसिंह न सेव्यसे॥

अत्र नरसिंह इव नरसिंह इति वाक्येनोपमालंकारो व्यज्यते। अत्र सच्चक्रादौ शब्दशक्तिमूलत्वं महानुभाव[2] इत्यादावर्थशक्तिमूलत्वम्। एषां ध्वनिभेदानामङ्गाङ्गिभावेन संदेहेनैकव्यञ्जकानुप्रवेशेन च संकरस्त्रिविधो भवति संसृष्टिस्त्वेकविधैव॥

इति श्रीमतो[3] महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे ध्वनिभेदनिरूपणं नाम तृतीय उन्मेषः॥

---

अथोभयशक्तिमूलध्वनेः स्वरूपमुदाहरणं चाह। उभयेत्यादि। यत्रोभाभ्यां शब्दार्थशक्तिभ्यामेकोऽर्थो व्यज्यते स उभयशक्तिमूलानुरणनव्यङ्ग्याख्यो ध्वनिरित्यर्थः। स[4] च वाक्यगत एव न पदगतः प्रबन्धगतो वा। असंभवादित्यर्थः। सच्चक्रेति। हे नरसिंह नरसिंहभूप सच्चक्रस्य साधु[5]जनमण्डलस्य नन्दक आनन्दकर। मह उत्सवः त्यागो वितरणं दया कृपा ताभिरन्वितः। महान[6]वाङ्मनसगोचरोऽनुभावः प्रभावशक्तिर्यस्य स त्वं केन न सेव्यसे। राज्ञामपि सेव्य इति वाच्योऽर्थः। व्यङ्ग्यस्तु हे नरसिंह भगवन् नृसिंहावतार सती[7] चक्रं सुदर्शनं नन्दकः नन्दकनामा खड्गः ते यस्य सः। श्रीर्भा[8] तया समेतः। महानुभावोऽचिन्त्यमहिमा त्वं केन न सेव्यसे सर्व[9]लोकाराध्योऽसीत्यर्थः। वाक्यास्यासंगतार्थत्वं परिहरति। अत्र नरसिंह इवेति औपम्य[10]पर्यवसितार्थव्यञ्जकत्वान्नासंगतार्थत्वमित्यर्थः। संकरसंसृष्टिप्रयुक्तावान्तरभेदास्तु ग्रन्थान्तरे द्रष्टव्या इत्याशयेनाह। एषामिति॥

इति[11] श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायामेकावलीव्याख्यायां तरलाख्यायां ध्वनि[12]भेदनिरूपणं नाम तृतीय[13] उन्मेषः॥

---

१ पदेनो° T. २ महानुभावादावर्थ° T. ३ इत्येकावल्यां D. ४ अयं च D. ५ सुजन° K. ६ महान् जनागोचरो D. ७ सच्चक्रं सुदर्शनं नन्दकः खड्गश्च D. ८ श्रीमान् मासमेतः D. ९ सर्वलोकस्यापीत्यर्थः D. १० उपमापर्यवसित° D. ११ इत्येकावली° D. १२ K. omits ध्वनिभेदनिरूपणं. १३ तृतीयोन्मेषः D.

अथ चतुर्थ उन्मेषः।

तरुणीकुचमण्डलमिव गूढं यस्माच्चमत्कुरुते।
वाच्यायमानमस्माद् व्यङ्ग्यमगूढं गुणीभूतम्॥१॥

यथा

गण्डैरस्थिरपत्रखण्डरचनैः कर्णैरतालीदलै-
रङ्गैरच्छुरिताङ्गरागपरुषैर्नेत्रैरदत्ताञ्जनैः।
वक्षोजैरनुपात्तमौक्तिकसरैः शंसन्ति ते पौरुषं
निःसीमं नरसिंह देव भुवने प्रत्यर्थिवामभ्रुवः॥

उक्ता उत्तमकाव्यस्य ध्वनेर्भेदा अथ मध्यमकाव्यस्य गुणीभूतव्यङ्ग्यस्य भेदा उच्यन्ते। ते चाष्टावगूढादयः। तदुक्तं काव्यप्रकाशे।

'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।
संदिग्धतुल्यप्राधान्यं काक्वाक्षिप्तमसुन्दरम्॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः।' इति।

तत्राद्यं निरूपयति। तरुणीति। सर्वमभ्यर्हितद्रव्यं प्रच्छादनमपेक्षत इति न्यायेन व्यङ्ग्यमङ्गनास्तनमण्डलवद्गूढमेव प्रियं सच्चमत्कुरुतेतरामिति गूढमेव प्रधानं ध्वनिरिति चैव व्यपदिश्यते। अगूढं तु प्रसिद्धत्वाद्वाच्यवत् प्रकाशमानतया न तथा चमत्करोतीति गुणीभूतमित्यर्थः। के पुनरिमे गूढत्वागूढत्वे। उच्येते। इह व्यङ्ग्यस्य द्रुतविलम्बितमध्यभेदेन त्रेधा प्रतीतिः। तत्र यद् द्रुतं प्रतीयते तदगूढं यद्विलम्बितं तदस्फुटं यन्मध्यं तद्गूढमिति विवेकः। उदाहरति। गण्डैरिति। पौरुषं शंसन्ति ज्ञापयन्तीत्यर्थः। शंसिधातोरर्थस्य कथनस्यासंभवात् तत्कार्यं ज्ञापनमात्रं

१ °भङ्ग° C., G., M. २ °स्तनान्ताङ्गनैः D. ३ गुणीभूतं D. ४ प्रधान° K. ५ D. drops च. ६ K. drops इह. ७ °क्रियादि K. ८ °धात्वर्थकथन° D.

अत्र शंसनस्यात्यन्ततिरस्कृतवाच्यस्याति[5]प्रसिद्धत्वादगूढत्वम्॥

**वाच्य[1]स्य रसादेर्वा वाक्यार्थस्यापरस्य यत्राङ्गम्[2]।**
**व्यङ्ग्यं भवति तदेतत्तज्ज्ञैरपराङ्गमाख्यातम् ॥२॥**

यत्रानुरणनरूपं व्यङ्ग्यं वाक्यार्थीभूतस्य वाच्यस्यापरस्याङ्गं[7] तादृशस्य रसादेरपरस्यापरं रसादि वाङ्गम्।

क्रमेण यथा

तत्तद्वीर नृसिंह भूप भवतो दानापदानं मुहुः[3]
श्रुत्वा सिद्धपुरन्ध्रिगीत[4]रचनाशिल्पेषु कल्पद्रुमः।
नाश्लिष्टो लतया न पल्लवपुटैः पुष्णाति रागोद्गमं
पुष्पैर्नोद्गिरति स्मितं मधुकरध्वानैर्न चाभाषते॥

---

लक्ष्यते तेन प्रत्यर्थित्वं व्यज्यते। एवं स्थिते सत्याह। **अत्र शंसनस्येति**। शंसनव्यङ्ग्यस्य प्रत्यर्थिपररूपस्येत्यर्थः। तस्यात्यन्ततिरस्कृतवाच्यत्वं जहल्लक्षणामूलत्वात्। तस्य प्रसिद्ध्या प्रयोगप्राचुर्येण वाच्यमानतया द्रुतप्रतीतेरगूढमित्यर्थः॥

[6]अपराङ्गाख्यं द्वितीयभेदमाह। **वाच्यस्येति**। अपराङ्गमित्यत्रापरशब्देनाङ्ग्यभिधीयते। स चेह वाक्यार्थीभूतो रसादेरन्यो वाच्यो रसादिर्वा तथाभूत इति द्विविधः। अङ्गं च व्यङ्ग्यत्वं द्विविधमनुरणनरूपं रसादिश्च तयोस्ताभ्यामङ्गिभ्यां यथासंख्यं संबन्धे द्विविधमपराङ्गमिति संग्रहार्थं व्याचष्टे। **यत्रेति**। तादृशस्य वाक्यार्थीभूतस्येत्यर्थः। तत्राद्यभेदोदाहरणं **तत्तदिति**। दानापदानं दानाद्भुतम्। गीतरचनाशिल्पेषु गीतप्रबन्धनिर्माणे इत्यर्थः। व्यङ्ग्यं तावदत्र संभावयति।

---

१ वाच्यस्य च रसादे° D. २ °परस्य यत्राङ्गं C., G., M. ३ बहु T. ४ °गीति° D.
५ प्रसिद्धत्वात् K. ६ अपराङ्गाख्यद्वि° K. ७ वाक्यार्थीभूतरसादे° D. ८ तादृशस्य च K.
९ तत्तदित्यादि K.

अत्र समासोक्तिस्तावदलंकारः । तत्र च प्रतीयमानेनानुगतस्य[1] वाच्यस्य प्राधान्येनाङ्गित्वम्[2] । आरोपितनायिकानायकमिथुनधर्मयोर्लताकल्पद्रुमयोरेव वाक्यार्थत्वात् ।

यथा वा

नरसिंह देव न वयं कवयो[3] नास्माकमीदृशो धर्मः ।
एष वचसां विलासः केवलमुपहारकुसुमतां व्रजतु ॥

अत्रोक्तस्य कवित्वरूपस्य वस्तुनो निषेधः कृतः सन्नत्र राजनि सर्वेषामपि गुणानां विद्यमानत्वात्तदधिकगुणारोपणासंभवान्निरतिशयनरसिंहनरपतिगुणानुवादमात्रपर्यवसायि काव्यमिदमिति कमपि विशेषमभिव्यनक्ति । स च वाच्यस्यैवोपस्कुरुत इति वाच्याङ्गमेवैतत् ॥

---

अत्रेति । प्रस्तुतविशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिस्ततोऽस्ति व्यङ्ग्यमिति भावः । तस्यापराङ्गत्वं व्यनक्ति । तत्र चेति । नायकमिथुनरूपस्य प्रतीयमानस्य वाक्यार्थीभूतलताकल्पद्रुमवाच्यस्योपस्कारकत्वात् तदङ्गत्वमित्यर्थः । मिथुनधर्म आश्लिष्टत्वादिः । अत्रैवोदाहरणान्तरमाह । नरसिंहेति । अवाङ्गाङ्गिनौ विविनक्ति । अत्रोक्तस्येति । एतेनोक्तवस्तुविषय आक्षेपालंकारभेदोऽयमित्युक्तम् । अधिकगुणारोपणासंभवात् अशेषगुणाधारे तस्मिन्नारोपितगुणवर्णनात्मकस्य कवित्वशब्दार्थस्यासंभवादित्यर्थः । इत्येवंरूपं विशेषमित्यन्वयः । स च विशेषो वाच्यस्य पूर्वोक्तनिषेधाभासरूपस्येत्यर्थः । वाक्यार्थीभूतस्येति शेषः । तदुपस्कारकत्वेन तच्छेषात्तदङ्गमित्यर्थः ॥

---

१ °मानेनांशेनानुगत° C., G., M. २ प्राधान्येन व्यङ्ग्यत्वं C., M. ३ कवयो न वयं D. ४ विद्यमानतया तद° C., G., M.; विद्यमानतया तत्तद° T. ५ °नृपति° G. ६ अस्यापराङ्ग° K. ७ D. drops आह. ८ °गुणाकरे K. ९ इत्येवंरूपविशेष° D.

यथा वा

ब्रूमः किं पद्मनाभं वसति यदुदरे विश्वमेतत् समस्तं
किं वा नागाधिराजं स्वपिति सुखमसौ यत्र लक्ष्म्या समेतः।
किं वा चन्द्रार्धचूडं यदुपरि भजते सोऽपि हारस्य लक्ष्मी-
माधत्ते[1] सोऽपि चित्ते तव वसतिरुचिं गाङ्गवंशावतंस ॥

अत्र प्रभुविषयस्य रतिभावस्याङ्गमद्भुतः[5]।

स्तोतव्यस्तिग्मरोचिस्त्रिभुवनभवनप्राङ्गणं लङ्घते य-
श्चक्षुर्यस्यायमासीत् स भवति जगति श्लाघनीयो मुकुन्दः।
देवः सोऽप्येष यस्याः कलयति कुचयोश्चूचुकाङ्कितलक्ष्मीं
लक्ष्मीं श्रीमन्नृसिंह क्षितिप रमयते तामपि त्वत्कटाक्षः ॥

अत्र तिग्मरोचिःप्रभृतिविषयो रत्याख्यो भावः प्रभुविषयस्य रतिभावस्याङ्गम्।

त्वत्प्रत्यर्थिवसुन्धरेशरमणीः संत्रासतः सत्वरं
यान्तीर्वीर विलुण्ठितुं सरभसा[2] याताः किराता वने।
तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मितोपक्रमा-[3]
स्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि[4] ॥

---

अथ रसाद्यपराङ्गमष्टविधं च क्रमेणोदाहर्तुमाह। यथा चेत्यादि। तत्र रसमपराङ्गमुदाहरति। ब्रूम इत्यादि। वसतिरुचिं निवासेच्छाम्। अत्राङ्गाङ्गिनौ विविनक्ति। अत्रेति। अद्भुतवस्तुदर्शनोत्थोऽद्भुतरसोऽङ्गमित्यर्थः। यद्यपीह रसभावादीनामष्टानामप्यनियमेन मिथोऽङ्गाङ्गिभावो भवति तथापि चाटुषु कविभावस्यैव प्रायशः प्राधा-

---

१ °मादत्ते T. २ सरभसं याताः C., G., M. ३ विस्मृतोपक्रमा° C., M. ४ लोलैः कटाक्षैरपि G., M. ( M. notices अपाङ्गैरपि also, '°रपाङ्गैरिति वा' ). ५ °दर्शनोऽद्भुत-रसो° K.

अत्र रसाभासः प्रभुविषयस्य रतिभावस्याङ्गम् ।

त्वयि लोचनगोचरं गते
सफलं जन्म नृसिंह भूपते ।
अजनिष्ट ममेति सादरं[1]
युधि विज्ञापयति द्विषां गणः ॥

अत्र भावाभासः प्रभुविषयस्य रतिभावस्याङ्गम् ।

नृसिंह भवतो दानं निशम्य निभृतेक्षणाः ।
विन्यस्त[2]हस्ताः कान्तारेष्वासते राजकुञ्जराः ॥

अत्र मदाख्यस्य भावस्य शान्तिरङ्गं प्रभुविषयस्य रतिभावस्य ।

समालोक्यालेख्यस्थितमपि मृगाक्ष्यः फणभृतं
प्रकम्पन्ते धैर्यं त्वदरितरुणीनां[3] त्वनुपमम् ।
यदेतास्त्वद्धाट्यामधिरजनि यान्त्यः फणभृतां[4]
फणारत्नं हस्तैः पिदधति दृढं वीर विपिने ॥

न्यात् तस्यैव सर्वत्राङ्गित्वं निबद्धमित्यनुसंधेयम् । अत्र रसाभास इति । अनौचित्यप्रवृत्तत्वादिति[5] भावः । त्वयीत्यादि । अत्र शरणार्थिनां द्विषां नरसिंहदर्शनो[6]त्थहर्षस्त्वयीत्यादिना वागारम्भेण व्यज्यते । स च न वीरधर्म इत्यनौचित्यप्रवृत्तत्वादेव भावाभासः पूर्ववदङ्गमित्याह । अत्र भावाभास इति । नृसिंहेत्यादि । दानं खण्डनं मदश्च । राजान एव कुञ्जरा इति रूपकसमासः । दानादिलिङ्गात् । निभृतेक्षणा निश्चलाक्षाः । विन्यस्तहस्ता विहस्ताश्चिन्तानिर्वेदाभ्यामिति भावः । एतेन मदक्षयो व्य-

१ सादरमिति G. २ वित्रस्त° D. ३ °तरुणीनामनुपमम् D. ४ फणभृतः C., M.
५ °दित्यर्थः K. ६ °दर्शनोत्थो हर्षः K.

इह रिपुभूपालभामिनीभयरूपस्य भावस्योदयो नरसिंह[1]नरपतिविषयस्य रतिभावस्याङ्गम् ।

एकाभूत् कुसुमायुधेषुधिरिव प्रव्यक्त[2]पुङ्खावलि-
जैत्रं मङ्गल[3]पालिकेव पुलकैरन्या कपोलस्थली ।
लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥

अत्र लोलाक्षीप्रेमसमरौत्सुक्ययोः संधिः प्रभुविषयस्य रतिभावस्याङ्गतया स्थितः ।

सौभाग्यं तस्य चित्रं तदधि चपलता कापि मञ्जीरलक्ष्म्याः
पश्यत्सु श्लाघते या रणभुवि नृपतिष्वद्भुतं[4] तद्भुजाय[5] ।
धिग्धातुः प्रातिकूल्यं मयि बलमतुलं तस्य कस्य ब्रवीमी-
त्याचक्षाणो[6] विरोधी श्रयति गिरिवनं श्रीनृसिंह क्षितीन्द्र ॥

---

च्यते । स च पूर्ववदङ्गमित्यर्थः । यान्त्यो धावन्त्यः । भावसंधिमाह । एकेति[7] । एका भवतः कपोलस्थलीत्यन्वयः । मङ्गलपालिका[8] मङ्गलार्थमङ्कुरपात्रम् । द्वयोस्तुल्यबलयोर्विरुद्धयोर्भावयोः समावेशः संधिः । बहूनां पूर्वपूर्वोपमर्देन समावेशः शबलता । एतं[9] चाह । सौभाग्यमिति । सौभाग्यं सौन्दर्यं चित्रमद्भुतं तत्तस्मादधिचपलताधिकचापलम्[10] । नृपतिषु पश्यत्सु पश्यतो नृपतीननादृत्येत्यर्थः । "षष्ठी चानादरे" इति चकारात् सप्तमी । भुजाय श्लाघते भुजमभिलषतीत्यर्थः । "श्लाघह्नुङ्—"

---

१ नृसिंह° G. २ प्राग्व्यक्त° D. ३ माङ्गल्° T. ४ नृपतिष्वेकतस्तद्भुजायाम् D. ५ तद्भुजायाः G. ६ °त्येवं शंसन् D. ७ एकेत्यादि K. ८ °मालिका D. ९ °मित्यादि K. १० °चापल्यम् K.

अत्र स्मृतिनिर्वेदमति[1]चिन्तानां शबलता पूर्ववदङ्गम् । एत एव[2] रसवदादयोऽलंकाराः ॥

वाच्यस्य सिद्धिहेतुं कृतिनः कथयन्ति वाच्य-
सिद्ध्यङ्गम् ।

पत्रावलीकवलनान्यरिभूमिपाल-
लीलावतीस्तनतटेष्वलमादधाना ।
गङ्गातरङ्गधवलानि यशःपयांसि
दुग्धे धरातिलक वीर तवासिधेनुः ॥

---

इत्यादिना संप्रदानत्वाच्चतुर्थी । अत्रेति । रणात् पलायमानस्य शत्रोरिमे स्मृत्यादयश्चत्वारो भावाः क्रमात् सौभाग्यभुजश्लाघना[3]दैवनिन्दाबलप्रशंसावाक्येषु व्यज्यन्ते तेषां शबलता पूर्ववत् कविभावस्याङ्गमित्यर्थः । नन्वेवं[4] रसादीनां प्राधान्ये ध्वनित्वमप्राधान्ये गुणीभूतव्यङ्ग्यत्वमेवं च सति रसवदाद्यलंकाराणां कोऽवकाश इत्याशङ्क्याह । एवं चेति । गुणीभूता एवेत्यर्थः । तथा च सर्वस्वकारः सूत्रयां चकार । 'रसभावतदाभासभावप्रशमानां निबन्धे रसवत्प्रेयऊर्जस्विसमाहितानि भावोदयभावसंधिभावशबलताश्च पृथगलंकाराः' इति[5] । रसस्याङ्गत्वेन निबन्धे रसवान् । भावस्याङ्गत्वे प्रेयोऽलंकारः । तदाभासत्वे ऊर्जस्वी । भावप्रशमन[6]स्याङ्गत्वे समाहितम् । भावोदयादीनां तथा निबन्धने[7] तु तन्नामकास्त्रयः पृथगलंकारा इति सूत्रार्थः ॥

तृतीयं भेदं लक्षयति । वाच्यस्येति । यद्विना वाच्यं न सिध्यति तद्वाच्यसिद्ध्यङ्गमित्यर्थः । अत एवार्थस्य द्रव्यदेवतादिवत् करणशरीरनिर्वर्तकतया संनिपत्योपकारकाङ्गस्य वाच्योपस्कारमात्रकारितया प्रयाजादिवदारादुपकारकादपराङ्गाद्भेदः । पत्रावलीत्यादि । पत्रावलीकवलनानि मकरिकापत्रलुण्ठनानि[8] पर्णपुञ्जग्रसनकानि[9] च[10] स्तनतटेषु[11] गिरिप्रस्थेष्विति च प्रतीयते । आदधाना[12] कुर्वाणा ।

---

१ T. drops मति. २ दि T. ३ °घनद° D. ४ K. omits ननु. ५ इति च D. ६ °प्रशमाङ्गत्वे D. ७ °निबन्धेन D. ८ °पत्रलाञ्छनानि D. ९ °ग्रसनानि D. १० K. omits च. ११ D. inserts च after °तटेषु. १२ आददाना K.

अत्रासिधेनोर्धेनुत्वं व्यङ्ग्यं यशसः क्षीरत्वरूपकलक्षणस्य वाच्यस्य सिद्धिमादधाति।

यथा वा

धाराविषं त्वदसिकालभुजङ्गमस्य
[1]दृष्ट्वा सुदुःसहतरं समरे नरेन्द्राः।
मूर्च्छां भजन्ति नरसिंह वसुन्धरेश
[2]किं चोद्वहन्ति वपुराश्रितवर्णभेदम्॥

---

पयांसि क्षीराणि। असिधेनुश्छुरिका। 'छुरिका [3]चासिधेनुका' इत्यमरः। लक्षणार्थमत्र दर्शयति। [4]अत्रेति। वाच्यव्यङ्ग्ययोरसिधेनुधेन्वोरभेदाध्य[5]वसानादिति भावः। विषयविशेषे किञ्चिन् मीमांसितुमुदाहरणान्तरमाह। धारेत्यादि। धारा शस्त्रमुखं जलसंततिश्च। विषं तोयं गरलं च गम्यते। 'धारास्त्रामाम्बुसंतत्योर्विषं गरलतोययोः' इत्यभिधानात्। असिरेव कालभुजङ्गमः कृष्णसर्प इति रूपकम्। नरेन्द्रा राजानो विषवैद्याश्च। 'नरेन्द्रो विषवैद्येऽपि' इति वैजयन्ती। मूर्च्छा [6]बाह्यान्तःकरणानां शक्तिविघातः। वर्णभेदो वैवर्ण्यम्। नरेन्द्राणामपि तत्रापि दर्शनादेव विषवेगाविर्भाव इति विरोधश्च ध्वन्यते। अत्रासिकालभुजङ्गमस्य धाराविषमित्यत्र चतुर्धा संशयः। किं विद्वन्मानसेत्यादिवाच्छ्लिष्टपरम्परितरूपकम्। किं वा श्लेषवशादेव सविषत्वसाधर्म्यात् कालभुजङ्गम इवासिरित्युपमितसमासाश्रयणादुपमा। आहोस्विन्निरवकाशतया सर्वालंकारसंकोचको मूर्च्छादिकार्यविशेषोत्थापितगरलार्थप्रतिभो[7]ल्लासितो विषमिति श्लेष एव तन्निर्वाहकतया तु तदङ्गमसिभुजङ्ग इति रूपकम्। यद्वा विषपदव्यङ्ग्येन गरलेनासिभुजङ्गमस्येति वाच्यरूपकसिद्धेर्वाच्यसिद्ध्यङ्गं[8] नाम गुणीभूतव्यङ्ग्यभेद[9] इति। तत्र व्यङ्ग्यपक्षं सिद्धान्तयिष्यं-

---

१ दृष्ट्वापि दुःसह° C., G., M. २ किं वोद्वहन्ति D. ३ K. drops च. ४ तत्रेति K. ५ °ध्यवसायादिति K. ६ बाह्याभ्यन्तरकरणनां K. ७ °ल्लासितो D. ८ °ङ्गव्यङ्ग्यं K. ९ व्यङ्ग्य भेदे° D.

अत्र धाराविषमिति विषशब्देन सलिलमभिधीयते । तस्यैव वाक्यार्थत्वात्[1] । न तावदिदं श्लिष्टशब्दनिबन्धनं[2] परम्परितम् । विषशब्दादाविर्भवन्त्या गरलार्थप्रतीतेः प्राक् कृपाणस्य फणित्वरूपणासिद्धेः । अत्र हि[3] प्रकरणादिना[4]भिधाम्भसि नियमिता । अम्भस्तु कृपाण एव संभवति न भुजङ्गमे तस्मादम्भःसंभव एव रूपके बाधकं प्रमाणम् । नाप्युपमा । भुजङ्गमेऽम्भःसंभवाभावेन

---

स्तदुपयोगितया विषपदस्येह[5] वाच्यार्थं तावदाह । अत्र धारेति । गरलं तु व्यङ्ग्यमिति भावः । सलिलार्थत्वे हेतुमाह । तस्यैवेति । प्रकरणादिना तस्यैव वाक्यार्थान्वयित्वादित्यर्थः । ननु व्यङ्ग्यपक्षे वृत्तिद्वयाश्रयणं गरीयः । अतोऽभिधैकमूलश्लिष्टपरम्परितरूपकाश्रयणमेव श्रेय इति प्रथमं पूर्वपक्षमुत्थाप्य निराचष्टे । न तावदिति । रूपकहेतुकं रूपकं परम्परित[6]रूपकम् । युक्तिमाह । विषशब्दादिति । विषमेव विषमिति श्लिष्टरूपकादित्यर्थः । यथा विद्वन्मानसहंसेत्यत्र वर्ण्यस्य प्रभोर्हंसत्वरूपणं मानसमेव मानसमिति श्लिष्टरूपकहेतुकं तद्वदसेः फणित्वरूपणं विषमेव विषमिति श्लिष्टरूपकहेतुकं न भवति । ततः प्रागेव भीषणत्वादिनापि तत्सिद्धेरित्याह । प्रागिति । एतेन साधकप्रमाणाभाव उक्तः । अथ बाधकं प्रमाणं वक्तुमाह । अत्र हीति । तर्ह्युभयोरम्भस्त्वनिमित्तमेवास्तु रूपकमितीमां शङ्कां परिहरति । अम्भस्त्विति । ननु कृपाणेऽपि कुतोऽम्भःसंभव इति चेद्धाराशब्दवाच्यशस्त्रमुखे[7] प्रतीयमानसलिलसंपत्त्यभेदाध्यवसायेनाम्भःसामान्यसंभवादिति । फलितमाह । तस्मादिति । रूपके श्लिष्टपरम्परितरूपकेऽम्भसः प्रकरणादिना गरलाभिधाननिवारकत्वेन तत्संभव एव बाधकमित्यर्थः । द्वितीयं पक्षं परिहरति[8] । नाप्युपमेति । भुजङ्गमेऽम्भःसंभवाभावेनेत्युपलक्षणं करवाले गरलाभावश्चेति द्रष्टव्यम् । ननु श्लेषमहिम्ना सविषत्वं साधर्म्यमुपमाप्रयोजकमस्तीति शङ्कते ।

---

१ वाक्यस्यार्थत्वात् T.; वाच्यार्थत्वात् D. २ °निबन्धनपरम्परितं D. ३ T., G., C., and M. drop हि. ४ °दिनाम्भस्यभिधा नियमिता T. ५ °पदस्यैतिह्यवाच्यार्थं D. ६ परम्परितमुच्यते D. ७ °शब्दवाच्ये शस्त्र° K. ८ परिहरन्नाह K.

साधर्म्याभावात्। विषशब्दस्य श्लिष्टत्वेन साधर्म्यमस्त्येवेति चेत् तर्हि श्लेषः कारणमुपमाया इति वाच्यम्। तच्च विचारविकलम्। कृपाणस्य वाक्यार्थत्वे[1]ऽम्भस्यभिधानियमनेन[2] श्लेषस्यैवानुदयात्। तस्माद्विषशब्देन शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यमहिम्ना[3] गरलं व्यङ्ग्यं कृपाणभुजङ्गमस्येति रूपकस्य वाच्यस्य सिद्धिं करोतीति वाच्यसिद्ध्यङ्गम्॥

**यत्र न सदपि व्यङ्ग्यं स्फुटतां भजते तदस्फुटाभिख्यम्॥ ३॥**

नृसिंह भूप भवतः संख्यामत्सरिणो गुणाः।
त्रिविक्रमपदैरेव मितमेतज्जगत्त्रयम्॥

अत्र यद्यप्यनन्तानां गुणानां त्रिविक्रमपदत्रयमिते जगति समावेशो न घटत इत्यस्ति व्यङ्ग्यं तथापि झटिति न प्रतिभासत इत्यस्फुटम्॥

---

विषशब्दस्येति। यत्र श्लेष एव न संभवति कुतस्तत्र तन्मूलसाधर्म्यसंभावनेति परिहरति। तर्हीति। वाक्यार्थत्वे इति प्राकरणिकत्वकथनम्। अम्भसि॰ धाराम्भसीत्यर्थः। अत एव यः केवलश्लेष एवायमिति तृतीयः पक्षः स खुरक्षेपादेवाहत इत्याशयेन तुरीयो व्यङ्ग्यपक्ष एवेति निगमयति। तस्मादिति।

अस्फुटव्यङ्ग्याख्यं भेदान्तरमाह। यत्रेति। झटिति न प्रतिभासत इति। किन्तु विलम्बतः[4] प्रतिभासते अतोऽस्फुटव्यङ्ग्यमतदित्यर्थः॥

---

१ वाच्यार्थत्वे॰ D. २ ॰नियमेन D. ३ ॰व्यङ्ग्यवस्तुना C., M.; ॰व्यङ्ग्यमहिम्ना च गरलं D.
४ विलम्बितः K.

यदि वाच्यं व्यङ्ग्यं वा मुख्यतया निश्चितं न भवेत्।
संदिग्धप्राधान्यं तत्तु सुधीभिर्विनिर्दिष्टम् ॥ ४ ॥

त्वामारूढं मदगजपतिस्कन्धमाधूतखड्ग-
च्छायाविद्युद्वलयितभुजं वीक्ष्य युद्धे नृसिंह ।
दूरोदञ्चत्पुलकपटलीवर्मिताङ्गस्तुरङ्गे
दत्ते दृष्टिं विदितरभसे न्यक्कृतेभः सपत्नः ॥

अत्र वेगवत्तरतुरङ्गावलोकनेन किं पलायितुमचकमतेति व्यङ्ग्यं प्रधानं किं वा दत्ते दृष्टिं तुरङ्ग इति भयानुभावरूपं वाच्यं प्रधानमिति संदिग्धम् ॥

---

संदिग्धतुल्यप्राधान्ये इत्यत्र संदिग्धप्राधान्यं तुल्यप्राधान्यं चेति द्वौ भेदौ विवक्षितौ तत्राद्यं लक्षयति । यदीति । मुख्यतया प्रधानतयेत्यर्थः । संदिग्धं प्राधान्यं यत्र तत्तथोक्तम् । त्वामित्यादि । छाया लोहभासः ताभिरेव विद्युद्भिर्वलयितः संजातवलयो भुजो यस्य तम् । पुलकपटलीवर्मिताङ्गत्वं नृसिंहवीक्षणात् पूर्वं रणोत्साहात् पश्चात्तु भयादित्यनुसंधेयम् । विदितरभसे प्रसिद्धवेगे । अचकमतेति । अकामयतेत्यर्थः । कर्मणि ङित्वादात्मनेपदम् । लुङि " णिश्री——इत्यादिना चलेश्चङादेशः ॥

---

१ °मारूढोन्मद° T., C., G. २ °मारूढखड्ग° T., G., M. ३ °वेष्टिताङ्ग° T.; °वोल्लिताङ्ग° C., G., M. ४ वेगवत्तुरङ्गा° T., C., G., M. ५ दृष्टिं दत्ते M.

**यस्मिन्ननयोः साम्यं तुल्यप्राधान्यमिष्यते तदिदम् ।**

अस्पृष्टाञ्जनसंपदः स्मृतिपथावस्थायिलीलास्मिताः
प्रत्याख्यातवतंसदामरचनास्त्यक्ताङ्ग[1]रागश्रियः ।
दूरोत्सृतकुरङ्गनाभिमकरीभङ्गास्तरङ्गभ्रुवः
संजाता नरसिंह पार्थिव भवत्प्रत्यर्थिपृथ्वीभुजाम् ॥

अत्र रिपु[2]नृपकान्ताकर्तृकस्याञ्जनस्पर्शाभावरूपस्य कार्यस्य वाच्यस्यारि[3]नरपतिमरणरूपस्य कारणस्य व्यङ्ग्यस्य च समं प्राधान्यम् ॥

**आक्षिप्तं यत् काका काकाक्षिप्तं तदाख्यातम् ॥५॥**

सर्वार्थिनामर्थितपूरणार्थं
परिस्फुरत्त्यागमहोत्सवेऽत्र ।
त्वयि स्थिते वीर नृसिंह [4]भूप
न लज्जते संप्रति पारिजातः ॥

---

तुल्यप्राधान्यं लक्षयति । यस्मिन्निति । अनयोर्वाच्यव्यङ्ग्ययोः । साम्यं समप्रधानत्वम् । निश्चितमिति शेषः । तुल्यं तुल्यत्वेन निश्चितं प्राधान्यं यत्र तत्तथोक्तम् । अस्पृष्टेति । अत्र पर्यायोक्तमलंकारः । तथाञ्जनादिपरिहाररूपं प्रस्तुतं कार्यं वाच्यं तत्कारणं प्रस्तुतमेव भर्तृमरणं व्यङ्ग्यं तयोश्चमत्कारसाम्यात् समप्राधान्यमित्याह । अत्रेति ॥

काकाक्षिप्तं लक्षयति । आक्षिप्तमिति । काकुः स्वरविकारः । सर्वेत्यादि । इह न लज्जत इत्यत्र न लज्जते किमिति काका लज्जत एवेति व्यज्यत इत्याह ।

---

१ °दामश्रियः G. २ °नृपतिकान्ता° C., G., M. ३ °नृपतिमरण° T. ४ देव T.

अत्र लज्जत एवेति[1] व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ॥

यद्व्रजति[2] न सौन्दर्यं तदसुन्दरमीरितं सद्भिः ।

इत्थममुष्य भिदाष्टकमुट्टङ्कितमेतदस्माभिः ॥६॥

अयज्ञः स्वर्लोकः[3] सुकृतमतपःक्लेशसुभगं[4]

सुधासारोऽनभ्रः फलमकुसुमश्रीसहचरम् ।

अशौर्यं साम्राज्यं निधिरखननायाससुलभो

नृसिंह क्षोणीन्द्रो[5] नयनपथमस्माकमगमत्[6] ॥

इह निरतिशयसुखजनकत्वरूपं[7] कारणं व्यङ्ग्यं सदपि न सौन्दर्यमावहति ।

---

अत्रेति । तस्य गुणीभावे हेतुमाह । वाच्येति । वाच्यो यो निषेधः काकुयुक्तस्तत्सहभावेन चमत्करणे तदनुगामितया स्थितं न तु स्वातन्त्र्येणेत्यर्थः ॥

अष्टमं भेदमाचष्टे[8] । यदिति । यत् सदपि न हृद्यं तदसुन्दरमित्यर्थः । अयज्ञ इति[9] । नृसिंहनृपतिसाक्षात्कारोऽयमयज्ञस्वर्गादितुल्य[10] इत्यर्थः । तत्रायज्ञ इति यज्ञनिषेधात् तत्कारणं निरतिशयसुखजनकत्वं व्यज्यते तच्च वाच्यमातिरिच्यते चमत्क्रिययेत्यसुन्दरमित्याह । इहेति । अत्रैवोदाहरणान्तरमाह ।

---

१ °निषेधसंभावनेन M.; °निषेधसंभावेन C., G. २ यद्व्राजि T. ३ अयज्ञस्वर्लोकः T, C., M. ४ °सुलभं G., M. ५ क्षोणीन्दो D., C. ६ °मगमः D., C. ७ °रूपकारणं T. ८ भेदमाह D. ९ इत्यादि K. १० °नृपतेः साक्षा° K.

उत्तिष्ठ कन्दखननाय गृहाण चापं
गाहस्व काननमिति प्रहितोऽपि वध्वा ।
आकारितोऽपि सहकेलिसखैः किरातै-
रद्रेर्न वीर विजहाति दरीमरिस्ते[1] ॥

अत्र त्वच्चापविलसितस्मरणजनितं[2] भयमात्रं प्रतीयते[3] । तस्य किमपि सौन्दर्यं न प्रतिभासत इत्यसुन्दरम्[4] ॥

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्य-लंकारशास्त्रे गुणीभूतव्यङ्ग्यनिरूपणं नाम चतुर्थ उन्मेषः ॥

---

उत्तिष्ठेति[5] । आकारित आहूतः । सुगममन्यत् । एषां च भेदानां ध्वनिभेदवदन्यो-न्यसंकरसंसृष्टी द्रष्टव्ये । तथा ध्वनेरपि स्वभेदैर्गुणीभूतव्यङ्ग्यभेदैरलंकारव्यङ्ग्यभेदैश्च सह[6] संभेदः पुनर्भूयान् । प्रपञ्चात्[7]उक्तं ध्वनिकारेण—

'सगुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः ।
संकरसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥' इति ।

इति [8]पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिता-यामेकावलीव्याख्यायां तरलाख्यायां [9]गुणीभूतव्यङ्ग्यनिरूपणं चतुर्थ उन्मेषः ॥

---

१ दरीं रिपुस्ते T., C., G., M. २ यत्त्वच्चापल° T. ३ तत्र न किमपि सौन्दर्यमावहति T.; C. and G. insert च after तस्य. ४ D. has इति चतुर्थोन्मेषः. ५ °त्याादि K. ६ स्वतो भेदै° D. ७ सह संभवे प्रवर्तनात् प्रपञ्चः D. ८ इति चतुर्थोन्मेषः । गुणीभूत-व्यङ्ग्यनिरूपणम् D. ९ K. omits गुणीभूतव्यङ्ग्यनिरूपणम्.

## अथ पञ्चम उन्मेषः ।

अङ्गिनि रसे स्थिता ये बिभ्रत्युत्कर्षहेतुतां सततम्[1] ।
आत्मनि शौर्यादय इव ते नामैते गुणाः कथिताः ॥ १ ॥

आत्मनि शौर्यादय इव समवायवृत्त्याङ्गिनि रसे स्थिताः सन्त उत्कर्षहेतवो भवन्ति माधुर्यादयो गुणाः । अलंकारास्तु हारादय इव कण्ठादीनां संयोगवृत्त्या वाच्यवाचकरूपाणामङ्गानामतिशयमादधाना रसमुपकुर्वन्ति । अत एव माधुर्यादयो रसधर्माः समु-

तदेवमुत्तममध्यमकाव्यनिरूपणानन्तरं यदव्यङ्ग्यं चित्राख्यमधमकाव्यं[2] तन्निरूपणं प्राप्तावसरमपि[3] काव्यगडुत्वान्नातीवोपयुज्यते यावदुपयुज्यते तावदलंकारप्रस्तावे भविष्यतीत्याशयेनोपेक्ष्य संप्रति काव्यात्मनिरूपणानन्तरं तद्धर्मनिरूपणमेव संगतमित्यभिप्रेत्य गुणान्निरूपयंस्तेषां सामान्यलक्षणं तावदाह । **अङ्गिनीति** । नन्नूत्कर्षहेतुत्वमलंकारेष्वतिव्याप्तमित्याशङ्क्य व्याचष्टे । **आत्मनीति** । अलंकारास्तु नैवमित्याह । **अलंकारास्त्विति** । काव्यात्मरससमवेतास्तदुत्कर्षहेतवो धर्मा गुणाः काव्याङ्गसंयुक्तास्तदुत्कर्षहेतवोऽलंकारा इति भेद इत्यर्थः । वाच्यवाचकरूपाणां शब्दार्थरूपाणामित्यर्थः । शब्दार्थौ वपुरित्युक्तम् । **रसमुपकुर्वन्तीति** । लोके वपुषि भूषितेऽहं शूर इतिवदेवाहं भूषित इत्यप्यभिमानदर्शनादङ्गसंगिभिरलंकारैरङ्गिनो रसस्यापि तद्द्वारोपकारश्चमत्कारातिशयदर्शनादवसेयः[4] । रसाभावे स्वङ्गोपकार एव । गुणास्तु रसं विना न सन्त्येव तद्धर्मत्वात्तेषामित्यर्थः । माधुर्यादिगुणानां सुकुमारादिवर्णान्वयव्यतिरेकानुविधानं तु तेंव्यङ्ग्यत्वनिबन्धनं[5] न तु तद्धर्मत्वनिबन्धनमित्याह । **अत एवेति** । केषांचित्तद्धर्मताबुद्धिस्तु भ्रान्तिरे-

१ G., O., and M. drop तु. २ °मधमं काव्यं D. ३ प्राप्तमपि K. ४ °दवधेयः K.
५ तत्तद्व्यङ्ग्य° K.

चितैर्वर्णैर्व्यज्यन्ते । यथा प्रांशुतमम[1]वलोक्याशूरेऽपि शूरोऽयमिति शूरत्वबुद्धिं विदधत्यविश्रान्तबुद्धयस्तथा मधुरादिरस[2]धर्मव्यञ्जकत्वदर्शनात् [3]सुकुमारेषु वर्णेष्वपि माधुर्यादि व्यवहरन्ति । वस्तुतस्तु रसस्य धर्मा गुणा गुणालंकाराणां समवायवृत्त्या स्थितिरिति गड्डुरिकाप्रवाहेण ।

'युवतेरिव रूपमङ्ग काव्यं
स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः
सदलंकारविकल्पकल्पनाभिः ॥

वेति स[4]दृष्टान्तमाह । **यथा प्रांशुतममि**[5]**त्यादि** । अविश्रान्तबुद्धयो[6]ऽगाढमतयः । तस्मादङ्गिसमवेता गुणा अङ्गसंयुक्तास्त्व[7]लंकारा इत्युक्तम् । उभयेषां भेदो लोकवदेवेत्युपसंहरति । **वस्तुतस्त्वि**ति । ननु लोके तथास्तु काव्ये तु[8] गुणालंकाराणां द्वयानामपि समवायवृत्तिरेवेति मतं न समीक्ष्य भाषितमिति दूषयति । **गुणालंकाराणा**मिति । **गड्डुरिकाप्रवाहे**णेति । गड्डुरिका मेषी । लोके मेष्यामेकस्यामेकेन पथा प्रयोजनं विनैव गच्छन्त्यामितरा अपि मेष्यस्तथैव तेनैव पथा य[9]थेच्छन्ति स गड्डुरिकाप्रवाहो गतानुगतिरन्धपरम्परेति यावत् । युक्तिरुक्तैवेति भावः । रचनाधर्मा गुणा अत एव काव्यव्यवहारहेतवः । अलंकारास्तु सन्ति चेत्तदतिशयाधायका इति **भोजवामनौ** । तन्मतं दूषयितुमनुभाषते । **युवतेरि**त्यादि । अलंकारविकल्पकल्पनाभिरलंकारविशेषसृष्टिभिः । विहितप्रणयं कृतसख्यं तद्युक्तमित्यर्थः । अथान्वय-

[1] प्रांशुत्वमालोक्य T.; प्रांशुत्वमवलोक्य G., C., M. [2] T. drops धर्म; रसस्य व्यञ्ज° G., C. [3] सुकुमारादिषु G., C., M. [4] दृष्टान्त° K. [5] प्रांशुत्वमित्यादि K. [6] °विगाढ° K. [7] °लंकारा इति K. [8] D. drops तु. [9] K. drops यत्.

यदि भवति वचश्च्युतं गुणेभ्यो
वपुरिव यौवनवन्ध्यमङ्गनानाम्।
अपि जनदयितानि दुर्भगत्वं
नियतमलंकरणानि संश्रयन्ते ॥'

इति भोजः। 'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलंकाराः' इति वामनोऽप्याह। तन्न विचारितरमणीयम्। तथा हि यद्येते काव्यव्यवहारप्रयोजकीभवन्तः संभूय काव्यव्यवहारं प्रयोजयन्ति तदानीमसमग्रगुणयोर्गौडीपाञ्चाल्योः काव्यात्मत्वप्रसङ्गः। अथ कतिपये तदा गुणमात्रसंभवेऽपि काव्यव्यव-

मुक्त्वा व्यतिरेकमाह। यदीति। दूषयति। तन्न विचारितेति। किं सर्वे गुणाः संभूय काव्यलक्षणं कतिपये वेति द्वेधा विकल्प्याद्यं दूषयति। यद्येत इति। गुणविशिष्टपदरचनात्मिका रीतिरात्मा काव्यस्येति तेषां मतम्। ताश्च तिस्रो वैदर्भी गौडी पाञ्चालीचेति। तत्र 'समग्रगुणा वैदर्भी' इत्युक्त्वोक्तम् 'ओजःकान्तिमती गौडी ... सौकुमार्योपपन्ना पाञ्चाली' इति। तत्र गुणसाकल्यस्य काव्यलक्षणत्वे गौ... रव्याप्तिः स्यादित्यर्थः। द्वितीये त्वतिव्याप्तिरित्याह। अथेति।

'अद्यात्र प्रेङ्खलत्यम्भिरुच्चैः
प्राज्यः प्रोद्यत्युज्ज्वलत्येव धूमः।'

इत्यादावप्योजःप्रभृतिगुणसत्तामात्रेण काव्यत्वापत्तिः। अथ

१ °श्रुतं D., C., G., M. २ °मङ्गनायाः D. ३ जनयति तानि C., M. ४ भोजराज T., G. ५ प्रयोजकीभूता भवन्तः T., प्रयोजकीभूताः संभूय C. ६ °प्रसङ्गात् G. ७ [illegible] omits काव्य. ८ यदीत्यादि K. ९ K. omits काव्य. १० D. omits स्या... ११ प्रज्वलत्यग्नि° K. १२ °त्येव धूमः K.

ङ्कारप्राप्तिः । तस्मादलंकार एव काव्यव्यवहारप्रयोजकः । गुणस्तु वस्तुतोऽस्त्येव तस्य रसधर्मत्वात् । किन्त्वलंकारस्तं नापेक्षते ततस्तत्कृता शोभैव नास्ति कुतस्तरां तदतिशयोऽलंकारजन्य इति ॥

संक्षेपेणाधुना लक्ष्म गुणानां प्रणिगद्यते ।
आनन्दस्यन्दिता तज्ज्ञैर्माधुर्यमभिधीयते ॥ २ ॥

संभोगे करुणे विप्रलम्भे शान्ते च तत् क्रमात् ।
काष्ठां पुष्यति चित्तस्य विलीनत्वमिवार्पयत् ॥३॥

ओजो दीप्त्यात्मविस्तारकारणं परिकीर्त्तितम् ।
क्रमेण वीरबीभत्सरौद्रेष्वेतत् प्रकर्षति ॥ ४ ॥

---

तस्मादिति । शोभैव नास्तीति । अव्यभिचारिणीति शेषः । स्वयमेवोत्कर्षहेतव त्वात् ॥

तदेवं गुणानां सामान्यलक्षणमभिधाय संप्रति प्रतिज्ञापूर्वकं विशेषलक्षणान्याह । संक्षेपेणेति । तत्र माधुर्यमोजः प्रसादश्चेति त्रय एव गुणा इति सिद्धान्तमभिसन्धाय माधुर्यं लक्षयति । आनन्देति । आर्द्रत्वैकमयत्वमित्यर्थः । स च शृङ्गारकरुणशान्तानां धर्म इत्याह । संभोग इति । चित्तस्य विलीनत्वं द्रवत्वम् । ओजो लक्षयति । ओज इति । दीप्तिः प्रज्वलनं तद्रूपो य आत्मविस्ताराभिख्यो विकासस्तस्का-

---

१ °रास्तं नावेक्षन्ते C.; °रास्तं नापेक्षन्ते M.; °रास्तन्नापेक्षन्ते T. २ D. omits संप्रति. ३ आनन्दस्यन्दितेति K. ४ आनन्दे' D. ५ इत्यादि K. ६ द्रवभावमिवेति यावत् K.

किं[1] च मग्नमनोवृत्ति[2] स्वभावेऽपि भयानके ।
दीप्तत्वेन विभावस्य भजत्योजः परां भुवम् ॥ ५ ॥
यश्चित्तं व्यश्नुतेऽह्नाय शुष्केन्धनमिवानलः ।
स प्रसादो मतः सर्वरससाधारणस्थितिः[3] ॥ ६ ॥
श्लेषः समाधिरौदार्यमपि स्वीकृतमोजसा ।
अर्थव्यक्तिः प्रसादाच्च कथंचिन्नातिरिच्यते ॥ ७ ॥
समता दोषराहित्यमात्रं स्यान्न पुनर्गुणः ।
सौकुमार्यं च कान्तिश्च भवेद्दोषविपर्ययः[4] ॥ ८ ॥

रणमित्यर्थः । न केवलं वीरादिष्वेवायं गुणः किं तु भयानकेऽपीत्याह । किं चेति । ननु मनोमज्जनात्मके तत्र कुतो दीप्तेरवकाश इत्याशङ्क्याह । दीप्तत्वेनेति विभावस्य भीषणालोकनाद्युद्दीपनविभावस्येत्यर्थः । प्रसादं लक्षयति । य अनलवदिति रौद्राद्यभिप्रायेण शृङ्गारादिषु तु[5] स्वच्छाम्बुवदिति इ । एवोक्तं काव्यप्रकाशे ।

'शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ।
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः[6] ॥' इति ।

ननु श्लेषादयो दश गुणाः । तदुक्तम्

'श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ॥' इति[7] ।

तत् कथं त्रय एवोक्ता इत्याशङ्क्य सत्यमेषां केषांचिदेष्वेवान्तर्भावात् केषांचिद् षविपर्ययरूपत्वाच्च त्रित्वं सिद्धमित्याह । श्लेष इति । अन्तर्भावाद्यभिव्यक्तये श्लेष

१ किं त्वसन्न° D. २ °वृत्तेः G. ३ °साधारणं स्थितः T. ४ °विपर्ययात् T., M.,
५ K. omits तु. ६ त्रिजितस्थितिः K. ७ °इत्यादि K.

पदानामेकपदवद्भासमानत्वं श्लेषः। आरोहावरोहक्रमरूपः समाधिः। विकटत्वमौदार्य्यम्। एषामन्तर्भाव ओजसि। झटित्यर्थप्रतिपत्तिहेतुरूपार्थव्यक्तिः प्रसादान्नापरा। मार्गाभेदरूपा समता दोषाभावमात्रं न गुणः। अपारुष्यरूपं सौकुमार्यं श्रुतिकटुकस्य दोषस्य विपर्य्ययः। पदानामौज्वल्यरूपा कान्तिर्ग्राम्यस्य॥

त्रीनभिधाय गुणान् वयमधुना रीतीः
प्रचक्ष्महे तिस्रः।
वैदर्भीपाञ्चालीगौडीयेत्यत्र संक्षेपात्॥ ९ ॥[१]

अकृतसमासस्पर्शा समग्रगुणगुम्फितादिमा तत्र।
एकैव जयति रीतिर्विदलितवीणाभिमानसर्व-
स्वा॥ १० ॥

ओजःकान्तिविहीनामाहुः श्लथसंधिबंधुरां कवयः।
[illegible]मुदञ्चल्ललितसमासां[३] च पाञ्चालीम्॥ ११
[illegible]जःकान्तिकरम्बितसकलोद्धत[४]पदविराजिताम्
वृत्तिम्।

[illegible]स्वरूपमाह। पदानामिति[५]॥

[illegible]थ गुणप्रसङ्गात् तद्विशिष्टरचनात्मिका रीतिरिति प्रतिज्ञायाः संगतिं सूचयन् [illegible]वति। त्रीनित्यादि। ननु सन्त्येव रीत्यन्तराण्यपि कथं तिस्र एवेत्युक्तं

१ °कटुत्वरूपस्य T. २ विपर्यासः G. ३ °समासात्र T. ४ °लोचित° G., C., M.
५ °मित्यादि K.

बिभ्राणा रीतिज्ञैर्गौडीया रीतिराम्नाता ॥ १२ ॥

एतासामेव साङ्कर्याद्भवन्त्यावन्तिकादयः ।
पार्थक्येन ततोऽस्माभिर्नाभ्यधीयंत ताः पुनः ॥ १३

तल्लक्षणं राज्ञोक्तम् । यथा

'अन्तराले तु पाञ्चालीवैदर्भ्योर्यावतिष्ठते ।
सावन्तिका समस्ता स्याद् द्वित्रैस्त्रिचतुरैः पदैः ॥
समस्तरीतिव्यामिश्रा लाटीया रीतिरुच्यते ।
पूर्वरीतेरनिर्वाहात् खण्डरीतिस्तु मागधी ॥'

दर्शनान्तरे त्वेता वैदर्भीपाञ्चालीगौडीया चेति तिस्रो रीतयो मधुरमध्यमपरुषवर्णारब्धत्वान्मधुरा मध्यमा परुषा चेति वृत्तयो रसविषयव्यापारत्वेन कथ्यन्ते । यदुक्तमलंकारसर्वस्वकारेण । 'वृत्तिस्तु रसविषयो व्यापारः' इति ॥

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे गुणनिरूपणं नाम पञ्चम उन्मेषः ॥

---

तत्राह । एतासामिति । अथ मतान्तरमाह । दर्शनान्तरेष्विति । तत्र संमतिमाह । यदुक्तमिति । वृत्त्यनुप्रासप्रपञ्चनिर्वचनप्रस्ताव इत्यर्थः ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायामेकावलीव्याख्यायां तरलाख्यायां गुणनिरूपणं नाम पञ्चम उन्मेषः ॥

---

१ D. drops तिस्रो. २ मध्या D., M. ३ °व्यापारत्वे D. ४ इति विद्याधरकृतैकावली° D. ५ एतासामेवेत्यादि K. ६ इत्येकावलीव्याख्यायां गुणनिरूपणं नाम पञ्चमोन्मेषः D.

अथ षष्ठ उन्मेषः ।

न विधेयप्राधान्यं वृत्तिर्वक्तुं प्रगल्भते यस्मात् ।
अविमृष्टविधे[1]यांशस्तस्मादस्यामुदीर्यते दोषः ॥१॥

परस्परसव्यपेक्षप्रधानोपसर्जनभावापन्नविध्यनुवादरूपावयवद्वि[2]तयशालि तावद्वाक्यम् । अज्ञातज्ञापनं विधिः । प्रमाणान्तरसिद्धस्य पदार्थस्य प्रयोजनान्तरेण[3] [4]स्वरूपकीर्तनमनुवादः । यथा गौरयं पदा न स्प्रष्टव्य इत्य[5]त्र गौरयमित्यनुवादभागः पदा न स्प्रष्टव्य इति

---

तदेवमुपादेयतया जिज्ञासिता गुणा उक्ता अथ हेयतया जि[6]ज्ञासमाना दोषाः प्रदर्श्यन्ते । तत्र काव्यापकर्षहेतवो दोषा इति सामान्यलक्षणम् । ते चान्यत्र पदवाक्यार्थगतत्वेन त्रिविधा अपि बहु[7]धा प्रपञ्चिताः । ते च तत्रैव द्रष्टव्या इत्या[illegible]ख्यानविमृष्टविधेयांशप्रभृतीन् पञ्चदोषान् व्याकुर्वन् पदवाक्यग[illegible]विधेयांशे आद्यं भेदं लक्षयति । नेत्यादि । वृत्तिः संसर्गः [illegible]सरूपेण विधा[9] तया विधेयप्राधान्यं यत्र न्यक्क्रियते स पद[illegible] इत्यर्थः । कथं वृत्तेः प्राधान्यतिरोधायकत्वमित्याशङ्क्य [illegible]रूपणपूर्वकं तद्दर्शयति । परस्परेत्यादि । अवयवद्वितयमवान्तरवाक्यद्वयं तच्छालि तावद्वाक्यं तदुक्तं महावाक्यमित्यर्थः । एकवाक्यत्वे हेतुमाह । परस्परसव्यपेक्षेति । सापेक्षत्वे हेतुमाह । प्रधानेति । तत्रापि हेतुर्विध्यनुवादेति । तत्र विधिशब्दार्थमाह । अज्ञातेति । अनुवादस्वरूपमाह । प्रमाणान्तरेति । प्रमाणान्तरेत्यनेन पौनरुक्त्यपरिहारः । उदाहरति । गौरित्यादि ।

---

१ °विधेयांशं त° D. २ °द्वय° D., C., M. ३ °रोद्देशेन T., C., G., M. ४ स्वरूपसंकीर्तन° C., G., M. ५ T. omits इति. ६ जिज्ञासिता K. ७ बहुविधाः K. ८ पञ्चदोषानुद्धृत्य व्याकुर्वाणः K. ९ त्रेधा D.

हि[1] विधीयते। अत्र[2] च विधेयस्यार्थस्य प्राधान्यमनुवाद्यस्य पुनरप्राधान्यम्[3]। स चायं विधेयानुवाद्ययोः प्रधानोपसर्जनभावो वाक्यात् प्रतीयते न वृत्तेः। वृत्तिमासाद्य प्रधानोपसर्जनभावस्य निमज्जनप्रसङ्गात्। तत्र[4] समासेषु[5] कर्मधारये यथा

---

तत्र प्रधानाप्रधाने विविनक्ति। अत्र[6] चेति। ननु किमिदमुच्यते विधेयस्य प्राधान्यमप्राधान्यमनुवाद्यस्येति। एवं चेद्दध्ना जुहोतीत्यत्रापि विधेयस्य दध्नः प्राधान्यमनुवाद्यस्य होमस्याप्राधान्यं चापद्येत। किं च वाजपेयाधिकरणपूर्वपक्षे वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र धात्वर्थस्य यजेस्तन्त्रेण गुणफलसंबन्धे[7] विरुद्धत्रिकद्वयापत्तिं वदता सिद्धान्तिना विधेयस्य गुणत्वमनुवाद्यस्य प्राधान्यं चोक्तम्। तथा च वार्त्तिकम्। 'ततः स्वफलेनोपादेयविधेयगुणभूतयागग्रहणाद्गुणेन चोद्देश्यानुवाद्यप्रधानभूतापेक्षणात्तन्त्रत्वाभावः' इति। तथा च संग्रहः॥

'उपादेयविधेयत्वगुणत्वानि यजेः फले।
उद्देश्यत्वानुवाद्यत्वप्राधान्यानि गुणान्वये'॥

इति। इहोद्देशो मानसी विवक्षा। उपादेयत्वमनुष्ठेयत्वम्। तत्र सिद्धस्योद्देशः साध्यस्यानुष्ठानमिति सिद्धसाध्यभावादुद्देश्यत्वोपादेयत्वयोर्विरोधः प्राप्ताप्राप्तरूपत्वादनुवाद्यविधेयत्वयोर्गुणप्रधानत्वयोस्तत्त्वादेवेत्यलं प्रसक्तानुप्रसक्त्या। तदेतत् सम्यग्विवेचितमस्माभिस्तन्त्रवार्त्तिकटीकायां वाजपेयाधिकरणे। तस्माद्विधेयस्य प्राधान्यमप्राधान्यं चानुवाद्यस्येति न मीमांसामांसलं वच इति प्रतीमः। नैष दोषः। इह विधेयस्य प्राधान्यं नाम तात्पर्यविषयत्वमात्रमप्राधान्यं चानुवाद्यस्यातद्विषयत्वमात्रं न तु दधिहोमयोरिव पारार्थ्यहेतुकः शेषशेषिभावलक्षणो गुणप्रधानभाव इति। अस्तु प्रस्तुते किमायातमत आह। स चायमिति। तत्रेति। वृत्तित्रयमध्ये[8]

---

१ T. omits हि; इति व्यपदिश्यते G. २ तत्र T., G. ३ चाप्राधान्यम् G. ४ D. omits तत्र. ५ समासेऽपि षट् प्रकाराः G.; समासेऽपि कर्म° C., M. ६ तत्र चेति K. ७ °संबन्धोक्तौ तत्र D. ८ °त्रितयमध्ये K.

जाते वीर नृसिंह भूप चलत[2]स्त्वत्सैन्यपाथोनि[3]धे-
र्न्यञ्चद्भूतलभारभङ्गुरफणोत्सङ्गोरगाधीश्वरे ।
बाष्पोत्सङ्कितलोचनं कुचतटीविन्यस्तहस्ताञ्चलं
तस्यान्तःपुरसुभ्रुवामु[4]दचरन् हाकारगर्भा गिरः ॥

अत्र न्यञ्चद्भूतलभारभङ्गुरफणोत्सङ्गत्वं तावद्विधेयम्, तच्चोरगाधीश्वरेणानुवाद्येन समं समासत[5]या न्यग्भावमानीतम् । '°फणोत्सङ्गे भुजङ्गेश्वरे' इति [6]समुचितः पाठः ।

बहुव्रीहौ यथा

त्यागश्रीहसितेन्द्रकेलिविपिनक्षोणीरुहाहंकृतिः
कीर्त्तिश्रीडितकार्तिकेन्दुमहिषीगण्डस्थलीपाण्डिमा ।
हेलाताण्डवितप्रतापलहरीनिर्धूतकल्पानलः
केषामेष न वर्णनीयमहिमा वीरः कलिङ्गेश्वरः ॥

अत्र कल्पद्रुमाहंकारादिनानुवाद्येन [7]समं हसनादि वेधयत्वात् प्रधानतया विवक्षितं समासेन [8]गुणीभूतम् ।

'त्यागेनोपहसन् महेन्द्रविपिनक्षोणीरुहाहंकृतिं
कीर्त्त्याऽपत्रपयन् सुधांशुमहिषीगण्डस्थलीपाण्डुताम् ।
[9]निर्धुन्वन् प्रबलप्रतापलहरीनृ[10]त्येन कल्पानलम्

इति नि[11]रवद्यः पाठः ।

---

इत्यर्थः । न्यग्भावमानीतमिति । विधेयांशस्य समासे गुणभावेन प्राधान्यं तिरोहितमित्यर्थः । एवं 'मौर्वीं द्वितीयामिव कार्मुकस्य' इत्यत्र द्वितीयमौर्वीमिति पाठेऽयं दोष इत्याहुरस्यम् । त्यागेत्यादि । इन्दुमहिषी चन्द्रिका । समं

---

१ देव T. २ चलिते G.; चलति C., M.; भरतस्व° T. ३ °निधौ न्यञ्च° C., M., G. ४ °मुदभवन् T., G., M., C. ५ समासवशात् T., G., C., M. ६ युक्तः D. ७ T. drops समं. ८ गुणीकृतम् D. ९ निर्धून्वन् T., G., C., M. १० °नृत्तेन T., G., C., M. ११ निरवकरः C., G.

द्विगौ यथा

विधुन्तुद ममाधुना बत करिष्यते किं भया-
निति स्फुरदहंकृतिस्तुहिनदीधितिर्निर्भयम्[1] ।
विधाय तव कीर्त्तिभिर्निजवपुःसहस्राण्यसौ
कलिङ्गवसुधाधिप त्रिषु जगत्सु विद्योतते ॥

अत्र संख्यायाः संख्येयेषु जगत्सु निरवशेषतावगमैकप्रयोजनमतिशयमादधानायाः प्राधान्यमभिमतं[2] तच्च त्रिजगत्यामिति समासेनोपसर्जनत्वमानीयते[3] ।

तत्पुरुषे यथा

यदिह ककुभां सीम्नि व्योम्नः स्थलेऽप्यमितं यश-
स्तव कथमपि ज्योत्स्नागौरं[4] नृसिंह नरेश्वर[5] ।
तदिदमखिलं चित्रं पञ्चाशता परमक्षरैः
कृतपरिकरे वाग्व्यापारे निवेशयते कविः ।

---

समासेनेति संबन्धः । हसनादीति[6] विच्छेदः[7] । विधुन्तुदेति[8] । विधुं तुदतीति विधुन्तुदो राहुः । "विध्वरुषोस्तुदः" इति खश् प्रत्ययः । "अरुर्द्विषत्—" इत्यादिना मुमागमः । नन्वत्र द्विगुरेव नास्ति कथमिदं द्विगूदाहरणमित्याशङ्क्य प्रत्युदाहरणमेतदुदाहरणं तु त्रिजगत्यामिति व्यतिरेकादुन्नेयमित्याशयेनाह । अत्र संख्याया इति । प्राधान्ये हेतुमाह । निरवशेषतेति । अन्यथा जगत्स्विति बहुवचनेन त्रित्वसंख्यायाः पौनरुक्त्यादिति भावः । त्रिजगत्यामिति "तद्धितार्थ—" इत्यादिना समाहारे द्विगुः । यदिहेत्यादि । कृतपरिकरे कृतपरिवारे कृतसन्नाह इत्यर्थः । अत्रामितमिति नञ्समासस्तत्पुरुषस्तेन विषयस्य निषेधस्य प्राधान्यं न

---

१ °निर्भयः T., G., C., M. २ °मभिहितं T., G. ३ °सर्जनतामा° G., M. ४ °स्नागौर T. ५ महीश्वर T. ६ हसनादि° K. ७ छेदः D. ८ °त्यादि K.

अत्रामितमिति निषेधस्तावद्विधेयत्वेनाभिधित्सितः । मानं पुनरनुवाद्यत्वेन । अनयोः समासेनाभिधानमनुचितम् । समासे विध्यनुवादगत[1]त्वेन विवक्षितयोः प्राधान्याप्राधान्ययोर्विपर्यासप्रसङ्गात् । [2]अतश्च

'यदिह न दिशां सीम्नि व्योम्नः स्थलेऽपि मितं यशः'

इति पाठः परिणमयितव्यः । यत्र तु विध्य[3]नुवादभावो नाभिमतस्तत्र समासः स्यादेव । यथा 'निधिरखर्वनायाससुलभः ।'

यथा वा

आक्रम्य स्मरवैरिशेखरसरित्पूरैकसिंहासनं
राजानं नरसिंह पार्थिव तथाहंकारभारोद्धुरः ।
त्वत्कीर्तिप्रसरो हसत्ययमसौ शक्रस्य दन्तावलं
व्यालेन्द्रं मुसलायुधं किमपरं देव्याश्च पञ्चाननम् ॥

अत्र प्रलयघनघटारटितप[4]टुतरहुङ्कार[5]परिपीतहरिदन्तदन्तावलमदस्रोतस्तयानितरकेसरिसाधारणत्वं पञ्चाननस्याभिधातुमभिमतं तावद्भगवत्याः पार्व[6]त्याः संबन्धित्वेनेति देव्याः प्राधान्यं पञ्चाननेन समं समासमकुर्वता नोपसर्जनतां नीतम् । समासे हि पञ्चाननस्य प्राधान्यं न तु देव्याः । तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् । एवं कृत्तद्धितयोरपि वृत्तिर्नादरणीया ।

---

कृतमित्याह । अत्रेति । अनौचित्ये हेतुमाह । समास इति । एवं तर्हि नञ्समासो निरवकाश इत्याशङ्क्याह । यत्र त्विति । तत्पुरुषान्तरं व्यतिरेको[8]ऽयमाह । आक्र[7]म्येति । एवं विधेयस्य समासे गुणीभावो दोषायेत्युक्तं तद्वृत्त्यन्तरेऽप्यातिदिशति । एवं कृत्तद्धितयोरपीति । तत्र कृद्वृत्तेः प्रत्युदाहरणमाह । सर्वामिति ।

---

१ °गतत्वेनापि G. २ ततश्च T. ३ °नुवादलभो T. ४ 'पटुतरझङ्कार' D. ५ °परिवीत° T., G., C., M. ६ D. omits पार्वत्याः. ७ °क्रम्येत्यादि D. ८ °मित्यादि K.

सर्वं कषति न केषामेषां[1] समरेषु विद्विषां गर्वम् ।
कालीव दानवानां वीर कृपाणी तव स्थिता पाणौ ॥

अत्र कषणस्य कर्मत्वेन सर्वमिति गर्वविशेषणमुत्कर्षप्रकाशनपरतया प्राधान्येन विवक्षितम् । सर्वंकषेति कृद्वृत्त्या[2] न गुणतां नीतम् ।[6]

न कस्य कर्णयोर्हर्षमेषा वर्षति[3] भारती ।
कवित्वतत्त्वनिष्ठस्य[4] नरसिंहस्य भूपतेः[5] ॥

अत्र नरसिंहसंबन्धित्वेन भारत्याः प्रकर्षो वक्तुमिष्ट इत्यस्याः प्राधान्यं नारसिंहीति तद्धितवृत्त्या न म्लानिमानीतम् । विभक्त्य-

---

सर्वंकषेति व्यतिरेकेण कृद्वृत्तेरुदाहरणोक्तिः । ननूपपदसमासत्वात् समासवृत्तिरेवेयं किं न स्यात् । समासात् पूर्वमेव "सर्वकूलाभ्रकरीषेषु कषः" इति सर्वोपपदेन खचा समासात् पूर्वभाविना विधेयस्य सर्वशब्दार्थस्य प्राधान्यन्यक्कारे पश्चात् समासोत्पत्तेरिति । तद्धितवृत्तेरपि प्रत्युदाहरणमाह । नेति[7] । अत्रापि नारसिंहीति व्यतिरेकेणोदाहरणोक्तिः । यथा वैश्वदेव्यामिक्षेत्यत्र वैश्वदेवीशब्दस्य तद्धितप्रत्ययसामर्थ्याद्देवताविशिष्टद्रव्यपरत्वं तथा नारसिंही भारतीत्युक्ते नरसिंहसंबन्धभारतीपरत्वं प्रतीयते न तु नरसिंहपरत्वं प्रकृत्यर्थप्राधान्यन्यक्कारेण प्रत्ययेन स्वार्थप्राधान्यप्रकाशनादित्यर्थः । ननु नरसिंहस्येति च नारसिंहीति च षष्ठीतद्धितयोः संबन्धमात्रविहितयोः को विशेषो येनैकत्र विशेषणप्राधान्यमन्यत्र विशेष्यप्राधान्यं चेत्याशङ्क्याह । विभक्तीति । विभक्तिर्हि प्रातिपदिकादुत्पन्ना तदर्थस्य विशेषतः सामान्यतो वा संबन्धं बोधयन्ती न तस्य विधेयस्य प्राधान्यं तात्पर्यविषयतारूपं तिरोधत्ते । तद्धितस्तु तस्येदमिति तत्संबन्धिन्यर्थान्तरे विहितस्तस्यैव प्राधान्यं गमयन् प्रकृत्यर्थप्राधान्यं व्याहन्तीत्यन्वयव्यतिरेकाभ्यामवगम्यत इत्यर्थः । ननु नरसिंहस्य भारतीति विभक्तिप्रयोगेऽपि[9] नरसिंहस्य विशे-

---

१ °मेषावसरेषु D. २ वृत्त्या T. ३ कर्षति D. ४ कविविद्वत्त्वनिष्ठस्य C. ५ नरसिंहमहीपतेः D. ६ °रुदाहरणम् K. ७ नेत्यादि K. ८ व्याहरती° K. ९ विभक्तेः प्रयोगेऽपि K.

षयव्यतिरेकानुविधायिनी विशेषणानां विधेयतावगतिः। विशेष्ये-त्कर्षापकर्षविधायिनामेषां शाब्दे गुणभावेऽप्यार्थे प्राधान्यं विशेष्याणां शाब्दे प्राधान्येऽप्यार्थो गुणभावोऽनूद्यमानत्वात्। समासे तु समुदितार्थाभिधायितया नोत्कर्षः प्रतीयतेऽपकर्षो वा।

अव्ययीभावे यथा

नाथः काकोदराणां कथयति लिखति क्ष्मापतिः कार्त्तवीर्यो
मेलानन्दो जलानां निधिरचलपतिर्लेखनी व्योम पत्रम्।
संख्या पारेपरार्धं यदि भवति पुनः किं च वैरिञ्चमायुः
संख्येयत्वं तदानीं दधाति तव गुणाः श्रीनृसिंह क्षितीन्द्र॥

षणत्वादेवाप्राधान्यं विशेष्यत्वादेव भारत्याः प्राधान्यं च गम्यते कुतस्तेन नरसिंहस्य प्राधान्यमित्याशङ्क्याह। विशेष्येष्विति। अकलङ्कं मुखं कलङ्की चन्द्र इति प्रयोगे शब्दावन्यथात्वेऽपि विशेष्यमुखचन्द्रगतोत्कर्षापकर्षहेतुत्वेन तद्विशेषणयोः सकलङ्कत्वाकलङ्कत्वयोर्विधेयत्वात् प्राधान्यं तात्पर्यविषयस्वरूपं विशेष्ययोर्मुखचन्द्रयोरनूद्यमानयोरप्राधान्यं चार्थाद्विध्यनुवादसामर्थ्यरूपादवगम्यत इत्यर्थः। वृत्तौ तु नैवमित्याह। समासेति। समासः संसर्गद्विविधापि वृत्ति-रिति यावत्। समुदितार्थो विशिष्टार्थः। पुनः सिंहावलोकेन समासवृत्तिमेवाह। अव्ययीभावे यथेति। नाथ इत्यादि। फणिपतेः सहस्रमुखत्वात् कथक-त्वं कार्त्तवीर्यस्य सहस्रकरत्वाल्लेखकत्वं चेति भावः। मेलानन्दो मषीपात्रम्। अचल-पतिर्हिमाद्रिः। लेखनी लेखवर्णिका। परार्धस्य पारे पारेपरार्धम्। "पारे मध्ये षष्ठ्या

१ °विधायिनी ह्वी विशे° O. २ विधेयत्वावगतिः C., G., M. ३ विशेष्योत्कर्षापकर्षानुया-यिना° T. ४ D. omits अपि. ५ मेलामन्दो T., C., G., M. ६ वैरिञ्चियमा° D. ७ ददाति D. ८ भारत्या विशेष्यत्वादेव प्राधान्यं K. ९ मेलामन्दो K.

अत्र प्रभोः प्रकर्षप्रकाशनं प्रस्तुतं तच्च गुणबाहुल्यप्रतिपादनेनाभिमतम्। तत् पुनर्गुणानामगणनीयतया क्रियते। सा च संख्याया अभावादेवाभूत्। अत एव संख्याधिक्याशंसनं कृतम्। इहाल्पीयसी संख्या परार्धरूपा तया गुणगणनं कर्त्तुमशक्यम्। अतः पारे इत्यस्याव्ययार्थस्य विशेष्यस्यानूद्यमानत्वाच्च प्राधान्यम्। परार्धस्य तु विशेषणस्य विधेयत्वात् प्राधान्यम्। तच्च न्यग्भावितं समासेन। ततश्च 'संख्या दूरे परार्धात्' इति न्याय्यः पाठः। द्वन्द्वस्य विशेष्यविशेषणभावाभावेऽपि यदा प्रत्येकं क्रियासंबन्धोपलक्षणं प्राधान्यमभिमतं तदा न समासः कर्त्तुमुचितः। उपसर्जनत्वप्रसङ्गात्।

---

त" इत्यव्ययीभावः। को नु दोष इत्याशङ्क्याह। अत्रेत्यादि। अत्र पारेशब्दार्थप्रतियोगित्वेन परार्धस्यैव विधेयत्वात् तस्य च पूर्वपदप्रधानेऽव्ययीभावे उत्तरपदार्थभावेन प्राधान्ये तिरोधानादविमृष्टविधेयांशोऽयं दोष इत्याह। अतः पार इत्यादि। द्वन्द्वेऽप्यस्य दोषस्य क्वचिदवकाशं संपादयति। द्वन्द्वस्येति। यत्र द्विदैवत्येषु देवयोर्दैवतयोरिव मिलितयोः क्रियासंबन्धो विवक्षितस्तत्रैव द्वन्द्वे न दोषः। यथा

'स निर्विश्य यथाकामं तटेष्वालीढचन्दनौ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ॥'

इत्यत्र मलयदर्दुरयोः स्तनौपम्यसामर्थ्यान्मिलितयोर्निर्वेशनाक्रियाकर्मत्वेन द्वन्द्वः कृतः।

'नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम्।'

इत्यत्र सदसतोः प्रत्येकमेवोपदर्शनक्रियाकर्मत्वात् द्वन्द्वो न कृतः। अत एवोपदर्शितमित्येकवचनप्रयोगश्चेत्यर्थः। उपसर्जनत्वप्रसङ्गादिति। द्वन्द्वकरणे

---

१ °धिक्याशासनम् T. २ इत्यव्ययार्थस्य C., M. ३ °नूद्यमानतया न D. ४ ततः D
५ पाठो न्याय्यः T. ६ °लक्षणप्राधान्य° T. ७ °मभिहितं T. ८ पूर्वपदार्थप्राधान्ये B
९ द्विदेवत्येषु K. १० °दैवतयो° D.

प्रत्युदाहरणं यथा

गर्जद्दुर्जयशत्रुसैन्यजलधेर्मन्थाय विद्वज्जना-
भीष्टानां परिपूरणाय वसुधावष्टम्भदानाय च ।
राजन् वीर नृसिंह देव भवतः सृष्टे भुजे वेधसा
व्यर्थः संप्रति मन्दरः सुरतरुः सर्पाधिपश्चाभवत् ॥

अत्र भवनक्रियायां मन्दरादीनां प्रत्येकं सम्बन्धः प्राधान्येनाभिधातुमभिमतो न समासेनावसादितः ॥

**अनुवाद्यविधेयांशावुक्तौ स्यातां विपर्ययेण यदा ।**
**अविमृष्टविधेयांशो भवति तदानीं तु वाक्यगतः ॥ २ ॥**

यथा

कलानिधे वीर कलिङ्गनाथ
प्रायस्त्वमिन्दोरपरावतारः ।
त्वां पश्यतामेव मुदः स्फुरन्ति
यदुत्तरङ्गाः कविकैरवाणाम् ॥

अत्र त्वामनूद्य चन्द्रावतारत्वं विहितम् । यदि पुनरस्य पद-

---

उक्तलक्षणप्राधान्यन्यक्कारप्रसङ्गादित्यर्थः । गर्जदित्यादि । अत्राभवदित्येकवचनप्रयोगाद्बहुवचनमप्युक्तोपसर्जनताहेतुत्वाद्धेयमित्यनुसंधेयम् ॥

वाक्यगताविमृष्टविधेयांशं लक्षयति । अनुवाद्येति । अत्र त्वामिति 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति न्यायादिति भावः । विपरीतोपन्यासे तु व्यत्यासेनोद्दिश्यविधेयांशत्वप्रसङ्गादयं दोषः स्यादित्याह । यदि पुनरिति । धर्मिण-

---

१ त्वमित्यनूद्य T., C., G., M. २ त्वमित्यनु° K. ३ विवक्षितोप° K. ४ व्यत्यासेऽविमृष्टविधे° D.

द्वयस्य वैपरीत्येनोपादानमकरिष्यत्तदा निर्विवादमिदं दूषणमभविष्यत्। धर्मिणमुद्दिश्य धर्मो विधीयत इति सिद्धस्योद्देश्यत्वं साध्यस्य च विधेयत्वम्। तयोर्विपर्ययेणोपादाने तार्किकैरपि नित्यमाकाशमित्यादावप्राप्तकालस्य निग्रहस्थानस्याभ्युपगतत्वात्[2]।

यथा च[1]

लोकत्रयेऽपि चरितैस्तव कोऽपि तुल्य-
स्तैस्तैर्बभूव भवितास्ति च किं न वेति।
आलोकनाथ नृपते नरसिंह[3] नूनं
देवः सुधाकिरणमौलिरभूत् त्रिनेत्रः[4]॥

अत्र सुधाकिरणमौलित्वमनूद्य[5] त्रिनेत्रत्वं विहितमिति नायं दोषः। विपर्ययोपादाने भवत्येव।

यथा

उत्कण्ठाभारताम्यत्कुवलयनयनामानसाम्भोजभानु-[6]
श्चिन्तासंतापमीलत्कविकुलकुमुदव्यूहनक्षत्रनाथः।
ईर्ष्यासंवर्धमानप्रतिनृपतिकुलाम्भोधिकुम्भोद्भवश्च
ख्यातः सर्वत्र योऽसौ जगति विजयते श्रीनृसिंहः क्षितीन्द्रः[7]॥

अत्र यदः प्रयोगो नोचितः[10]। यत्र हि यत्तदोरन्यतरस्य निर्देश-

मिति। सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयत इति न्यायादिति भावः। अप्राप्तकालस्येति। 'अवयवविपर्यासवचनमप्राप्तकालम्' इति लक्षणसूत्रम्। अथ यत्तच्छब्दयोरनुवाद्यविधेयपरयोः प्रयोगव्यवस्यातिक्रमेऽन्ययमेव दोष इति वक्तुमुदाहरति। उत्कण्ठेति। कोऽत्र दोषस्तत्राह। अत्र यदः प्रयोगो नोचित इति।

१ D. drops च. २ °भ्युपगमात् T. ३ नरसिंह नराधिनाथ D. ४ जातः सुधाकरकलातिलकस्त्रिनेत्रः D. ५ सुधाकरकलातिलकत्वमनूद्य D. ६ लोचनाम्भोज° T. ७ °नृसिंहक्षिती° T., C., G. ८ °विपर्यासे K. ९ °त्यादि K. १० प्रयोगोऽनुचितः K.

स्तत्र[1] तत्प्रत्यवमर्शिना तदितरेणोपसंहारो न्याय्यः। तयोरनुवाद्यविधेयार्थत्वेनाभिधातुमभिमतयोः परस्परसव्यपेक्षत्वेन संबन्धस्य नित्यत्वात्। स पुनरुपक्रमोपसंहारक्रमो द्विविधः शाब्दश्चार्थश्चेति। तत्र द्वयोरुपादाने शाब्दः।

यथा

हिमकरकलामौलिः कृष्णः सरोरुहसंभवः
फणधरकुलं नालं वोढुं नृसिंह नरेश्वर।
यदमरधुनीं दुग्धाम्भोधिं मरालमहीश्वरं
स खलु महिमा विश्वाख्यातस्तवैव यशःश्रियः॥

अत्र यदित्युक्त्वा स इत्युक्तम्।

एकतरोपादाने त्वार्थः। तदितरस्य सामर्थ्येनावसीयमानत्वात्। तत्र केवलस्य तद् उपादाने सत्यार्थौ[2] न त्रैविध्यमतिक्रामति। प्रक्रा-

---

योऽसावित्थं सर्वत्र दैयात इति पूर्वस्मिन्ननुवाद्यवाक्ये यच्छब्दं प्रयुज्याप्युत्तरस्मिन् विधेयवाक्ये स विजयत इति तच्छब्दस्यावश्यप्रयोक्तव्यस्याप्यप्रयुक्तत्वादिति भावः। कोऽयं निर्बन्ध इत्याशङ्क्य न्यायबलमाह। यत्र हीति। यत्तदोः परस्परसापेक्षार्थबोधकत्वेन नित्यसंबन्धित्वादन्यतरेणोपक्रमे तदितरेणोपसंहारो न्यायसिद्धस्तथा दुर्वार इत्यर्थः। हिमकरेति। अत्र हरादयश्चत्वारोऽपि गङ्गादींश्चतुरोऽपि वोढुं नालमिति यत् स ते यशःश्रियो महिमेत्यन्वयार्थौ। अत्र यत्तदोर्द्वयोरुपादानाच्छाब्दोऽयं क्रम इत्याह। यदिति। आर्थं क्रमं निरूपयति। एकतरेति। एकतरोपादान इत्युपलक्षणम्। उभयानुपादान इत्यपि द्रष्टव्यम्। तथा च केवलतच्छब्दोपादानात् केवलयच्छब्दोपादानादुभयानुपादानाच्चेत्यर्थात् त्रिविध इत्यर्थः। तथाप्यार्थस्त्रिविध इत्याह। तत्र केवलस्येति। तिस्रो

---

१ D., G., and M. omit तत्र. २ T. omits सति. ३ व्याख्यात° K. ४ °त्यादि K. ५ यत्तदोरुपा° D. ६ आर्थक्रमं D. ७ °नुपादानाच्चेत्यर्थः K.

न्तप्रसिद्धानुभूतविषयतयोपकल्पितसंनिधिना यच्छब्देन तच्छब्दस्याभिसंबन्धात्[1]।

क्रमेण यथा

लोकेऽस्मिन् नरसिंहदेवनृपतिर्दाता न कल्पद्रुम-
स्तेजस्वी स न पद्मिनीसहचरः कान्तः स नो चन्द्रमाः।
गम्भीरः स न वाहिनीपरिवृढस्तुङ्गः स नो मन्दरः
शिल्पज्ञः स न पद्मभूः किमपरं वाग्मी स नो वाक्पतिः॥

अत्र तेजस्वी स इत्यादौ प्रक्रान्तेऽर्थे[2] तच्छब्दः।

सा किं दुग्धवती कदा बत शिला कस्मै स शाखी पुनः
कस्यालोकपथं गतो निविशते कस्यान्तिके सा पशुः[3]।
पर्याया नरसिंह पार्थिव तव प्रख्यातिचिन्तामणि-[4]
र्मन्दारो दिविषद्गवी त्रिभुवनश्लाघ्याः[5] समस्ता अमी॥

इह निरतिशयवितरणचणतया प्रसिद्धा या शिलेति प्रसिद्धेऽर्थे[6] तच्छब्दः।

---

विधा[7] दर्शयन्नार्थत्वं समर्थयते। प्रक्रान्तेति। लोक इत्यादि। परिवृढः प्रभुः। "प्रभौ परिवृढ" इति परिपूर्वाद्वृहेर्धातोर्निष्ठान्तो[8] निपातः। अत्र सर्वत्र तच्छब्देन नृसिंहदेवनृपतिरिति प्रक्रान्तस्य नृपतेः परामर्शात् प्रक्रान्तगोचरोऽयं भेद इत्याह। अत्र तेजस्वीति। सा किमित्यादि। निविशत इति। "नेर्विशः" इत्यात्मनेपदम्। दिविषदां गौर्दिविषद्गवी कामधेनुः। "गोरतद्धितलुकि" इति समासान्तटच्। "टिड्ढाणञ्——" इत्यादिना ङीप्। अत्र सा शिलेत्यादितच्छब्देन प्रसिद्धचिन्तामण्यादिपरामर्शात् प्रसिद्धार्थगोचरोऽयं द्वितीयो भेद इत्याह। इहेति। वितरणचणतया दानवित्ततयेत्यर्थः। "तेन वित्तश्चुञ्चुप्चणपौ" इत्यादिना चणप्-

---

१ °स्याभिधानसंबन्धात् D. २ प्रक्रान्तार्थे D ३ वसति सा धेनुश्च कस्यान्तिके G., O., M. ४ प्रख्यातचिन्ता° M.; प्रख्यान्ति चिन्ता° T. ५ °श्रयीति भुवि न श्ला° O.; °श्रयीति भुवन° T., G., M. ६ प्रसिद्धार्थे M. ७ D. has अपि before विधा. ८ °वृंहतेर्धातो° D.

त्वत्प्रत्यर्थी गिरिचरगजस्याङ्कके दत्तदृष्टि-
स्तस्मिंस्तस्मिन् स्मरति मधुरं तत्तदङ्गं प्रियायाः।
कुम्भाभोगे गुरुकुचतटं दन्तयोर्गण्डलक्ष्मी-
मुरू हस्ते गतिषु च गतिं श्रीनृसिंह क्षितीन्द्र॥

अत्र तत्तदित्यनेन पदेनानुभवैकगोचराः प्रकाश्यन्तेऽर्था इत्यनुभूतेऽर्थे तच्छब्दः।

यच्छब्दस्तूत्तरवाक्यगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यगततच्छब्दस्योपादानं नापेक्षते।

यथा

श्रीमन्नृसिंह नृपते कविकाव्यशय्यां
त्वत्कीर्त्तिरेति भुवनत्रयगर्भभारात्।
यस्याः प्रभा भजति दौर्हृदपाण्डुभावं
प्रौढीभवत्यसिमिषेण च रोमराजिः॥

---

प्रत्ययः। सदृशदर्शनादयो विरहिणां विनोदा इति स्थिते सत्याह। त्वदित्यादि। कुम्भाभोग इत्यादौ सर्वत्र दत्तदृष्टिरित्यनुषङ्गः। सदृशदर्शनात् स्मृतिर्जायते इति भावः। तदत्रापि। तथा तच्छब्दस्य पूर्वानुभूतपरामर्शित्वादनुभूतार्थगोचरोऽयं तृतीयो भेद इत्याह। अत्रेति। अथ केवलयच्छब्दोपादानाख्यः क्रमस्तमाह। यच्छब्दस्त्विति। अस्य भेदस्य संभावनार्थं विषयमाह। उत्तरवाक्यगतत्वेनेति। श्रीमदित्यादि। शय्या पदमैत्री तल्पं च। भुवनत्रयस्य गर्भत्वं कीर्त्तेस्तत्क्रोडीकारेण वृत्तेः। दोहदं गर्भिणीमनोरथस्तेन यः पाण्डुभावः पाण्डुता तामित्यर्थः। एवं यच्छब्दस्य पूर्ववाक्यगतत्वेनाप्यार्थे भेदान्तरमस्तु तथा च योऽसावि-

---

१ दत्तदृष्ट° D. २ तत्र M. ३ °गतस्य तच्छ° T. ४ °शब्दोपादानं G. ५ वहति D. ६ °दर्शनादौ D. ७ इत्यर्थः K. ८ नुभूतार्थपरामर्शि° D. ९ °करणावृत्तेः D.

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः ।

यथा

यत्र द्वीपस्तुषारक्षितिभृदुडुगणो मौक्तिकानां निकायः
  शैवालं व्योम शङ्खः कुमुदकुलगुरुर्धाम सान्ध्यं प्रवालः[1] ।
यूथं दिक्कुञ्जराणां करिमकरकुलं किं च कृष्णः कृपाण-
  स्त्वत्कीर्तिक्षीरवार्द्धिः[2] स जयति जगति श्रीनृसिंह क्षितीन्द्र ॥

इह स जयतीति यदि न क्रियेत[3] तदा यच्छब्दस्य साकाङ्क्षत्वम् ।

यासामम्बुधिरालवालवलयं चक्राचलेन्द्रो वृतिः[4]
  कुल्याः सह्यकलिन्दविन्ध्यतनया मुख्या महानिम्नगाः ।
मेरुः संश्रयभूरुहो मधुकरालापाः कवीनां गिर-
  स्ताः प्रीतिं जगतां नृसिंह दधाति[5] त्वत्कीर्तयो वीरुधः ॥

अत्र ताः प्रीतिमिति यदि न क्रियेत[6] तदा यच्छब्दसाकाङ्क्षत्वम्[7] ॥

क्वचित्पुनरुपात्तवस्तुविषयतयोपकल्पितयोरुभयोरपि सामर्थ्यादाक्षेपः ।

यथा

न भवसि कथंकारं श्लाघ्यः कलिङ्गपुरन्दर
  स्मर इति वरारोहाः साक्षान्मुकुन्द इतीन्दिरा ।
सुरतरुरिति त्वां सेवन्ते निरन्तरमर्थिनो
  भरतमुनिरित्यार्यास्तौर्यत्रयीनिपुणा अपि ॥

---

स्यादिमयोगोपपत्तिरित्याद्यङ्क्य तन्न संभवतीत्याह । प्रागुपात्तस्त्विति ॥

अथोभयानुपादानाख्यस्तृतीयो भेद उद्दिष्टस्तमाह । क्वचित् पुनरिति । यत्तदोरनुपादानेऽपि तद्विषयोपादानसामर्थ्यादेव तल्लाभ इत्यर्थः । उदाहरति नेति ।

---

१ प्रवालम् C. २ °क्षीरसिन्धुः C., G., M. ३ क्रियते T., M. ४ धृतिः D. ५ ददाति T., C. ६ क्रियते T., C. ७ यच्छब्दस्य G.

अत्र ततः[1] कथं न श्लाघ्यो भवसि यतस्त्वां सेवन्त इति । एवं[2] तु योऽसावित्यत्र तच्छब्दोपादानं[3] विना साकाङ्क्षत्वम् । असाविति तच्छब्दार्थ एवेति यद्यभिसंधिस्तत्र[4] बन्धुरम् ।

कविकुवलयप्रालेयांशुर्जगत्त्रयपावनै-
भवसि न गुणैः कस्य श्लाघ्यः कलिङ्गपुरन्दर ।
हिमरुचिरसौ कीर्त्या यस्य प्रकामपराजितः
स्मरहरशिरःस्रोतस्विन्यां निमज्जति लज्जितः ॥

अत्रादःशब्दस्य तच्छब्दार्थप्रतीतिपथानधिरोहात् । अत्र तच्छब्दार्थप्रतीतिपद्धतिमध्यास्त एवेति यदि यौष्माकीणमाशयमधिवसति तदा

---

इह यत्तदोरर्थसिद्धिं व्यनक्ति । अत्रेति । इतिशब्दः प्रकारवचनः । इत्येवं यत्तदोरर्थसिद्धेराधारोऽयमुपक्रमोपसंहारक्रम इत्यर्थः । अस्तु योऽसावित्यत्र किमायातं तत्राह । एवं त्विति । उक्तरीत्यास्य भेदस्य उक्तसकलभेदबहिर्भावादित्यर्थः । तर्हि यः ख्यातोऽसौ विजयत इत्यदःशब्दस्यैव विध्यन्वयेन तच्छब्दार्थतेति शङ्कते । असाविति । नैतद्युक्तम् । अदःशब्दश्रवणे तच्छब्दार्थप्रतीत्यनुदयादित्युदाहरणेन परिहरति । तन्नेत्यादिना । अदःशब्दस्येति । हिमरुचिरसावित्यस्येत्यर्थः । नन्वत्रादःशब्दात्तच्छब्दार्थ एव न प्रतीयत इति शङ्कते । अत्र तच्छब्दार्थेति । अदःशब्द इति शेषः । यौष्माकीणं युष्मदीयम् । "युष्मदस्मदोरन्यतरस्यां खञ्च" इति खञ्प्रत्ययः । "तस्मिन्नणि च युष्माकास्माकौ" इति युष्माकादेशः । "अट्कुप्वाङ्——" इत्यादिना णत्वम् । आशयमधिवसति । आशये वसतीत्यर्थः । "उपान्वध्याङ्वसः" इति कर्मत्वम् । तदा तदसोः सहप्रयोगो न स्यादिति परिहरति । तदेति । अपि च योऽसाविति यच्छब्देन सह प्रयोगादपि

---

१ C. omits ततः. २ T., C., and G. drop तु. ३ °दानमन्तरेण T. ४ °भिहितं तत्र° G. ५ C., G., and M. drop the word प्रतीति. ६ तत्रेति D.

कति कति भुवः कोणे कोणे क्वचित् क्वचिदूर्जितै-

र्वितरणगुणैः प्राप्ताः ख्यातिं न सन्ति नराधिपाः ।

अलमधरयन्नेतानिन्दुश्रिया स्वयशःश्रिया

स जयति महीमन्दारोऽसौ नृसिंहनरेश्वरः ॥

अत्रादस्तच्छब्दयोः प्रयोगे पौनरुक्त्यं दुष्परिहरं स्यात् । किं चादःशब्दस्तच्छब्दार्थमाहेति यदुच्यते तत्तुच्छम् । तच्छब्दस्य यच्छब्दसांनिध्यमध्यासीनस्य प्रसिद्धपरामर्शित्वात् ।

यथा

यत्तदुत्तीर्णमर्यादं नरसिंह नभस्तलम् ।

कीर्तेस्तव तदप्यासीत् कस्तुरीतिलकं मुखे ॥

अत्र यत्तत्तदपीत्युक्तम्

यथा वा ।

यत्तद्वैरिवसुन्धरेशरमणीताटङ्कलीलायित-

स्तेयारम्भनिरङ्कुशं तव धनुस्तत् केन न श्लाघ्यते ।

मौर्वीचुम्बितकोटिना जलनिधिव्यालोलकाञ्चीगुणा

जाता येन नृसिंह देव समरे सभ्रूविलासा मही ॥

---

नादसस्तच्छब्दार्थत्वमित्याशयेनाह । किं चेति । तच्छब्दस्याप्येवं किमु वाच्यमन्येषामित्यपिशब्दार्थः । एवं यच्छब्दयोगिनस्तच्छब्दस्य प्रसिद्धिमात्रपरत्वमुदाहृत्या-

---

१ ख्यातीर्न T. २ अरमधरय° D. ३ नृसिंहमहीश्वरः G.; नृसिंहमहेश्वरः ४ प्रयोगपौनरुक्त्यं C., M. ५ तच्छब्दस्यापि D. ६ नभस्थलम् T., C., G., M. ७ यत्तदुत्तीर्णं तदपीत्युक्तम् C., M.; यत्तदुत्तीर्णमर्यादं तदपीत्युक्तम् G. ८ भूप T. ९ °मन्येषामपीत्यपि° K.

अत्र यत्तदित्यभिधाय तदित्यभिहितम्। एवमिदमदसावपि[1] यच्छब्दसंनिधाने प्रसिद्धिं परामृशतः। इतरथा तु प्रत्यक्षायमाणमर्थम्। तस्माद्योऽसावित्यत्र यच्छब्दसांनिध्यमध्यासीनस्यादःशब्दस्य प्रसिद्धिपरामर्शित्वात्तच्छब्दाकाङ्क्षा न विरमति। अतस्तच्छब्देन भवितव्यम्। ततश्च जगति स जयतीति पाठः परिणमयितव्यः॥

---

न्यत्राप्यतिदिशति । एवमिदमिति। एतदोऽप्युपलक्षणमेतत्। तथा च 'यदेतदस्यानुतटं विभाति' 'योऽयमश्वः पताकेयम्' 'व्रज विटपममुं ददस्व तस्यै' इत्यादि। 'य एषोऽन्तर्हृदय आकाशः' 'यदिदं किं च' 'योऽसौ तपन्नुदेति' इत्यादौ सर्वत्र लोकवेदयोः तदेतदिदमदसां यच्छब्दयोगिनां प्रसिद्धिपरत्वमेव दृष्टम्। अन्ययोत्तरवाक्येषु पुनस्तच्छब्दानुपपत्तेरित्यतिदेशार्थः। तथाप्यनङ्गीकारे बाधकमाह। इतरथेति। परमप्रकृतमुपसंहरति। तस्मादिति। ननु 'एष निष्कण्टकः पन्था यत्र संपूज्यते हरिः[2]' 'पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा' 'यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम्' 'एतद्वाग्नेः प्रियं धाम यद् घृतम्' 'अयं वाव यः पवते सोऽग्निर्नाचिकेतः' 'अमुना सह निरर्थं गच्छ योऽस्मान् द्वेष्टि' इत्यादौ लोकवेदयोरेतदिदमदसामपि तच्छब्दार्थत्वं दृश्यते कथं योऽसावित्यत्र तच्छब्दं विना साकाङ्क्षत्वं तत्राह। यच्छब्दसांनिध्यमध्यासीनस्येति । यत्र यच्छब्दस्य व्यवधानेनैषां प्रयोगस्तत्र तथास्तु। यत्र त्वव्यवधानं तत्र तेषां प्रसिद्धिपरत्वप्रतीतेर्दुर्वारत्वात् तच्छब्देन भवितव्यमित्यर्थः। एवं तच्छब्दयोगिनामप्येषां प्रसिद्धिपरत्वमेवेत्यनुसंधेयम्। 'सैषा स्थली यत्र विचिन्वता त्वाम्' 'मृदुतीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि' 'सैषा भार्गवी वारुणी विद्या' 'सा मिमामप्रशहाय' 'तदश्चन्द्रमसि कृष्णम्' इत्यादिलोकवेदप्रयोगदर्शनात्। इत्यधिमृष्टविधेयांशः॥

---

१ एवमिदमदसोरपीति K. २ हरः K.

भवति प्रक्रमभङ्गः प्रक्रान्तं यत्र भज्यते वस्तु ।

प्रक्रमस्य प्रस्तावस्य भङ्ग इति कृत्वान्वर्थाभिधानोऽयम् । उद्दे-श्यप्रतिनिर्देश्यभावः प्रक्रमस्य विषयः । उद्देश्यप्रतिनिर्देश्यभावा-भावविषयं च पौनरुक्त्यम् । अयं च प्रकृतिप्रत्ययोपसर्गविभक्तिव-चनकालकारकलिङ्गसर्वनामविशेषणपर्यायवाक्यसमासालंकारगत-त्वेन भवन्ननेकधा भवति । क्रमेण प्रत्युदाह्रियते ॥

जीयात् पार्वणरोहिणीशकिरणश्रेणीसमालिङ्गित-
क्षीराम्भोधितरङ्गलङ्घितयशोराशिः कलिङ्गेश्वरः ।
आश्चर्यं समरे निमज्य सहसा यत्खड्गधाराम्भसि
प्रोन्मज्जन्ति समन्ततः प्रतिभटाः स्वर्वाहिनीस्रोतसि ॥

---

अथ प्रक्रमभङ्गं लक्षयति । भवतीत्यादि । प्रक्रमस्य प्रक्रान्तस्य भङ्गो यस्मिन् स प्रक्रमभङ्ग इति व्याचष्टे । प्रक्रमस्येति । ननु प्रक्रान्तस्य भङ्गः प्रक्रमभङ्गोऽभङ्गे पौन-रुक्त्यं तथा चैकं संधित्सोरपरं प्रच्यवत इति न्यायापात इत्याशङ्क्योभयोर्वि-षयव्यवस्थां दर्शयति । उद्देश्येति । उद्देशो निर्देशः । निर्दिष्टस्यैव शब्दस्य प्रयो-जनवशात् पुनर्निर्देशः प्रतिनिर्देशः । तत्र सर्वथा तस्यैव शब्दस्य सर्वनाम्नो वा प्रयोगः कर्त्तव्यः । अन्यथा पर्यायप्रयोगेऽपि तदर्थप्रत्यभिज्ञातिरोधानात् प्रक्रमभङ्गः । यत्र तूद्देश्यप्रतिनिर्देश्यभावो नास्ति तत्र तस्यैव प्रयोगे पौनरुक्त्यस्यावकाश इत्य-

---

१ उद्देशं प्रतिनिर्देशः प्रक्रमस्य T., G.; उद्देश्यं प्रति प्रतिनिर्देशः प्रक्रमस्य C., M. २ साम्यः कस्य न रोहिणी° T., G., C., M. ३ °आलिङ्गितयशो° T. ४ संग्रामेषु निगत्य यस्य सहसानिस्त्रिंशधारापथ- T., G., C., M. ५ स्युन्मज्जन्ति सम° T., G., C., M.

अत्र निमज्ज्येत्यस्य स्थाने निपत्येति यद्यकरिष्यत[1] तदा प्रकृतिप्रक्रमभङ्गः समपत्स्यत ।

लोके विक्रमितुं त्रिविक्रमपदाद्दातुं सुरक्ष्मारुहा-
  ज्जाग्रीं धातुमहीश्वरात् प्रभवितुं पत्युश्च नाकौकसाम् ।
तत्तत्कीर्त्तिविकासवासितनभःसीम्नां गुणानां निधिः
  को वा वीर नृसिंह देव [2]नृपतिस्त्वामन्तरेणाधिकः ॥

अत्र दानाय कल्पद्रुमादिति पाठे प्रत्ययप्रक्रमभङ्गो भवति ।

दयायै दृक् कर्णः सरसकविसूक्ताय वदनं
  सरस्वत्यै पृथ्व्यै भुजशिखरमीशाय हृदयम् ।
इति प्रत्तास्तावत् स्वयमवयवा अप्यविरतं
  प्रदेयं किं कस्मै न तव नरसिंह क्षितिपते ॥

अत्र प्रत्ता इत्यभिधाय प्रदेयमित्यभिहितम् । इतरथोपसर्ग[4]प्रक्रमभङ्गप्रसङ्गः ।

---

नयोर्विषयाविभाग इत्यर्थः । अत्र निमज्ज्येति । लोके निमग्नस्यैवोन्मज्जनमिति स्थितिः । निपत्येत्युक्ते शब्दभेदमहिम्ना निमज्जनादर्थान्तरप्रतीतेरुक्तस्थितिभङ्गाख्यं दोषः । तत्र मस्जिप्रकृतेरेवोच वृत्त्यपेक्षणात्तदभावे प्रकृतिप्रक्रमभङ्ग इत्यर्थः । एवमुत्तरत्रापि सर्वत्रोह्यम् । लोक इत्यादि । पदादिस्त्यादौ सर्वत्र "पञ्चमी विभक्ते" इति पञ्चमी । प्रत्ययप्रक्रमभङ्ग इति । दानायेत्युक्ते तुमुन्प्रत्ययस्य प्रक्रान्तस्य भग्नत्वादित्यर्थः । प्रत्ता इति । प्रपूर्वाद्ददातेः कर्मणि क्तः । "अच उपसर्गात्तः"

---

१ °करिष्यत्तदा C., G., M. २ भवति त्वा° M., G., C., T. ३ भवति D. ४ °सर्गक्रमभङ्ग° D. ५ K. omits अत्र.

मदान्धास्त्वन्नागाः प्रतिभटपुरं वीर सहसा
घनाक्रीडं क्रीडाशिखरिकमनीयं जगृहिरे ।
ददुस्तेभ्यः कल्पद्रुमपरिगतोद्यानसुभगं-
भविष्णुभ्राजिष्णुत्रिदशगिरिगीर्वाणनगरम् ॥

[1]अदुरिति पाठे त्वत्र विभक्तिप्रक्रमभङ्गः[2] ।

वीर नृसिंह कवित्वं चम्पकसौरभ्यमिन्दु[3]सौन्दर्यम् ।
गङ्गाजलमाधुर्यं कस्य न भुवनेषु सर्वदा मान्यम् ॥

अत्रैकवचनं निर्व्यूढमिति[4] न वचनप्रक्रमभङ्गः[5] ।

सूत्रामा गोत्रभेदं रचयति भजते दृष्टिवैषम्यमीशो
हीनं कृष्णोऽधिशेते क्षिपति[6] सुमनसो मार्गणान् पुष्पचापः[7] ।
इन्दुर्दोषाकरत्वं[10] कलयति कुमुदं मन्दयत्यंशुमाली
पश्यामस्ते नृसिंह क्षितितलतिलक क्वापि नैवोपमानम्[8] ॥

---

इति ह्रस्वकारादेशः । इतरथेति । [9]नेयमित्येवोक्त इत्यर्थः । मदान्धा इति । न्यूनग्रहणेनाधिकदानान्मदान्धत्वमिति भावः । अत एवाधिकपरिवृत्तिरलंकारः । घनाक्रीडं निरन्तरोद्यानम् । असुभगं सुभगं भवतीति सुभगंभविष्णुः । "कर्त्तरि भुवः खिष्णुच्खुकञौ" इति सुभगोपपदात् भवतेः खिष्णुच्प्रत्ययः । भ्राजनशीलो भ्राजिष्णुः । "भुवश्च" इति चकारादिष्णुच् । स त्रिदशगिरिर्यस्मिन् तथोक्तम् । अदुरिति पाठे त्विति । लुङ्विभक्त्युपादाने जगृहिरे इति लिड्विभक्तिप्रक्रमभङ्ग इति भावः । सूत्रामेत्यादि । गोत्रभेदं पर्वतभेदं कुलभेदं च । दृष्टिवैषम्यं त्रिनेत्रत्वमतुल्यदर्शित्वं च । अहीनमहिपातिं हीनं क्षुद्रं च । सुमनसः पुष्पाणि विदुषश्च । दोषाकरत्वं निशाकरत्वं दोषाणामाकरत्वं च । कुमुदं कैरवं कौ भुवो[11] मुदं

---

१ अत्रादुरिति पाठे विभक्ति° C., M. २ °भङ्गप्रसङ्गः T., C., G., M. ३ चम्पकसौभाग्यमिन्दु° T. ४ निर्व्यूढं न वचन° C., M. ५ °भङ्गप्रसङ्गः T. ६ क्षिपाति सुमनोमार्गणान् G. ७ पुष्पबाण. T., G. ८ इत्यादि K. ९ °विभक्तेः प्रक्रमभङ्गादिति D. १० चन्द्रत्वं K. ११ °भूमेर्मुदं K.

अत्र वर्त्तमानस्य कालस्य प्रक्रान्तस्य निर्वाहाभ्र कालप्रक्रमभङ्गः ।

तव क्रियन्ते करुणाकटाक्षैः
श्रियः कवीनां नरसिंह देव ।
ताभिर्विकासा मनसः पुनस्तैः
सूक्तानि तैस्त्वद्गुणवर्णनानि ॥

[1]इहानुक्तस्य कर्त्तुः प्रक्रान्तस्य निर्वहणाभ्र कारकप्रक्रमभ[2]ङ्गः ।

बिम्बं चन्द्रमसः कलङ्कमयते धत्ते विकारं पयः
कुन्दं म्लानिमुपैति किं न[3] कुरुते मैत्रीं मृणालं जलैः ।
मालिन्यं भजते हरित्करिमदस्यन्देन मन्दाकिनी-
स्रोतो वीर नृसिंह भूप भवतः केनोपमेयं यशः ॥

अत्र नपुंसकमेव[4] प्रतिकर्तृगतत्वेनोपनिबद्धमिति न लिङ्गप्रक्रमभङ्गप्रसङ्गः ।

लोकेऽस्मिन्नरसिंह[5]देवनृपतिर्दाता न कल्पद्रुम-
स्तेजस्वी स न पद्मिनीसहचरः कान्तः स नो चन्द्रमाः ।
गम्भीरः स न वाहिनीपरिवृढस्तुङ्गः स नो मन्दरः
शिल्पज्ञः स न पद्मभूः किमपरं वाग्मी स नो वाक्पतिः ॥

अत्र तच्छब्देनैव[6] प्रक्रान्तेन निर्वाहा[7]भ्रास्त्येव सर्वनामप्रक्रमभ[8]ङ्गः ।

प्रागासीन्मकरन्दपिच्छि[9]लद[10]ले पद्मस्य गर्भे ततः
शौरेः कौस्तुभकान्तिपूरसुभगाभोगे भुजाभ्यन्तरे ।

---

च । अनुक्तस्य कर्त्तुरिति । कटाक्षैरित्याद्यनभिहितकर्त्तुरित्यर्थः । तत्र

---

१ इत्यनुक्तकर्त्तुः G. २ भङ्गप्रसङ्गः D. ३ च कुरुते C., G. ४ T., G., C., M. drop एव. ५ °सिंहेत्यादि । अत्र T. ६ D. drops एव. ७ निर्वाहो नास्त्येव D. ८ °भङ्गप्रसङ्गः T., G., C., M. ९ °पिच्छल° D., C., M., G. १० °तले C., M., G.

आवासस्तव लक्ष्मि संप्रति पुनर्निर्व्याजमूर्च्छत्कृपा-
स्रोतःशीतलिते नृसिंहवसुधानाथस्य नेत्राञ्चले ॥

अत्र सविशेषणस्य विशेष्यस्याभिधातुं प्रक्रान्तस्य निर्वाहाभ्र-विशेषणप्रक्रमभङ्गः ।

[1]किमेतासामन्तःपुरपरिसरे केवलमभू-
दसूर्यंपश्यत्वं [2]त्वदरिसुदृशामुत्कलपते ।
इदानीम[3]प्येता गिरिगहनगेहप्रणयिनी-
र[4]सूर्यंपश्यत्वं सततमुपबध्नाति किमिदम् ॥

अत्र द्वितीयस्यासूर्यंपश्यत्वमिति[5] शब्दस्य स्थाने 'अनर्कालोकित्वम्' इति यदि क्रि[6]यते तदा पर्यायप्रक्रमभङ्[7]गः ।

संत्यज्य पुष्पसमयं [8]कुसुमाभिवृद्धिं
ज्योत्स्नाविजृम्भितमपास्य तुषारभानुम् ।
मुक्ताफलोल्लसितमम्बुनिधिं विहाय
कीर्त्तिस्तव स्फुरति धीर [9]कलिङ्गनाथ ॥

---

"कर्तृकरणयोस्तृतीया" इति तृतीयाविधानात् । किमेतासामि[10]ति । सूर्यं न पश्यन्तीत्यसूर्यंपश्या राजदारस्वास्तथा गुप्ता इत्यर्थः । असमर्थसमासोऽयम् । नञो दृशिना सह संबन्धात् । पूर्व[11]मैश्वर्यादेवासूर्यंपश्यत्वं संप्रति तु भयादिति भावः । इतः परमे[12]तेषशेषः स्पष्टार्थः ॥

---

१ वसन्तीनामन्तःपुरभवनगर्भे चिरमभू-T., C., G., M. २ त्वदहितमहीपालसुदृशाम् T., C., G., M. ३ °मप्यासीद्विहितवसतीनां गिरिगुहा-T., C., G., M. ४ स्वसूर्यंपश्यत्वं निशमय नृसिंह क्षितिपते T., C., G., M. ५° मित्यस्य शब्द° D. ६ क्रियेत C., M., G. ७ °भङ्गप्रसङ्गः D. ८ कुसुमानुविद्धं T. ९ नृसिंह देव C., G. १० मित्यादि K. ११ मैश्वर्या-दसूर्यं° K. १२ इतः परं स्पष्टार्थम् D.

अत्र वाक्येन वक्तुं प्रक्रान्तं निर्वाहं प्रापितमिति[1] न वाक्यप्रक्रमभङ्गः[2]।

काश्मीरपांसु[3]रुचिरांशुकचारुहारै-
र्या प्राग्बभौ कुचतटी रिपुसुन्दरीणाम्[4]।
सैवाद्य भाति कुपिते त्वयि वीर भूभृद्-
धातुच्छटातरुणपल्लवरक्तसूत्रैः॥

अत्र समासस्य निर्व्यूढत्वान्न समासप्रक्रमभङ्गः[5]।

त्यागस्तावत् सुरतरुयशःकौमुदीकालमेघः
शौर्यं कुन्तीतनयचरित[6]श्रुत्यनध्यायपर्व।
कान्तिः पुष्पायुधवपुरहंभावरुद्रावलोकः
कस्ते वक्तुं प्रभवति गुणान् श्रीनृसिंह क्षितीन्द्र॥

अत्र रूपकस्य निर्वाहान्नालंकारप्रक्रमभङ्गः[7]।

अत्र प्रकृतिप्रत्ययपर्यायादीनां प्रक्रान्तानामर्थभेदाभावेऽप्येकरसायाः प्रतीतेः परिस्खलनं प्रतिभातीति न शब्दभेदमाद्रियन्ते कवयः॥

**यदवाच्यस्य वचः स्यादवाच्यवचनं तु तद्गदितम्॥ ३॥**

ननु प्रकृत्यादिप्रक्रमभङ्गेऽपि अर्थप्रतीतेरविघातात् कोऽयं निर्बन्धो यत् प्रक्रान्तस्य न भङ्गः कार्य इत्याशङ्क्याह। अत्र प्रकृतिप्रत्ययादीनामिति। एकरसाया एकरूपाया इत्यर्थः॥

अथावाच्यवचनं नाम दोषान्तरं लक्षयति। यदवाच्यस्येति। उदाहरति।

१ प्राप्तमपि C., M. २ °भङ्गप्रसङ्गः T., C., G., M. ३ °पांशु° D. ४ सुरसुन्दरीणाम् D. ५ °भङ्गप्रसङ्गः D. ६ कुन्तीतनुजचरित° T. ७ °भङ्गप्रसङ्गः T., C., G., M.

निःशेषनिर्जरनमस्कृतपादपद्मं
यं नीलपूर्वमिह लोहितमामनन्ति ।
देवः स एष भवतः शशिखण्डमौलिः
श्रेयः[1] श्रियं दिशतु वीर नृसिंह देव[2] ।

इह नीललोहित इति प्रसिद्धायाः संज्ञाया विशेषणविशेष्यभावेनाभिधानमनुचितम् । विरोधात् । संज्ञायाः संज्ञिगतत्वेनैव विशेषणत्वमुचितं न स्वगतत्वेन । किं चायमभिधानानुकारः । स[3] पुनरुभयप्रकारः शाब्दार्थत्वभेदात्[4] । तत्र शाब्दो यत्रेतिनावच्छेदः क्रियते । यथात्रैव 'यं नीललोहित इति स्फुटमामनन्ति' इति पाठे । आर्थो[5] यत्रेतिना नावच्छेदः । यथात्रैव 'यं नीललोहितमिति स्फुट-

निःशेषेति[6] । नीलपूर्वं लोहितं नीललोहितमित्यर्थः । अत्र शेषांशं दर्शयति । इहेति । नीलपूर्वं लोहितमिति विशेषणविशेष्यभावेन निर्देशो न युक्त इत्यर्थः । तत्र हेतुमाह । विरोधादिति । को विरोधस्तत्राह[7] । संज्ञाया इति । संज्ञा हि संज्ञिनं[8] विशिषती तस्यैव विशेषणं स्यात् न तु स्वस्य । स्वस्यैव स्वविशेषकत्वे आत्माश्रयप्रसङ्गात् । न ह्युत्पलनीलिमापि नीलिम्ना व्यावर्त्यते । ननु नात्र संज्ञायाः संज्ञाविशेषणत्वमुच्यते किं तु तदेकदेशस्यैकदेशान्तरविशेषणत्वमतो नात्माश्रय इति चेत् सत्यं किं तु नीलपूर्वो लोहित इत्युक्ते नीलशब्दपूर्वो लोहितशब्द इत्युक्तं स्यात् । अर्थस्य तत्पूर्वकत्वासंभवात् । तथासंगतत्वादवाच्यमेवोच्यत इत्यवाच्यवचनमेवेदं सिद्धम् । अत्रैव युक्त्यन्तरमाह । किं चेति । अभिधानानुकारो नामधेयानुकरणम् । इतिनावच्छेदः क्रियते इति शब्देनाभिधीयत इत्यर्थः । एवं नावच्छेदः क्रियत इत्यत्रापि नाभिधीयत इत्यर्थः । एवं च पूर्वत्र प्रथमा उत्तरत्र द्वितीया । अत एव 'निपातेनाप्यभिहिते[9] कर्मणि न कर्मविभक्तिः' इति वामनः ।

१ श्रेयः परं T. २ भूप D. ३ स पुनः शब्दार्थभेदादुभयप्रकारः G. ४ शाब्दत्वार्थत्वभेदात् D.; शब्दार्थभेदात् C., M. ५ तत्रार्थो यत्र T., C., M. ६ °षेत्यादि K. ७ विरोधस्तमाह D. ८ संज्ञिनं विशेषयति तस्यैव विशेषणत्वात् D. ९ K. drops अपि.

मामनन्ति ' इति पाठे । प्रकृते तावदभिधानं नीललोहित इति न तु नीलपूर्वो लोहित इति । अतोऽभिधानेतरानुकरणस्यावाच्यस्य वचनं दोषः ।

चमत्कारं गौरीसहचरतनुस्पर्धि न कथं
विधत्ते भूयांसं भुवि तव कलिङ्गेश्वर यशः ।
यद[1]न्तः कालिन्दीतटरुहतमालद्युति नभः
सुधाभानुक्रोडस्थितहरिणकेलिं कलयति ॥

अत्र तनुतटरुहस्थितपदान्यवाच्यानि । तस्मात् परिस्पर्धिकालिन्दीपरिसरक्रोडीकृतेति पठनीयम् ॥

**का[2]रणाधारसंबन्धैर्व्यभिचारो न दृश्यते ।**
**यत्र तस्य प्रयोगे स्यादवाच्यवचनं यथा ॥ ४ ॥**

य[3]था

हृदा हृष्यति जानाति ध्यायत्यध्येति खिद्यते ।
विलोकयति नेत्रेण श्रवणेन शृणोति च ॥
चित्रं चेतसि चिन्तेर्ष्याहर्षेच्छाक्रोधविस्मयाः ।
म[4]नसि प्रमदो[5]त्साहभय[6]ज्वरम[7]दात्ययाः ॥

---

अस्त्वयमपि नामधेयानुकार एवेत्याशङ्क्याह । प्रकृते तावदिति । फलितमाह । अत इति । अस्यैव प्रकारान्तरमाह । चमत्कारमित्यादि । अत्रावाच्यांशं दर्शयति । अत्रेति । तदवचनेऽपि तदर्थस्य सामर्थ्यलब्धत्वादित्यर्थः ॥

पुनर्भङ्ग्यन्तरमाह । कारणेत्यादि । कारणाव्यभिचारमुदाहरति । हृदेत्यादि ।

---

१ तदेतत् कालिन्दी° D. २ करणा T., C., G. ३ T. and C. drop यथा. ४ मनसः D, C., G., M. ५ प्रमदोद्गाधमदज्वरभयत्रपाः C., M. ६ °मदज्वर° T., G. ७ °भयात्ययाः T., G.

दिक्कुक्षिंभरिभिः कठोरकरभीकर्णप्रभाभासुरै-
श्चित्रं वीर नृसिंह भूप तुरगोत्कीर्णैः परागोत्करैः।
त्वत्सेनाविजयोत्सवव्यतिकरे व्याप्तं वियन्मण्डलं
हम्मीरक्षितिपालचेतसि परं मालिन्यमुन्मीलितम्॥

अत्र तुरगखुरोत्कीर्णैरिति नोक्तम्। उत्किरणस्य खुरकरणत्वे व्यभिचाराभावात्।

दारिद्र्यस्य दयालुत्वं नृसिंह नृप किं स्तुवे।
यन्मत्वापि निजं नाशमस्माभिस्त्वामदर्शयत्॥

अत्र दृशेः परस्मैपदे प्रयोज्यकर्तुः कर्मत्वविधानादस्माभिरित्यस्यावाच्यस्य वचनं दोषः। 'मां भवन्तमदर्शयत्' इति पठनीयम्।

---

आधाराव्यभिचारमुदाहरति। चित्रमित्यादि। संबन्धाव्यभिचारमुदाहरति। दिगित्यादि। कुक्षीन् बिभ्रति पूरयन्तीति कुक्षिंभरयस्तैः। "फलेग्रहिरात्मंभरिश्च" इति चकारान्निपातः। अत्र मालिन्यपरागव्याप्त्योर्वैयधिकरण्यादसंगत्यलंकारः। उत्किरणस्येति। तुरगकर्तृकस्येति शेषः। भिदान्तरमाह। दारिद्र्यस्येति। मत्वापि निश्चित्यापीत्यर्थः। यः स्वोच्छेदमविगणय्य परदुःखप्रहाणे प्रवर्तते तस्य दयां कः परिच्छेत्स्यतीत्यर्थः। तथा चैतद्दर्शिनामर्थिनां सद्यो दारिद्र्यविमुक्तिरिति भावः। अथाप्यवाच्यांशमुदाहरति। अत्र दृशेरिति। ण्यन्तस्येति शेषः। प्रयोज्यकर्तुरिति। अणि कर्तुरित्यर्थः। कर्मत्वविधानादिति। दृशेर्बुद्ध्यर्थत्वात् "गतिबुद्धि——" इत्यादिना परस्मैपदे नित्यमणि कर्तुर्ण्यन्ते कर्मत्वविधानादित्यर्थः। आत्मनेपदे तु "अभिवादिदृशोरात्मनेपद उपसंख्यानम्" इति कर्मसंज्ञाविकल्पः। अत एव 'दृशेर्बुद्ध्यर्थत्वान्नित्यप्राप्तौ पक्षे निवर्त्यत' इति कैयटः। अस्माभिरि-

---

१ करिणी॰ G. २ ॰कण्ठप्रभा॰ T., G. ३ ॰विजये जयव्यतिकरे T. ४ ॰मुन्मीलति C., M. ५ ॰करणव्यभिचारा॰ T. ६ ॰प्रयोज्यस्य कर्तुः D., T., C., G. ७ वक्तव्यम् G. ८ दिगिति D. ९ ॰परागकार्यकारणयोर्वैयधिकरण्या॰ D.

अस्मिन् पुनः पाठे किं स्तुम इत्येकत्वेनात्मानं निर्दिश्यास्माभिरिति बहुत्वेन निर्देशाद्वचनप्रक्रमभङ्गोऽपि[1] नास्ति।

**यद्वाच्यस्यावचनं वाच्यावचनं तदुच्यते चतुरैः।**

निजचरणसंविध[2]निपतनपरमपि पुर एव वीक्ष्य हम्मीरम्।
राजन् नृसिंह समरे तिष्ठति तूष्णीमसौ खड्गः॥

इह निजेत्यनेन नृसिंहनृपति[3]संबन्धे चरणयोरभिमते खड्गसंबन्धप्रतीतिरित्येतन्न वाच्यम्। अभवन्मतयोगमितीदं मतान्तरे प्रसिद्धम्। तवेति समुचितः पाठः। अन्यस्यालंकारस्य विषयेऽलंकारान्तरोपनिबन्धो यत्र तत्रापि वाच्यावचनमेवं[4]॥

---

त्यवाच्यस्येति। उक्तरीत्या कर्तृत्वेनाप्रयोक्तव्यस्येत्यर्थः। पाठान्तरे लाभान्तरमप्याह। अस्मिन् पुनरिति॥

एवमवाच्यवचनमुक्त्वा तद्विपर्ययाद्वाच्यावचनं नाम दोषान्तरमाह। यद्वाच्यस्येति। उदाहरति। निजेत्यादि। पुर एव वीक्ष्यापीत्यपेरन्वयः। तूष्णीं तिष्ठतीति। शरणागतवधनिषेधादिति भावः। एतेनास्य कारुणिकत्वं व्यज्यते। अत्र कवेः प्रमादाल्लेखकदोषाद्वा प्रथमपादो मात्राहीनः। अतो निपतनेति सोपसर्गः पाठः कार्यः। अत्र चरणयोर्नृपे संबन्धो वाच्यः स नोक्त इति वाच्यावचनमेतदित्याह। इहेति। अभवन्नविद्यमानो मतयोग इष्टसंबन्धो यस्मिन् सोऽभवन्मतयोगः। इष्टश्चेह चरणयोर्नृपयोगः स नास्तीत्यन्वर्थेयं संज्ञा। विषयान्तरेऽप्यमुं दोषं संचारयति। अन्यस्येति। 'मृगीपरिभवो व्योढ्यामित्ययं हि त्वया कृतम्'[5] इत्यादावेकवाक्यतया निदर्शनाविषये दृष्टान्तोक्तौ तदवचनाद्वाच्यावचनम्। न चेदमवाच्यवचनमेवेति वाच्यम्। दुष्टस्योक्तावेवावाच्यवचनं देवपूर्वं गिरिमित्यादौ। अन्यथा वाच्यावचनमेव पुरः स्फूर्तिकत्वादुद्भाव्यम्। एवं 'स्मरामि वानीरगृहेषु सुप्तम्'[6] इत्यादौ सादृश्यप्रतीतिव्यतिरिक्तनिमित्तस्मृतावलंकारान्तरविषये स्मरणोक्तावपि संभवतोऽलंकारान्तरस्यावचनाद्वाच्यावचनमेवोद्भाव्यमित्याद्यूह्यम्। वाच्यावचनम्॥

---

१ °भङ्गप्रसङ्गोऽपि T., O. २ °संविधपतन° D. ३ °नृपसंबन्धे C., G. ४ °मेव वाच्यम् D.
५ व्याघ्र्यां मृग्यत्वे हि त्वया कृतम् D. ६ सुप्तम् D.

**दोषोऽर्थपौनरुक्त्यं प्ररूढमभिधीयते बहुधा॥ ५ ॥**

यथावभासनं तथैव[1]ार्थस्य विश्रान्तिः प्ररूढत्वम् । शब्दपौनरुक्त्यस्य न दोषत्वम् । तस्यानुप्रासाद्यलंकारत्वेनाङ्गीकारात् । **बहुधा** प्रकृत्यादिविषयत्वात् ।

तत्र प्रकृतिविषयत्वं यथा

करटविलुठद्दानस्रोतस्विनीसुरभीकृत-
त्रिभुवनपुटप्रेङ्खत्पुष्पन्धयध्वनिडिण्डिमः ।
सभयकुतुकं दृष्टः पौरैः कलिङ्गपुरन्दर
प्रथयातितरां कस्यानन्दं न ते गजतागणः ॥

अत्र गजतेति समूहार्थायाः प्रकृतेर्गणस्य च पौनरुक्त्यम् । 'करिणां गणः' इति पाठः परिणमयितव्यः ।

प्रत्ययविषयं यथा

अर्धमङ्गमुपगूढ[2]वल्लभं
बिभ्रदर्धमपि भस्मभासुरम् ।

---

अथ पौनरुक्त्यं लक्षयति । दोष इत्यादि[3] । किमिदं प्ररूढत्वमत आह । यथेति । अन्यथासिद्धत्वं प्ररूढत्वमित्यर्थः । अर्थग्रहणस्य प्रयोजनमाह । शब्देति । कुतो बहुधात्वं तत्राह । प्रकृतीति । करटे[4]ति । पुष्पाणि धयन्तीति पुष्पन्धयाः पुष्पलिहो मधुपा इत्यर्थः । "नाडीमुष्ट्योश्च" इति चकारादनुक्तसमुच्चयार्थाद्धेटः पुष्पोपपदात् खश्प्रत्यये मुमागमः । गजानां समूहो गजता । 'गजाच्चेति वक्तव्यम्' इति समूहार्थे तल्प्रत्ययः । प्रकृतेः सुप्प्रत्ययप्रकृतेरित्यर्थः । **प्रत्ययविषयं** य[5]थेति । इहान्ध्रदेशीयेषु कोशेषु प्राचीनः प्राक्त[6]नराजनामाङ्कित उदाहरणश्लोकः प्रमादाद् भ्रष्टः । **अर्धमङ्ग**मित्यादिरिन्दुशेखरविषयस्तु केनापि प्रक्षिप्तः । पौन-

---

१ तथैव विश्रान्तिः T. २ °मुपनम्रवल्लभं T. ३ इति D. ४ °टेत्यादि K. ५ °विषयमिति D. ६ प्रकृतिनामाङ्कित उदा° K.

एक एव सुहृदिन्दुशेखरो
रागिणामपि विरागिणामपि ॥

अत्र विरागिणामिति मत्वर्थीयस्य पौनरुक्त्यम् । बहुव्रीहिणैव तदर्थावगतेः । कर्मधारयगर्भितान्मत्वर्थीयाद्बहुव्रीहिरेव वरमपरथा प्रक्रियागौरवापत्तेः । भूमनिन्दार्थानामप्यस्त्यर्थानुयायित्वान्न पौनरुक्त्यपरिहारः शक्यक्रियः ।

उभयविषयं यथा

दुर्वारैस्ते यशोभिः सकलमपि मम ध्वान्तमाचान्तमेतत्
तत् किं कुर्यामिदानीमिति तव गदितुं श्रीनृसिंह क्षितीन्द्र ।
लोकालोकेन पाथोधरनिवहनिभाः प्रेषिताः पश्य भान्ति
प्राप्ताः प्रत्यन्तपृथ्वीभृत इव गजता द्वारदेशोपकण्ठम् ॥

रुक्त्यांशं दर्शयति । अत्रेति । पुनरुक्तत्वे हेतुमाह । बहुव्रीहिणैवेति । ननु माभूदिह बहुव्रीहिः कर्मधारयादयं मत्वर्थीय इत्याशङ्क्याह । कर्मधारयगर्भितादित्यादि । मत्वर्थीयादिति पाठः । बहुव्रीहिरिति तु प्रामादिकोपात्तः । बहुव्रीहिरेव वरमिति । न कर्मधारयान्मत्वर्थीय इति निषेधादिति भावः । सर्वधनीत्यादौ त्विनन्तो बहुव्रीहिरिति स्थितगतिः । विपक्षे बाधकमाह । अपरथेति । तर्ह्यस्त्यर्थे बहुव्रीहिर्भूमाद्यर्थे मत्वर्थीय इति न पौनरुक्त्यमित्याशङ्क्याह । भूमेति । भूमादिष्वपि "तदस्यास्त्यस्मिन्—" इत्यस्त्यर्थ एव मत्वर्थीयविधानाद्बहुव्रीहेरप्यस्त्यर्थत्वाद् दुर्वारं पौनरुक्त्यमित्यर्थः । प्रकृतिप्रत्ययोभयपौनरुक्त्यमुदाहरति । दुर्वारैरिति[12] । किं कुर्यामिति । किं प्रियं कुर्यामित्यर्थः । गदितुं प्रियं वक्तुमित्यर्थः ।

१ विरागिणामपीति मत्वर्थीय° T. २ °गर्भगतान्मत्वर्थीया° M.; गर्भत्वान्मत्व° D. ३ D. drops अपि. ४ °विषयो T. ५ °स्तैर्यशोभिः D. ६ °कण्ठे D, O., G., M. ७ पौनरुक्त्यं D. ८ तत्र हेतुमाह K. ९ कर्मधारयेति D. १० °दाविनन्तो बहुव्रीहिरिति तु D. ११ स्थितिगति· K. १२ °रित्यादि K.

अत्र समूहार्थायाः प्रकृतेर्बहुवचनस्य च पौनरुक्त्यम्। 'प्रासाः प्रत्यन्तशैला इव मदकरिणः' इति पाठः परिणमयितव्यः।

पदपौनरुक्त्यं[1] यथा।[4]

देवस्यास्य चिराय मत्प्रभुकुलाराध्यस्य[2] गौरीपते-
रेषा नैव कदाप्यनुग्रहकथालक्ष्मीधुरामर्हति।
इत्यालोच्य रुषेव केतकदलद्रोणीमियं[3] निर्वृति
स्वैरं वीर नृसिंह देव भवतः कीर्त्तिर्जगज्जाङ्घिकी॥

अत्रालोचनार्थस्य पौनरुक्त्यम्। इतिशब्देनैव तदवगतेः।

प्रत्युदाहरणं यथा

पलायनपरस्य मे नियतमन्तरायो महा-
नियं भवति दुर्वहा वसुमती भुजालम्बिनी।
इतीव विरहय्य तामजनि जैत्रयात्रोत्सवे
विरोधिनृपतिर्लघुस्तव नृसिंह पृथ्वीपते॥

अत्रालोच्येति न कृतम्। यां क्रियां प्रत्यसाधारण्येन प्रसिद्धो यः कर्त्ता तस्योपादाने सा न वाच्या। अत एव

देवस्येति[5]। अनुग्रहकथालक्ष्मीधुरामनुग्रहातिशयमित्यर्थः। "ऋक्पुर्——" इत्यादिना समासान्तोऽप्प्रत्ययः। नार्हति न भजति। 'नाक्षतैः पूजयेद्विष्णुं न केतक्या महेश्वरम्' इति निषेधस्मरणादिति भावः। जङ्घया चरतीति जाङ्घिकी। "चरति" इति ठक्। "टिड्ढाणञ्——" इत्यादिना ङीप्। विरहय्येति। त्यक्त्वेत्यर्थः। "ल्यपि लघुपूर्वात्" इत्ययादेशः। सा न वाच्येति। यस्यां क्रियायां यः कर्त्ता प्रतिनियतस्तदुक्त्यैव तस्या अपि[7] गम्यमानत्वात् सा क्रिया पृथङ् न वाच्या। उक्तौ[8]

१ अर्थपौनरुक्त्यं T. २ °प्रभुक्रमाराध्य° C. ३ °दलश्रेणीमियं D., G. ४ D., G., and M. omit यथा. ५ °स्येत्यादि K. ६ सदाशिव° K. ७ K. drops अपि. ८ उक्ता K.

उत्कण्ठाभारताम्यत्कुवलयनयनामानसाम्भोजभानु-
श्छिन्तासंतापमीलत्कविकुलकुमुदव्यूहनक्षत्रनाथः ।
ईर्ष्यासंवर्धमानप्रति[2]नृपतिबलाम्भोधिकुम्भोद्भवश्च
ख्यातः सर्वत्र योऽसौ जगति स जयति श्रीनृसिंहक्षितीन्द्रः ॥

इत्यत्र मानसाम्भोजादिषु विकासादिक्रिया नोपा[3]त्ता ।

वीराः प्राक् कति मात्र तैरहमसावित्थं न संवर्धिता
न त्राता न च लालितेति भवतः प्रत्यायनं कुर्वती ।
त्वत्कीर्त्तिः कलहंसकम्बुरजनीजानिच्छलेन स्पृश-
त्यम्भोजासनकंसशासनपुरारातीन् कलिङ्गेश्वर ॥

अत्र शासनपदस्य पौनरुक्त्यम् । अरातिपदे[4]नैवाभिमतार्थावग-मात् । कंसशासनश्च पुरारातिश्चेति द्वन्द्वाश्रयणमिह नोचितम् ।

---

वा पौनरुक्त्यमित्यर्थः । नोपात्तेति । भान्वादेः कर्त्तुरुपादानादिति शेषः । वीरा इति । संवर्धिता पोषिता । त्राता भयहेतुभ्यो रक्षिता । त्रातेः कर्मणि क्तः । लालिता उपलालिता । प्रत्यायनं विश्वासनं शपथमिति यावत् । रजनी जाया यस्य स रजनिजानिश्चन्द्रः । "जायाया निङ्" इति समासान्तो निङादेशः । इह कलहंसादीनामम्भोजासनादिचिह्नत्वात् तत्स्पर्श एव तत्तद्देवतास्पर्शः । 'देवता-पादसंस्पर्शस्तल्लिङ्गस्पर्शनं तथा' इति वचनादित्यभिप्रेत्याह । छलेनेति । अभि-मतेति । कंसपुरशब्दयोरेव द्वन्द्वे तदन्ते श्रुतस्यारातिशब्दस्य प्रत्येकसंबन्धे कंसा-रातिः पुरारातिश्चेत्यर्थस्यावगमादित्यर्थः । ननु द्वन्द्वान्तराश्रयणेऽपि तदर्थावगति-रस्त्येवेत्याशङ्क्याह । कंसशासनश्चेति । ननूभयत्रापि द्वन्द्वलक्षणस्य चार्थस्य

---

१ °लोचनाम्भोज° T.   २ °नृपतिकुलाम्भोधि° T., C., M.   ३ नोक्ता T.   ४ °पदेनै-केनैवा° T.   ५ °वगमनात् T.   ६ तदन्तस्याराति° D.

उपायलाघवासंभवात्[1] कंसपुरयोरारातीति तत्पुरुषे पुनराश्रीय-माणे कतरोऽपि न विरोधः। तत्रोपायलाघवसंभवात् प्रतीतिः प्रधानमिति[2] सैवानुसरणीया। न लक्षणमात्रम्। प्रतीत्यर्थमेव लक्षणस्याश्रीयमाणत्वात्। 'अम्भोजासनकैटभारिगिरिशानेषा कलिङ्गेश्वर' इति पाठे नायं दोषः। सर्वनामपरामर्शयोग्यस्यार्थस्य पुनः[3] स्वशब्देनाभिधानं कथितपदापरपर्यायं पुनरुक्तमेव मन्तव्यम्। इवशब्देन यत्रैकेनैव[4] दीपकत्वात् कर्तृकर्मादीनामप्युपमानोपमेयभावः प्रतीयते तत्र द्वितीयस्येवशब्दस्य प्रयोगो न योग्यः। पदपौनरुक्त्यप्रसंगात्[5]।

---

संभवे कुतोऽन्यतरपक्षपातोऽन्यतरदोष[6]मित्याशङ्क्याह। उपायेति। अन्यत्र लाघवं दर्शयति। कंसेति। ननु लक्षणमुपेक्ष्य लाघवे कः पक्षपातस्तत्राह। प्रतीतिरिति। लघुप्रतीतिरित्यर्थः। सैवेति। लघुप्रतीतिरेवेत्यर्थः। प्रतीत्यर्थं लघुप्रतीत्यर्थम्[7]। सर्वनामपरामर्शयोग्यस्येत्यादि। यथा

'शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलंक्रिया।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः॥'

इत्यत्र प्रशमाभरणमिति प्रशमस्य पुनः स्वशब्देनोपादानं पुनरुक्तम्। अन्यत्र सर्वनाम्नैव परामर्शान्न दोषः[8]। नन्वेतन्मतान्तरेऽपि कथितपदं नाम दोषान्तरमुच्यते तद् कथं पुनरुक्तमत आह। कथितपदापरपर्यायमिति। अनेकेवोपमां[9] केचिदाहुः। यथा

'ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव॥'

इति स्वमते तदपि पुनरुक्तमेवेत्याह। इवशब्देनेति। पौनरुक्त्यन्तराण्याह।

---

१ अत्रो° T., C., G., M. २ T. omits इति. ३ D. and G. omit पुनः.
४ यत्रैकेनैव T.; इवशब्देनैकेनैव यत्र C. ५ °पौनरुक्त्यस्य प्रसंगात् T. ६ °न्यत्र दोष° K.
७ °र्थमित्यर्थः K. ८ परामर्शान्नायं दोषः K. ९ अनेकधोपमां D.

विशेष्यस्याभिधाने तु सामान्योक्तिर्न युज्यते।
यथा मे[1]रुगिरिः श्वासमरुच्चन्दनपादपः ॥ ६ ॥
[2]औवों वह्निर्मणिर्मुक्ता शेषोऽहिः पुष्पमम्बुजम्।
वसन्तर्तुः शरत्कालः कल्पान्तसमयादि च ॥ ७ ॥
मदाम्भोऽश्रुजलं स्वेदसलिलं [3]पचनादिषु।
विधिव्यापारकर्मादि प्रयोज्यं न [4]कदाचन ॥ ८ ॥

प्रत्युदाहरणं यथा

संगीतादिविचारवार्धितरणे सांयात्रिकः कस्य न
श्लाघ्यो वीर कलिङ्गपार्थिव भवान् भूलोकचिन्तामणिः।
रेखालाञ्छितकैतवेन सुकृती पद्माभिधानो निधिः
साक्षाद्यस्य करे कुबेरनगरीसर्वस्वमुज्जृम्भते ॥

अत्र तरणव्यापार इति नोक्तम्। तरणस्य व्यापा[6]रे व्यभिचाराभावात् ॥

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रे दोषनिरूपणं नाम षष्ठ उन्मेषः ॥

---

वि[9]शेष्यस्येत्यादि। पचनादिष्विति। पचनविधिः पाकव्यापारो भो[10]जनकर्मेत्यादि पुनरुक्तमित्यर्थः। सु[11]गममन्यत् ॥

इति प[12]दवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायामेकावलीव्याख्यायां तरलाख्यायां [13]दोषनिरूपणं नाम षष्ठ उन्मेषः ॥ ६ ॥

---

१ मेरुगिरिश्वासमरुच्चन्दनपादपाः T. २ शेषाहिर्मालतीपुष्पमौर्वोऽग्निर्विद्रुमो मणिः T., C, M. ३ वचनादिषु T. G.; भोजनादिषु C., M. ४ कथंचन T., C., G., M. ५ °लाञ्छन° T., G., C., M. ६ व्यापारत्वे D. ७ इति विद्याधर° D. ८ कृतैकावल्यां दोषनिरूपणं षष्ठोन्मेषः D. ९ विशेष्येति D. १० भोजनव्यापार इत्यादिकं K. ११ K. omits सुगममन्यत्. १२ इत्येकावलीव्याख्यायां तरलिकाख्यायां D. १३ K. omits दोषनिरूपणं नाम.

## अथ सप्तम उन्मेषः ।

**अथ दोषव्यावृत्त्यालंकारः [1]कथ्यतेऽधुनास्माभिः ।**
**पुनरुक्तवदाभासो भवति प्रमुखावभासनं द्वेधा ॥ १ ॥**

यद्यपि शब्दालंकारनिरूपणानन्तरमर्थालंकारनिरूपणमुचितं तथाप्यर्थपौनरुक्त्यस्यैव प्ररूढस्य दोषत्वेनाभिधानात् तद्विपर्ययस्यालंकारत्वदर्शनाय व्युत्क्रमेणात्र [2]कथनमेतस्य । [3]प्रमुख आपाततः [4]प्रतिभासनं न पुनस्तत्रैव विश्रान्तमर्थैक्यम् । अन्यथा पर्याय-

---

[5]अथालंकारनिरूपणाय संगतिमाह । [6]अथेति । दोषनिरूपणानन्तरं तत्प्रतियोगितयालंकारनिरूपणं संगतमित्यर्थः । तत्र पुनरुक्तवदाभासो नाम कश्चिदर्थालंकारस्त[7]माह लक्षयति । **पुनरुक्तवदाभास** इति । अपुनरुक्तोऽपि यत्र अर्थ आपाततः पुनरुक्तवदाभासते स पुनरुक्तवदाभासो नामालंकार इत्यर्थः । द्वेधेत्यस्य विभागकथनं नामाख्यातगतत्वेनेति शेषः । नन्वर्थालंकारोऽयं कथमप्रस्तावे निरूप्यत इत्याशङ्क्य चिरन्तनप्रसिद्धयेति पूर्वेषां परिहारे स्थिते स्वयं परिहारान्तरमाह । **यद्यपीति** । अर्थपौनरुक्त्यस्यैवेत्येवकारः शब्दपौनरुक्त्य[8]व्यवच्छेदार्थः । **प्ररूढस्येत्यत्र** रूढव्यवच्छेदः । **तद्विपर्ययस्येति** । प्ररूढार्थपौनरुक्त्यविपर्ययस्याप्ररूढपौनरुक्त्यस्येति यावत् । प्रमुखशब्दार्थमाह । **आपातत** इति । आरम्भ इत्यर्थः । प्रतिभासन[9]शब्दस्तात्पर्यमाह । **न पुनरिति** । ननु तत्रैव विश्रान्तिः कथं न [10]भविष्यतीत्याशङ्क्याह । **[11]अन्यथेति** । अर्थान्तरस्वीकारमन्त-

---

१ कथ्यतेऽस्माभिरधुना G. २ T. drops कथनमेतस्य. ३ प्रमुखत आपाततः T.; प्रमुखमापाततः G. ४ प्रतिपादनं T. ५ K. drops अथ. ६ अथेत्यादि K. ७ °स्तमाह । पुनरुक्त° K. ८ °व्यवच्छेदार्थ इति K. ९ °शब्दस्य तात्पर्य° K. १० °भविष्यतीत्याह D. ११ अन्यथा पर्यवसानप्रसारिति K.

स्ववशाच्छब्दान्तरस्यार्थान्तरवृत्तेरसंभवात्। तद्द्वेधा नामाख्यात-गतत्वेन। क्रमेण यथा

अभ्यस्ताशेषविद्याभरगुरुधिषणं विद्विषद्रक्तपान-
क्रीडानिर्स्त्रिंशखड्गं विरचितवसुधाचक्ररक्षाविभूतिम्।
किं चालोकप्रभावक्षपितबुधविपद्ध्वान्तमुद्गायति त्वां
तुङ्गे शृङ्गे सुमेरोः सुरयुवतिगणः श्रीनृसिंह क्षितीन्द्र॥

अत्र गुरुधिषणयोर्निस्त्रिंशखड्गयो रक्षाविभूत्योरालोकप्रभयोर्नाम्नोः पुनरुक्तवदा[1]भासनम्।

तान् निर्मोति करोति हस्तितरिपून् युद्धेषु ते विक्रमान्
यैर्लोको भरते बिभर्त्ति कुतुकं रामेऽपि न प्रस्तुते।
किं चाभ्य[2]र्थनदुष्कृतानि शमयस्याकर्णयस्येकदा
यद्याकृष्टसुधारसं सुमनसां सूक्तं कलिङ्गेश्वर॥

अत्र निर्मोति करोतीत्यादिकयोराख्यातयो[3]ः।

रेणानुपपत्तेरित्यर्थः। विभजते। तद् द्वेधेति। अ[4]भ्यस्तेति। गुरुधिषणं भरितबुद्धिमित्यर्थः। निस्त्रिंशखड्गं निर्दयखड्गम्। 'निस्त्रिंशो नि[5]र्दये खड्गे' इति विश्वः। वसुधाचक्रस्य रक्षा रक्षणं विभूतिरैश्वर्यं च विरचितं येन तम्। आलोक-प्रभावो दृष्टिमहिमा। कुत्रेह पुनरुक्तवद्भासनं तदाह। अ[6]त्रेति। 'गीष्पतिर्धिष-णो गुरुः'। 'विभूतिर्भूतिरक्षयोः'। 'तेजः प्रभाव आलोकः' इत्यै[7]रभिधानैः पर्या[8]-यत्वप्रतीतेरित्यर्थः। द्वितीयमुदाहरति। ता[9]निति। कर इति च्छेदः। अतिहस्ति-तारि[10]पून् हिंसितशत्रून्। यैर्विक्रमैर्भरते भरताख्ये शाकुन्तलेये राज्ञि रामे दाशरथौ प्रस्तुते प्रशस्ते। अभ्यर्थनदुष्कृतानीति च्छेदः। याच्ञादुःखानीत्यर्थः। इह पुनरुक्त-वदाभासमुद्भावयति। अत्रेति। आदिशब्दाद् भरतेबिभर्त्तीत्यनयोर्निशमयस्याक-र्णयसीत्यनयोश्च संग्रहः॥

१ °वदवभासनम् T. २ चाभ्यार्थन° T. ३ T. adds पुनरुक्तवदाभासनम् after °राख्या-तयोः. ४ अभ्यस्तेत्यादि K. ५ निर्दयः खड्ग' D. ६ अत्रेत्यादि K. ७ इत्याद्यभिधानैः K. ८ पर्यायप्रतीते° K. ९ तानित्यादि K. १० °रिपूनतिहिंसित° D.

24

पुनरुक्तवदाभासं कथयित्वार्थैकनिष्ठमपि ।
अथ शब्दालंकाराः प्रस्तूयन्ते त्रयोऽधुना-
स्माभिः ॥ २ ॥

शब्दस्य पौनरुक्त्यं व्यञ्जनसमुदायमाश्रितं
यस्मात्[1] ।
स च्छेकानुप्रासः संख्यानियमे समुल्लसति ॥ ३ ॥

द्वयोर्द्वयोर्व्यञ्जनयोर्[2]यथोः कयोश्चिदन्योन्यमसकृत्सादृश्यं संख्यानियमः । छेका विदग्धास्तैः प्रयुक्तोऽयमनुप्रास इत्यन्वर्थः ।

कलाकलापं दधदुज्ज्वलोज्ज्वलं
मुहुस्तमस्तोममपाकरोति यः ।

---

अथ संगतिकथनपूर्वकं शब्दालंकारान् प्रस्तौति । पुनरुक्तव[3]दिति । अर्थालंकार[4]त्वेऽप्यर्थपौनरुक्त्यदोषप्रसक्त्याश्चिरन्तनप्रसिद्ध्या च पुनरुक्तवदाभासं पूर्वमभिधाय पुनरर्थापेक्षया शब्दस्य प्रतीतावन्तरङ्गत्वेन प्रथमं शब्दालंकाराः प्रस्तूयन्त इत्यर्थः ॥

इह शब्दपौनरुक्त्यं शब्दालंकारोऽनुप्रासाख्यः। स च त्रिविधः। छेकानुप्रासो वृत्त्यनुप्रासो लाटानुप्रासश्चेति । तत्राद्यं लक्षयति । शब्दस्येति । तच्च शब्दपौनरुक्त्यं द्विविधं व्यञ्जनमात्रपौनरुक्त्यं स्वरव्यञ्जनसमुदायपौनरुक्त्यं च । तत्र व्यञ्जनमात्रपौनरुक्त्यं सति संख्याविशेषनियमे छेकानुप्रास इत्यर्थः । नियतसंख्याविशेषं दर्शयति । द्वयोर्द्वयोरिति । अत्र[5] 'सोऽनेकस्य सकृत्पूर्वः' इत्यादिना सकृद्व्यञ्जनयुग्मावृत्तिश्छेकानुप्रासः । असकृत्तदावृत्तिर्वृत्त्यनुप्रास इत्याह काव्यप्रकाशकारः । अलंकारसर्वस्वकारस्तु तद्विपरीतं सिद्धान्तयांचकार । तन्मतावलम्बेनाह । असकृत्सादृश्यमिति । उदाहरति । क[6]लेति । अत्र छेकानु-

---

१ यत् स्यात् G., M. २ व्यञ्जनयोः G. ३ °वदित्यादि K. ४ °कारत्वे त्वर्थ° D.
५ K. drops अत्र. ६ कलेत्यादि K.

न कस्य हर्षं वसुधासुधाकरः
करोत्ययं वीरनृसिंहभूपतिः ॥

## संख्यानियमाभावे भवति पुनर्वृत्त्यनुप्रासः ।[1]

केवलव्यञ्जनसादृश्यं सकृद्व्यञ्जनसादृश्यं[2] त्र्यादीनां व्यञ्जनानामितरेतरसादृश्यं संख्यानियमाभावः । वृत्तिस्तु रसविषयो व्यापारस्तत्समुचिता वर्णरचनेह वृत्तिः । तदुपलक्षितोऽयमनुप्रास इत्यन्वर्थाभिख्योऽपि । क्रमेण यथा

श्रीमन्नृसिंह नरनाथ कथं यशस्ते
कृत्तारिकण्ठरुधिरारुणितात् कृपाणात्
कैलासकाशकरकाकुमुदेन्दुकुन्द-
मन्दारमौक्तिकमृणालमनोज्ञमासीत् ॥

---

प्रासे व्यञ्जनमात्रपौनरुक्त्यस्येष्टत्वात् कलाकलासुधासुधेत्यादौ स्वरव्यञ्जनसमुदायपौनरुक्त्याद्यमकभेदेनास्यैकाभिधानलक्षणः संकरः ॥

द्वितीयभेदं लक्षयति । संख्येत्यादि । संख्यानियमाभाव इत्येतद्विवृणोति । केवलेति[3] । कैवल्यमसमुदितत्वम् । सादृश्यं पौनरुक्त्यम् । सकृद्व्यञ्जनेत्यत्र व्यञ्जनद्वयसादृश्यं विवक्षितम् । एवं च सत्यसकृदेकैकव्यञ्जनपौनरुक्त्यं सकृद्व्यञ्जनद्वयपौनरुक्त्यं त्रिचतुरादिव्यञ्जनसमुदायपौनरुक्त्यं चेत्यर्थः । अलंकारसर्वस्वकारोक्तरीत्या वृत्त्यनुप्रासशब्दं निर्वचन्[4] वृत्तिशब्दस्य तावत्तदुक्तं मुख्यार्थमाह । वृत्तिस्त्विति । इह तद्वती वर्णरचना वृत्तिरुपचारादुच्यत इत्याह । तत्समुचितेति । क्रमेणेति[5] । प्रथमोदाहरणे केवलव्यञ्जनपौनरुक्त्यं व्यक्तं द्वितीयोदाहरणे नाथं नाथमिति सकृद्व्यञ्जनद्वयपौनरुक्त्यं तृतीये जगति जगतीति त्र्यादिसादृश्यम् ॥

---

१ कथितोऽयं वृत्त्यनुप्रासः T. २ °व्यञ्जनद्वयसादृश्यं G. ३ °त्यादि K. ४ निरूप K. ५ °त्यादि K.

युक्ता विपक्षेषु कृपा न कर्त्तु-
मेते विकुर्वन्ति हि कार्यकाले।
इत्याहवे वीक्ष्य कलिङ्गनाथं
नाथन्त्यमी प्राञ्जलयः सपत्नाः॥

जगति[1] गजगतिर्नन्दतु श्रीनृसिंहः।

**इदमेव स्वरसहितं व्यञ्जनसमुदायमाश्रितं यमकम्॥४॥**

अत्र क्वचिद्भिन्नार्थकत्वं[2] क्वचिदनर्थकत्वं[3] क्वचिदेकस्यानर्थकत्वमन्यस्य सार्थकत्वमिति संक्षेपतः प्रकारत्रयम्। क्रमेण यथा

कलिङ्गनाथ यस्मात् त्वं प्रभवः सर्वसंपदाम्।
अतस्तव तुलां[4] प्राप्तुं प्रभवः केऽपि नापरे[5]॥

अत्र प्रभवः प्रभव इत्यभिहितयोर्भिन्नार्थकत्वम्[6]।

भाग्यसौभाग्यसौजन्यनिधिं नरहरिं स्तुमः[7]।
चतुरं चतुरम्भोधिमेखलावनिपालने॥

अत्र भाग्यसौभाग्यसावित्यनयोरनर्थकत्वम्। प्रथमस्य चतुरमित्यस्य[8] सार्थकत्वमपरस्यानर्थकत्वम्[9]।

---

एवं व्यञ्जनमात्रपौनरुक्त्ये छेकानुप्रासवृत्त्यनुप्रासावुक्त्वा शब्दमात्रपौनरुक्त्यसाम्यात् स्वरव्यञ्जनसमुदायपौनरुक्त्याश्रितं यमकाख्यं शब्दालंकारान्तरमाह[10]। **इदमेवेति**। इदमिति पौनरुक्त्यं परामृश्यते। नियतसंख्याकस्वरव्यञ्जनपौनरुक्त्यं यमकमित्यर्थः। तत् त्रेधा विभजते। **अत्र क्वचिदिति**। भाग्यभेदद्वयोरिति शेषः। **अत्र प्रभव इति**। प्रभवत्यस्मादिति प्रभवः कारणम्। "कर्तो-

---

१ जगति जगति नित्यं नन्दतु D.; जगाति जगति नन्दति श्रीनृ° M.; दृप्यद्दुर्वारवैरिक्षितिपतिवनितालोचनाम्भोरुहेन्दुः। क्रीडासौधं कलानां जनयति जगदानन्दनः श्रीनृसिंहः G. २ °भिन्नार्थत्वं D. ३ °दनर्थत्वं G. ४ रूपां T. ५ नो परे C. ६ °भिन्नार्थत्वम् C., G. ७ नुमः T; C. ८ °मित्येतस्य T., C. ९ T. drops अपरस्यानर्थकत्वम्. १० शब्दालंकारमाह K.

प्रायशो यमके चित्रे रसपुष्टिर्न दृश्यते।
दुष्करत्वादसाधुत्वमेकमेवात्र दूषणम् ॥ ५ ॥
रलयोर्डलयोस्तद्वल्लळयोर्बवयोरपि।[1]
नमयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः ॥ ६ ॥[2][3]
सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम्।
यमकं तु विधातव्यं कथंचिदपि न त्रिपात् ॥ ७ ॥
वर्णानामथ पद्माद्याकृतिहेतुत्वमुच्यते चित्रम्।

कर्णशष्कुल्यवच्छिन्नाकाशसमवेतैः ककारादिभिरभेदेन ग्रहणाल्लिप्यक्षरेष्वप्ययं ककार इत्यैक्यप्रतीतेः शब्दालंकारत्वमत्रौपचा-[4]

---

रम्"। प्रभवन्तीति प्रभवः समर्थाः। "विप्रसंभ्यो ड्वसंज्ञायाम्" इति डुप्रत्ययः। इत्युभयोः पार्थक्यमित्यर्थः। ननु कथमास्था कवीनां नीरसयोश्चित्रयमकयोरित्याशङ्क्याह। प्रायश इति। वैचित्र्यवशादेव चमत्कारकारित्वसंभवात् न रसापेक्षा प्रेक्षावतामित्यर्थः। तर्हि कथं न सर्वादरस्तत्राह। दुष्करत्वादिति। अशक्तानामनादरो न तु शक्तानामिति भावः। तत्र वर्ज्यावर्ज्ये दर्शयति। रलयोरित्यादिना। न त्रिपादिति। त्रिपादवृत्तियमकं स्वमताभिधानम्। मतान्तरे तु तदप्यस्त्येव। 'एकद्वित्रिचतुष्पादयमकानां विकल्पना' इत्यादिना दण्डिना लक्षणोदाहरणाभ्यां बहुधा प्रपञ्चितत्वादिति ॥

तदेवं यमकमुक्त्वा स्वरसहितव्यञ्जनावृत्तिमत्त्वसाधर्म्यात् तदनन्तरं चित्राख्यं शब्दालंकारविशेषं लक्षयति। वर्णानामित्यादि। नन्वशब्दात्मलिप्यक्षरगताकारविषयस्य कथं शब्दालंकारतेत्याशङ्क्याह। कर्णेति। अशब्देष्वपि लिप्यक्ष-[5][6]

---

१ °ळव्योस्तद्वडुल्यो° C. २ °र्णनयो° D.; °र्णमयो° G. ३ °श्चैवं D. ४ °मस्योपचारिकम् T., C., M. ५ °रित्यादि K. ६ चित्राख्यशब्दा° D.

रिकम्। कर्णिकाप्रमुखसंस्थानविशेषश्लिष्टानां वर्णानां पुनः पुनरावृत्तिभ्यावृत्तिभ्यामादानादक्षरसंकोचश्चित्रम् ॥

अत्र यद्यपि बन्धचित्रमाकारचित्राद्भिन्नं मन्यमानैरपि चिरन्तनैर्न किञ्चिद्भेदकमुक्तं तथापीश्वरकर्तृकत्वे सत्यपि यदेककर्तृकतया प्रसिद्धं तद् पद्मशैलादिकमाकारचित्रम्। यत्तु द्विकर्तृकं हलमुसलमुरजगोमूत्रिकाचापचक्रादि तद्बन्धचित्रमित्यनयोर्भेदः कल्पयितुं शक्य एवास्माभिः। तथापि न कल्पितः। आकारचित्र इवेह बन्धचित्रेऽपि वर्णानामाकारोल्लासकत्वात् पद्मादिरूपतयाक्षराणां

रेषु गम्यगमकयोरभेदोपचारात्तयात्वमित्यर्थः । चित्रमात्रव्यापकलक्षणं निष्कृष्याह । कर्णिकेति ॥

अथ बन्धचित्रगतिचित्रस्थानचित्राणामप्याकारचित्र एवान्तर्भावं कर्तुमनन्तर्भाववादिभिरनुक्तमपि बन्धचित्राकारचित्रयोश्चोत्प्रेक्षापरिकल्पितमेव भेदकमुपन्यस्यति । अत्र यद्यपीति । चिरन्तनैर्नोक्तं चेत् कोऽन्यो वक्ष्यतीत्याशङ्क्याह । तथापीति । ईश्वरकर्तृकत्वे सत्यपीति । कृत्स्नस्य जगत इति शेषः । एककर्तृकतयेति । ईश्वरमात्रकर्तृकतयेत्यर्थः । द्विकर्तृकमिति । ईश्वरकर्तृकमस्मदादिकर्तृकं चेत्यर्थः । अस्मदादिकर्तृकेऽपीश्वरस्य सर्वोत्पत्तिमन्निमित्तत्वेन कर्तृत्वस्य शब्दलिङ्गाभ्यामङ्गीकारादिति भावः । तर्हि तथैवास्त्वित्यत आह । तथापि न कल्पित इति । कुत इत्यत आह । आकारेति । आकारोल्लासहेतुत्वाविशेषादाकारचित्र एवान्तर्भूतं बन्धचित्रमपीत्यर्थः । 'आश्चर्यालेख्ययोश्चित्रम्' इत्यमरः । तत्रालेख्यार्थत्वमाश्रित्य चित्रशब्दस्येह प्रवृत्तिनिमित्तमाह । पद्मादिरूपतयेति । चित्रसदृशत्वाच्चित्रमित्यर्थः । तर्ह्याकारोल्लासहेतुत्वाभावाद्गतिचित्रेऽर्धभ्रमसर्वतोभद्रादावव्याप्तिरित्याशङ्क्य चित्र-

१ कर्णिकामुख° T. २ °विशेषाश्लिष्टानां D. ३ °पीश्वरकर्तृत्वे D. ४ यदेककर्तृतया T. ५ D. drops तत्. ६ यत्र O. ७ °व्यापकं लक्षणं K. ८ यत्तु° K. ९ °चित्रयोः सापेक्षा° K. १० भेदमुप° K. ११ °नोक्तमेवान्यो वक्ष्यती° D. १२ सर्वोत्पत्तिनिमित्तत्वेन D. १३ अथापि D.

लिख्यमानत्वेन चित्रसादृश्याच्चित्रमिदमुच्यते। अहो[1] येन क्रमेण गता वर्णपङ्क्तिस्तेनैव क्रमेण प्रत्यागतेत्याश्चर्यकारित्वाद्वा चित्रमित्यन्वर्थबलाद्वर्णानामाकारानुल्लासकत्वेनाव्याप्तावपि गतप्रत्यागतार्थभ्रम[2]सर्वतोभद्रधेनुप्रभृतिगतिचित्रमत्र संगृहीतम्। अभिनवपदपदार्थपर्यालोचनेन मन्दबुद्धीनां चितो ज्ञानस्य त्राणाद्वा चित्रमित्यन्वर्थमहिम्ना निष्कण्ठ्यनिरोष्ठ्यनिस्तालव्यादिस्थानचित्रं च स्वीकृतम्। एतच्च[3] काव्ये गडुभूतमिति नेह प्रतायते। यत् पुनः स्वरविरहितव्यञ्जनमात्रसादृश्यप्रयुक्तं वर्णचित्र[4]मपरैरभ्यधायि तदस्मिन्[5] दर्शने वृत्त्यनुप्रास[6] एव। यथा

कलङ्किकङ्ककाकोलकुले कलकलाकुले।
कङ्केलिकलिकालोल किं का कोकिल काकली॥

---

शब्दस्याश्चर्यार्थताश्रयणेन तत्रापि प्रवृत्तिनिमित्तं संभावयति। **अहो येनेति**[7]। गतागताभ्यां चित्रत्वादाश्चर्यत्वाच्चित्रमिति गतिचित्रेऽपि नाव्याप्तिरित्यर्थः। तर्हि गतप्रत्यागतरहिते स्थानचित्रे निरोष्ठ्यादावव्याप्तिरित्याशङ्क्य रूढिं विहाय चितो ज्ञानस्य त्राणाच्चित्रमिति योगा[8]श्रयणेन तत्रापि चित्रशब्दं प्रवर्तयति। **अभिनवेति**[9]। निरोष्ठ्यनिष्कण्ठ्याद्यपूर्वार्थ[10]परिशीलनेनेत्यर्थः। **अन्वर्थेति**। चितं संविदं त्रायत इति चित्रं व्युत्पत्तिविशेषहेतुरिति यावत्। "आतोऽनुपसर्गे कः।" इदं चित्रं निरोष्ठ्यादिस्थानचित्रेऽप्यस्तीति न कुत्राप्यव्याप्तिरित्यर्थः। ननु चित्रस्य किमुदाहरणमत आह। **एतच्चेति**। गडुभूतं[11] दुर्ग्रन्थिरित्यर्थः। नेह प्रतायते न प्रतन्यत इत्यर्थः। "तनोतेर्यकि" इति विकल्पादनुनासिकस्याकारादेशः। द्व्यक्षरत्र्यक्षरादिचित्रमनुप्रासेऽन्तर्भावयति। **यत् पुनरिति**। तत्र द्व्यक्षरमुदाहरति। **कलङ्कीत्यादि**। कलकलाकुले कोलाहलसंकुले कलङ्किनो दुष्टा ये कङ्का लोहपृष्ठाख्याः

---

१ आहोस्विद्येन T., C., G., M. २ °र्थभ्रमक T., C., M. ३ एतत्तु T.; एतत् काव्यस्य गडु° C., M. ४ चित्रं परै° T. ५ तदस्मद्दर्शने C., M. ६ °प्रासभेद एव D. ७ येनेत्यादिना K. ८ योगवृत्त्याश्रयणेन K. ९ अभिनवेत्यादि K. १० °द्यपूर्वपरिशीलने° D. ११ गडुग्रन्थि K.

स्वरचित्रं तु बन्धशैथिल्यकारितया दोष एवेति नालंकारतया स्वीकृतम्। यदाह राजा

उरुगुं द्युगुरुं युत्सु चुक्रुधुस्तुष्टुवुः पुरु।
लुलुवुः पुपुषुर्मुत्सु मुमुहुस्तु मुहुर्मुहुः॥

शब्दार्थपौनरुक्त्यं प्ररूढमभिधीयते दोषः॥५॥

अस्यार्थपौनरुक्त्येनैव गतार्थत्वादत्राभिधानं शब्दार्थपौनरुक्त्यलक्षणतृतीयकक्ष्यागतालंकारनिरूपणैकप्रयोजनम्।

तात्पर्यभेदयुक्तं लाटानुप्रास इत्यदः कथितम्।

---

पक्षिविशेषाः काकोला द्रोणकाकास्तेषां कुले सङ्गे हे कोकिल कङ्केलयो लताविशेषास्तासां कलिकासु लोल सतृष्ण काकली स्वरीयः कलस्वरः का किं कापि किं न कापीत्यर्थः। उरुगुमिति। उरुर्महती गौर्वज्रं यस्य तमुरुगुं वज्रहस्तमित्यर्थः। द्युगुरुं त्रिदशपतिमिन्द्रं युत्सु युद्धेषु बुबुधुः सारवत्तया विविदुः। बोधतेर्भौवादिकाल्लिटि परस्मैपदम्। पुरु प्रभूतं तुष्टुवुरस्तुवन्। लुलुवुः लुनन्ति स्म मुत्सु मोदेषु पुपुषुः पुष्टिं गताः मुमुहुर्मुह्यन्ति स्म॥

केवलार्थपौनरुक्त्यं दोषः केवलशब्दपौनरुक्त्यमनुप्रास इति चोक्तम्। अथोभयपौनरुक्त्यमपि प्ररूढं चेद्दोष एवेत्याह। शब्दार्थेति। नन्वस्याप्यर्थद्वारकत्वादर्थपौनरुक्त्येन गतार्थस्येह पुनरभिधाने प्रयोजनमाह। अस्येति। उभयपौनरुक्त्योपजीविनो लाटानुप्रासस्यैतस्माद् भेदेन लक्षणार्थमित्यर्थः। तथा तं लक्षयति। तात्पर्येति। अत्र उभयपौनरुक्त्यमित्यर्थः। अन्यथा दोष इति भावः। तात्पर्यपरा-

---

१ लुलुपुः C., M.; रुरुदुः T. २ °नैवावगतार्थ° T. ३ कलः स्वरः D. ४ °मित्यादि K. ५ लुलुपुः K. ६ लुम्पन्ति K. ७° रूढमेषो दोषः K. ८ °पौनरुक्त्यं वृत्त्यनुप्रास इति K.

तात्पर्यमन्यपरत्वं तदेव भिद्यते न शब्दार्थ[1]स्वरूपम्। नायमनन्वयः। पौनरुक्त्यस्य तात्पर्यमात्रभिन्नस्यात्र प्रयोजकत्वात्। अनन्वये चार्थमात्रगतयुगपदुपमामोपमेय[2]भावस्योपयुक्तत्वात्। शब्दैक्यस्य पुनरौचितीवशेन[3] प्रसङ्गसङ्गतत्वात्। तस्माद्भिन्नविषयत्वमनयोः।

प्रतिभटकान्ताकुचतटमकरीलुण्टाक[4]चापटङ्कारः।
वीरनृसिंह इवाजौ वीरनृसिंहश्चिरं जयति॥

इत्यादावेकवाचकानुप्रवेशलक्षणः संकरः स्यात्।

उदाहरणं[5] तु[6]

ताला जाअन्ति गुणा जाला दे सहियएहि घेपन्ति।
रइकिरणाणुग्गहिआइ होन्ति कमलाइ कमलाइ॥

---

र्थमाह। अन्यपरत्वमिति। नन्वनन्वयार्थालंकारादस्य भेदो न स्यात्तत्राह। नायमिति। उभयोर्भेदकमाह। पौनरुक्त्यस्येति। उभयपौनरुक्त्यं लाटानुप्रासे प्रयोजकमनन्वये त्वर्थपौनरुक्त्यं तावतैवैकस्य युगपदुपमानोपमेयभावसिद्धेरित्यर्थः। किमर्थं तर्हि तत्र शब्दैक्यं कुर्वन्ति कवयो नियमेनेत्याशङ्क्याह। शब्दैक्यस्य पुनरिति। औचितीवशेनेति। उद्देशप्रतिनिर्देश्ययोरैकरूप्यमिति न्यायबलेनान्यथा पर्यायप्रक्रमभङ्गापत्तेर्न तु लक्षणत्वेनेत्यर्थः। एवं सत्यन्योन्यसापेक्षशब्दार्थपौनरुक्त्यं लाटानुप्रासोऽनन्वये त्वर्थमात्रपौनरुक्त्यमिति विषयभेद इति निगमयति। तस्मादिति। एवं चानन्वयेऽनयोरेकवाचकानुप्रवेशलक्षणः संकर इति सोदाहरणमाह। प्रतिभटेति[7]। लुण्टाको[8] निवर्त्तक इत्यर्थः। "जल्पभिक्ष——" इत्यादिना वाक्यन्प्रत्ययः। लाटानुप्रासस्य प्रसिद्धोदाहरणमाह। तालेति[9]।

---

१ न तु शब्दार्थ° T. २ °मेयभावस्यैवोपयुक्त° T. ३ °रौचित्यवशेन M. ४ °लुण्ठक° D. ५ T. has यथा for उदाहरणं तु. ६ C. and G. drop तु. ७ °भटेत्यादि K. ८ लुण्ठाको D. ९ तालेत्यादि K.

अत्र प्रथमः[1] कमलशब्दो वस्तुमात्राभिधायी। द्वितीयस्तु सौरभसौकुमार्यकान्तिमत्त्वसंभावितकान्तावदनोपमानत्वादिधर्मरूपार्थ इत्यस्त्येव तात्पर्यभेदः।

**पञ्चैते ऽलंकारा निर्णीताः पौनरुक्त्यकक्ष्यायाम्[2]॥६॥**

इति[3] श्रीमतो महामाहेश्वरस्य विद्याधरस्य कवेः कृतावेकावलीनाम्न्यलंकारशास्त्रे शब्दालंकारनिरूपणं नाम सप्तम उन्मेषः।

---

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥

अथ तात्पर्यभेदं दर्शयति। अत्र प्रथमेत्यादि। बुद्धिसौकर्याय पौनरुक्त्यमूलालंकारसंख्यामाह। पञ्चेत्यादि। केवलार्थपौनरुक्त्यमूलः पुनरुक्तवदाभासः। अव्यवधानेनासकृद्व्यञ्जनद्वयपौनरुक्त्याश्रितश्छेकानुप्रासः। अनियमेनैकद्वित्र्यादिव्यञ्जनमात्रपौनरुक्त्याश्रितो वृत्त्यनुप्रासः। स्वरव्यञ्जनसमुदायपौनरुक्त्याद्यमकम्। शब्दार्थोभयपौनरुक्त्याल्लाटानुप्रासः। इत्येवं पौनरुक्त्यरूपाः पञ्चालंकारा निर्णीता इत्यर्थः। तत्राद्योऽर्थालंकारः। अन्ये चत्वारः शब्दालंकाराः। चित्रं च पञ्चमः शब्दालंकार इति विवेकः।

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायामेकावलीव्याख्यायां तरलाख्यायां शब्दालंकारनिरूपणः सप्तम उन्मेषः

---

१ प्रथमकमल° T. २ °कक्षायाः D.; °कक्षायाम् C., G. ३ इति श्रीविद्याधरकृतावेकावल्यां D. ४ K. omits शब्दालंकारनिरूपणः. ५ सप्तमोन्मेषः D.

## अथाष्टम उन्मेषः ।

अर्थालंकरणानि प्रकटीकुर्मोऽधुना तु तत्रापि ।
ब्रूमः प्रथमं भेदाभेदप्राधान्यतस्तावत् ॥ १ ॥
विलसति सति साधर्म्ये स्यादुपमानोपमेययोरु-
पमा ।
द्वि[1]धाभ्यधायि कविभिः पूर्णालु[2]प्ताविभेदेन ॥ २ ॥

उपमेति लक्ष्यनिर्देशः । शेषस्तु लक्षणम् । समानो धर्मो ययोस्ते सधर्मणी अर्थादुपमानोपमेये इन्दुवदनादिके तयोर्भावः साधर्म्यं कवि[3]समयप्रसिद्धं कान्तिमत्त्वादि न तु वस्तुत्वप्रमेयत्वादि ग्राह्यम् ।

---

तदेवं शब्दालंकारानुक्त्वा संप्रत्यर्थालंकारनिरूपणाय संगतिमाह । अर्थालंकरणानीति । तुशब्दः प्रस्तावभेदकः । पूर्वं प्रतीतावनन्तरङ्गत्वाच्छब्दालंकारा उक्ताः । अधुना [4]त्वर्थालंकारा उच्यन्त इत्यर्थः । आदावुपमानिरूपणस्य कारणमाह । तत्रापीति । अर्थालंकारेष्वपीत्यर्थः । मुखमेव चन्द्रः मुखचन्द्रः मुखं चन्द्रश्च शोभते मुखं वा चन्द्रो वा न मुखं किन्तु चन्द्र इत्यादिसादृश्यविच्छित्तिविशेषै रूपकदीपकाद्यनेकालंकारबीजतयोपमायाः प्रथमं निरूपणमित्यर्थः । सादृश्यमूलत्वाविशेषादस्याः को भेद [5]इत्याशङ्क्याह । भेदाभेदेति । इह सादृश्यमूलेष्वलंकारेषु केचिद् भेदप्रधाना यथा व्यतिरेकादयः । केचिदभेदप्रधाना यथा रूपकादयः । इयं तूभयप्रधानेति सर्वालंकारो[6]त्तीर्णोऽयमलंकार इत्यर्थः । एवं संगतिमुक्त्वा लक्षणं विभागं चाह । विलस[7]तीति । इह षष्ठ्यन्तस्य लक्ष्यपदसंबन्धशङ्कानिरासार्थं लक्ष्यलक्षणांशौ विविनक्ति । उपमेति । सादृश्यार्थताप्रतीत्यर्थं साधर्म्यशब्दं व्याचष्टे । समान इति । किं तत् साधर्म्यं तदाह । कविसमयेति । अन्यथा पर्वतपरमाण्वोरप्यौपम्यप्रसङ्ग इत्यभिप्रायेणाह । न त्विति । ननु

---

१ द्वेधा° C. २ °लुप्तादिभेदेन C., G., M., D. ३ °समयसिद्धं G. ४ त्वानन्तर्यादर्था° K. ५ इत्याह K. ६ °यमुपमालंकार° K. ७ °तीत्यादि K.

अत एवोपमानोपमेययोरुपादानमिह कविसमयबाह्यभूतोपमानोपमेयनिरसने पर्यवसितम्। इतरथा कुमुदमिव मुखं कारणमिव कार्यमित्यादावप्युपमा स्यात्। कार्यकारणयोः साधर्म्यमेव कुतस्त्यमिति चेन्न। कारणगुणप्रक्रमेण कार्ये गुणारम्भ इत्यनयोरपि साधर्म्यस्य संभवास्पदत्वात्। ननु भेदाभेदप्राधान्यवचनमिह न समीचीनमिति चेदुच्यते। तन्न चतुरचेतसां विचारधुरमधिरोहति।

---

नायमर्थो लक्षणाक्षरेषु प्रतीयत इत्याशङ्क्याह। अत एवेति। येनाधिकगुणेन सहोपमीयते तदुपमानमप्रकृतं चन्द्रादिकं यत्तु न्यूनगुणं सदुपमीयते तत्तुल्यतया वर्ण्यते तदुपमेयं प्रकृतं मुखादिकं तयोरित्यर्थः। इहोक्तलक्षणोपमानोपमेयैकनियतसाधर्म्यग्रहणसाधर्म्यादेव तदवगमे पुनस्तयोः स्वशब्देनोपादानं सिद्धे सत्यारम्भो नियमार्थ इति न्यायात् पूर्वोक्तनियमपर्यवसितमिति तात्पर्यम्। विपक्षे बाधकमाह। इतरथेति। तत्र कार्यकारणयोः साधर्म्यप्रसक्तिरेव नास्तीति शङ्कते। कार्येति। कार्यगुणानां कारणगुणपूर्वकत्वात्तयोर्गुणतः साधर्म्यमस्तीति परिहरति। नेति। भेदाभेदप्राधान्ये उपमानोपमेययोः साधर्म्यमुपमेति लक्षणं तत्र भेदाभेदप्राधान्यमिति विशेषणं व्यर्थं व्यावर्त्यानुपलम्भादिति शङ्कते। नन्विति। रूपकव्यतिरेकादिसकलौपम्यगर्भालंकारव्यावर्तकत्वान्न वैयर्थ्यमिति परिहरति। उच्यत इति। भेदो विशेषः। अभेदः सामान्यम्। तदुभयात्मकं हि सादृश्यम्। यथाहुः। 'यत्र किंचित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इति। तत्र क्वचित् भेदस्य प्राधान्यं क्वचिदभेदस्य। इहतूभयोः प्राधान्यं तेन भेदाभेदप्राधान्य इत्यनेनान्यतरप्रधानसादृश्यमूलरूपकव्यतिरेकादिसर्वौपम्यगर्भालंकारव्यावृत्तिः। साधर्म्यादनौपम्यगर्भालंकारव्यावृत्तिः। उपमानोपमेयग्रहणं तु कविसमयविरुद्धसाधर्म्यनिवृत्त्यर्थमित्युक्तम्। तेन सर्वालंकारोत्तीर्णेयमुपमेति सुष्ठूक्तं

---

१ °पमेययोरुभयोरुपादान° D. २ °निरसनपर्यवासि° G., D. ३ कार्यगुणा° C., M. ४ D. has साधर्म्यसंभवास्पदत्वात्. ५ भेदाभेदतुल्यत्ववचन° D.; भेदाभेदतुल्यप्राधान्य° C., M. ६ °धुरामधि° T.; °धुरामारोहति C. ७ स्वशब्देनोपादानं K. ८ कारणपूर्वक° K. ९ ननु भेदाभेदेति K. १० इत्यादि K.

साधर्म्ये सति प्रकारत्रयस्य संभवात्। तथा हि क्वचिद् भेदप्राधान्यं दृष्टं यथा[1] व्यतिरेके। क्वचिदभेदप्राधान्यं यथा रूपके। क्वचित् पुनरुभयप्राधान्यं[2][3] यथास्यामेव। तच्चेदत्र[4] नोपादीयेत[5] तदा व्यतिरेकरूपकयोरपि विषयमियमाक्रामेत्[6]। साधर्म्यं तु गुणक्रियारूपमनुगतमिह भवेदेकेनैव श्लिष्टेनाश्लिष्टेन वा शब्देनोपादानमर्हति। श्लिष्टशब्दोपादानेऽप्यत्र न श्लेषः। तस्य धर्मरूपतयाङ्गत्वात्[7]। श्लिष्टशब्दोपात्तयोर्वस्तुतो भिन्नयोरेव धर्मयोरिहैकरूपतावगतिः भेदे सत्यभेद इत्येवंरूपातिशयोक्तिमहिम्नेति श्लेषप्रतिभोत्थापितातिशयोक्त्यनुप्राणितेयमुपमेति[8] मन्तव्यम्। उपमानोपमेयसाधारणधर्मोपमावाचकानामुपादाने भवन्त्येषा[9] पूर्णा स्यात्। एषामुपमानादीनामन्यतमस्य द्वयोस्त्रयाणां वा लोपे भवन्ती[10] लुप्तेति योगोऽप्य-

भेदाभेदप्राधान्य इति। समानधर्मनिर्देशं द्वेधा दर्शयति। साधर्म्यं त्विति। ननु समानधर्मस्य श्लिष्टशब्देनोपादाने श्लेष एव स्यान्नोपमेत्याशङ्क्याह। श्लिष्टेति। न श्लेष इति। प्रधानमिति शेषः। अप्राधान्ये[11] हेतुमाह। तस्येति। शेषः परार्थत्वादिति न्यायेनोपमापेक्षितसमानधर्मसंपादकतया तादर्थ्यात्तदङ्गत्वं यथावघातादेर्यागोपाधिकतण्डुलादिनिष्पादनेन[12] यागार्थत्वात्तदङ्गत्वं तदेतदाह। धर्मरूपतयेति। धर्मं समानधर्मं रूपयतीति संपादयतीति धर्मरूपस्तस्य भावस्तत्ता तयेत्यर्थः। ननु श्लिष्टशब्दोपात्तयोर्धर्मयोर्वस्तुतो भेदात् कथं श्लेषस्य साधर्म्यसंपादकत्वं तत्राह। श्लिष्टशब्दोपात्तयोरिति। भिन्नयोरप्यभेदाध्यवसायात् साधर्म्यसिद्धिरित्यर्थः। सा च पूर्णा लुप्ता चेति द्विविधेत्युक्तम्। द्विधेत्यादि[13] विभागवचने। तयोः स्वरूपमाह। उपमानेति। उपमावाचकाः सादृश्यवाचका इवा-

१ D. omits यथा. २ C. drops पुनर्. ३ °रुभयो. प्राधान्य° C. ४ तदत्र D. ५ नोपादीयते D. ६ D. drops इयम्. ७ °रूपतया गतत्वात् C., M. ८ °प्रतिभानोत्थापिता° D.; °प्रतिभोत्पत्तिसमुत्थापिता° T. ९ भवन्त्येषा G., M., D. drops एषा. १० भवति C., G., M. ११ अप्राधान्यहेतु° K. १२ °घातादेर्या गोपाधि° D. १३ द्विविधे° K.

नयोः संभवति। पूर्णा द्विविधा श्रौती आर्थी चेति। इवादयस्तु यत्पराः शब्दास्तस्यैवोपमानत्वमिति यद्यप्युपमानमेव विशिंषन्ति तथापि श्रुतेर्महिम्ना षष्ठीवत् संबन्धं द्योतयन्तीति तत्सद्भावेनान्वितार्था श्रौती। तेन तुल्यमित्यादावुपमेय एव तत्तुल्यमस्येत्युपमान एव इदं च तच्च तुल्यमित्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिः सौम्यपर्यालोचनया तुल्यताप्रतीतिरिति तत्र साधर्म्यस्यार्थत्वात्। तुल्यसदृशसनाभिसन्निभसंकाशनीकाशसहचरसोदरादिपदोपादा-

---

नयः। तत्र पूर्णामपि द्विधा विभजते। पूर्णेति। साक्षात् सादृश्यप्रतिपादका इवयथा-यथाशब्दाः तत्प्रयोगे श्रौती धर्मिव्यवधानेन सादृश्यप्रतिपादकास्तुल्यादिशब्दास्तत्प्रयोगे त्वार्थीत्यर्थः। ननु किमिवादिशब्दाः सादृश्यपर्यवसायिनस्तद्विशिष्टधर्मिपर्यवसायिनो वा। आद्ये चन्द्र इव मुखमित्युक्ते चन्द्रसादृश्यं मुखमित्युक्तं स्यादित्यसंबन्धोक्तिरेव। द्वितीये तुल्यादिशब्दवदुपमानविशेषकत्वाविशेषे सर्वाप्यार्थ्येवेति कैयमार्थी श्रौती चेति विभागप्रत्याशेत्याशङ्क्याह। इवादयस्त्विति। यथा राज्ञः पुरुष इत्यादौ संबन्धार्थे विधानात् षष्ठी श्रुत्या संबन्धमेव बोधयन्ती संबन्धिनि पर्यवस्यति तद्वदिवादीनामप्यर्थात् सदृशपर्यवसानं श्रुत्या तु सादृश्यगमकत्वमेवेति तत्प्रयोगे श्रौतीत्यर्थः। तुल्यादिशब्दानां तु श्रुत्या सदृशपरत्वमर्थात्तु सादृश्यपर्यवसानमिति तेषां प्रयोगे त्वार्थीत्याह। तेन तुल्यमित्यादाविति। अथानयोर्वाक्यसमासतद्धितगतत्वेनैकैकस्यास्त्रैविध्ये षाड्विध्यमाह।

---

१ पूर्णापि D. २ षष्ठीव T., G. ३ तत्सद्भावेऽन्वितार्था D.; तत्संभावितार्था G. ४ तात्पर्यलोचनया C., M. ५ °सहोदरादि° C., M. ६ सादृश्यमात्रपर्यवसायिन° K. ७ इयमार्थीयं श्रौती चेति का विभागप्रत्याशेत्याशङ्क्याह D.

ने सार्थकाभिधानेयमार्थी। एवमियं श्रौती चार्थी[1] चेति द्विविधापि पूर्णा वाक्ये समासे तद्धिते च भवन्ती न षट्प्रकार[2]मतिक्रामति। क्रमेण यथा

महीमण्डलमन्दार नरसिंह नरेश्वर।
यशः पीताम्बरं भाति तव विष्णोर्वपुर्यथा॥

इयं वाक्ये श्रौती पूर्णा। यथाशब्देन समं समासस्याभावात्।

कृपाणस्तव विध्वस्तविश्वामित्रमनोरथः।
नरसिंह धरानाथ वसिष्ठ इव राजते॥

इयं समासे श्रौती पूर्णा। इवशब्देन समं समासस्य संभवात्।

वाहिनीश्वरता लक्ष्मीशालिता भूरिसत्त्वता।
अकूपारवदाभाति नृसिंह नृपते तव॥

इयं श्रौती पूर्णा तद्धिते। अकूपारस्येवाकूपारवदिति संबन्ध इवार्थे वतेर्विहितत्वात्[3]।

---

एवमिति। महीति[4]। पीताम्बरं तिरोहिताकाशं पीतवस्त्रं[5] च। अतः श्लिष्टविशेषणत्वाच्छ्लेषप्रतिभोत्थापिताभेदातिशयोक्त्यनुप्राणितेयमुपमा। एवमनन्तरोदाहरणेष्वपि द्रष्टव्यम्। कृपाण इति[6]। विश्वेषाममित्राणां मनोरथा इत्येकत्र विश्वस्य मित्रं विश्वामित्रः कौशिकः। "मित्रे चर्षौ" इति दीर्घः। तस्य मनोरथा इत्यन्यत्र। समासस्य संभवादिति। 'इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इत्युपसंख्यानादिति भावः। वाहिनीति[7]। वाहिन्यो नद्यः सेनाश्च। लक्ष्मीः पद्मा संपच्च। सत्त्वा जन्तवः सत्त्वं बलं च। इवार्थ इति। "तत्र तस्येव" इति सादृश्यार्थविहितत्वादिति[8] भावः। तस्येवेति षष्ठ्यर्थे

---

१ च D., C. °प्येवं M. २ °प्रकारत्व° T., C. ३ वतेर्विधानात् T., C., M.
४ महीत्यादि K. ५ पीतवर्णवस्त्रं K. ६ इत्यादि K. ७ °नीत्यादि K. ८ °दित्यर्थः K.

नृसिंह भूप भवतः कराय श्लाघते न कः ।
दानवारिस्थितिर्यत्र भाति सागरवत् सदा ॥

इयमपि श्रौती पूर्णा तद्धिते । सागर इव सागरवदित्यधिकरण इवार्थे वतेर्विधानात् ।

हेलयैव विनिर्धूततारापति यशस्तव ।
सदृशं भाति रामेण नरसिंह नरेश्वर ॥

इयमार्थी पूर्णा वाक्ये ।

नरसिंह महीपाल समस्तोऽपि रिपुस्तव ।
पारावारसमानत्वं दधाति स्वपदच्युतः ॥

इयमार्थी पूर्णा समासे । पारावारसमानत्वमिति समासस्य विद्यमानत्वात् ।

अयं तव यशोराशिरुच्चैरावणजित्वरः ।
इह रामवदाभाति नरसिंह महीपते ॥

अत्र रामेण तुल्यं वर्तत इते तुल्यार्थे वतेर्विधानादियमार्थी पूर्णा तद्धिते दर्शिता । एवमियं षोढा ॥

---

वतिमुदाहृत्य तत्रैवेत्यधिकरणार्थेऽप्युदाहरति । नृसिंहेति[2] । कराय भुजाय । "श्लाघह्नुङ्——" इत्यादिना संप्रदानत्वाच्चतुर्थी । दानवारि दानोदकं दानवाना-मरिर्विष्णुश्च तस्य स्थितिः । हेलयेति[4] । तारापतिश्चन्द्रो वालिश्च । नरसिंहेति[5] । स्वपदच्युतः स्वस्थानभ्रष्टः स्वपदमच्युतो विष्णुर्यस्मिन् स इति च । अयमि-त्यादि । उच्चस्योन्नतस्यैरावणस्येन्द्रवारणस्य जित्वरस्तद्वद्धवल इत्यर्थः । अन्यत्रो-च्चैरिति च्छेदः । रावणो दशकण्ठः । तुल्यार्थ इति । "तेन तुल्यं क्रियाचेद्वतिः" इति सूत्रेण विधानादित्यर्थः ॥

---

१ संपत्येव G. २ °हेत्यादि K. ३ °ह्नुङ्स्थाशप—" K. ४ °येत्यादि K. ५ °हेत्यादि K.

लुप्तापि द्वेधा श्रौती चार्थी चेति। तत्र धर्मानुपादाने श्रौती लुप्ता वाक्ये समासे चेति द्वेधा[2]। तद्धिते त्वेषा न संभवती। इवार्थे संभवतोऽपि धर्मानुपादाने वतेरसंभवात्। कल्पबादेरिवार्थे विधानाभावाच्च। आर्थी तु वाक्ये समासे तद्धिते च[4] भवन्ती त्रिधा भवति। तेनेयं पञ्चधा। क्रमेण यथा।

> खड्गो यथोरगपतिस्तव कौमुदीव
> कीर्तिर्युगान्ततपनेन समः प्रतापः।
> वाक्यं पचेलिमरसालफलानुकारि
> बाहुस्तु वीर नरसिंह सुमेरुकल्पः॥

अत्र खड्गो यथोरगपतिरित्यादौ क्रूरत्वादेर्धर्मस्यानुपात्तत्वादियं लुप्ता पञ्चप्रकाराप्येकस्मिन्नेव श्लोके दर्शिता।

उपमानानुपादाने वाक्ये यथा

> साहित्यार्णवकर्णधार करुणापीयूषपाथोनिधे
> विद्वद्व्रातकवारिवाह कमलापर्यङ्कपङ्केरुह।

अथ लुप्तां विभजते। लुप्तेति। इयमेकलोपे द्विलोपे त्रिलोपे च वक्ष्यते। तत्रैकलोपे यदा धर्मलोपस्तदा श्रौती द्विधा आर्थी तु त्रिधेति पाञ्चविध्यमाह। तत्र धर्मानुपादान इति। द्विधात्वे हेतुमाह। तद्धिते त्विति। असंभवे को हेतुरित्याशङ्क्य किं स तद्धित इवार्थो वतिः कल्पबादयो वेति द्वेधा विकल्प्याद्यं परिहरति। इवार्थ इति। द्वितीये न श्रौतीत्याह। कल्पबादेरिति। सुगममन्यत्। उपमानानुपादाने श्रौती न संभवति आर्थी च वाक्यसमासगतत्वेन द्विधेव। तामुदाहरति। साहित्येति[7]। इहोपमाननिषेधसाम्यात्-

१ D. drops अपि. २ द्विधा C., G.; द्विविधा T. ३ तद्धिते समासे M. ४ D. and G. omit च. ५ लुप्तापीति K. ६ द्वयोर्लोपे D. ७ °इत्यादि K.

त्वां केनोपमिमीमहे त्रिजगति प्राप्तप्रकर्षैर्गुणै-
स्तुल्यं ते नरसिंह पार्थिव वयं कुत्रापि न प्राप्नुमः ॥

अत्र तुल्यशब्दोपादानादार्थी वाक्ये । तुल्यशब्देन समासाकरणात् । त्वत्तुल्यमिति पाठे त्वेषैव समासे भवति । अत्रोपमानस्य सत्तायाः संभाव्यमानत्वादनन्वयालंकारो न शङ्कनीयः । अत्र न प्राप्नुम इत्यनेनोपमानस्याप्राप्तिरुक्ता न त्वभावः ।

वाचकानुपादाने यथा

समसमयसमुद्यद्द्वादशादित्यशङ्का-
चकितजगदसोढप्रौढतापे प्रतापे ।
शिशिरयितुमशेषं गाङ्गवंशावतंस
प्रभवति तव कीर्तिर्दुग्धवीचीसमीची ॥

अत्र दुग्धवीचीव समीची व्यापिनीति वाचकलोपः ।

यथा वा

पृथुलकुचभारमुत्कटमदनं तरलाक्षमाकुलश्वसनम् ।
अन्तःपुरीयति वनं यवनावनिवल्लभो नृसिंह नृप ॥

---

नन्वत्रानन्वय इत्याशङ्क्याह । अत्रोपमानस्येति । संभावनां दर्शयति । अत्रेति । अनन्वये उपमेयस्यैवोपमानत्वकथनादुपमानस्यात्यन्तमभावः प्रतीयते । अत्र तु प्राप्तिमात्रनिषेधात् स्वरूपसत्ता संभाव्यत इति भेद इत्यर्थः । सादृश्यवाचके- वाचकानुपादानेऽपि कतिचिद्भेदानाह । वाचकेति । वाचकलोप इति गम्यमानस्याप्रयोग एव लोप इति सर्वत्र ज्ञेयम् । पृथुलकुचेति । पृथुलकुचानां भारो य-

१ °प्रकर्षे गुणै° T., G. २ न त्वसंभवः T. ३ °त्यन्तमबाधः प्रती° K. ४ वाचकानुपादान इत्यादि K., ५ गम्यमानार्थस्याप्रयोग K.

अत्रान्तःपुरमिवाचरतीति वाचकलोपः ।

तव वीर कलिङ्गेश कृपाणः पन्नगायते ।
पानक्रीडासु यस्याजौ रिपुकीर्त्तिः पयायते ॥

अत्र पन्नग इवाचरति पय इवाचरतीति वाचकलोपः ।

यथा वा

पश्यन्नवघनदर्शं तव वीर नृसिंह निस्त्रिंशम् ।
वङ्गः सङ्गरसीमनि संचरति मरालसञ्चारम् ॥

अत्र नवघनमिव दृष्ट्वा मराल इव संचरतीति वाचकलोपः ।

द्विलोपे[1] यथा

तुलामालम्बते यस्य नृसिंह नृपते भवान् ।
न व्यलोकि न चाश्रावि[2] स कश्चन महीतले ॥

अत्र यस्येत्युपमानस्य शौर्यादेर्धर्मस्य च लोपः ।

---

स्मिन् तत् । 'लकुचो लिकुचो डहुः'[3] । पृथुलः कुचभारो यस्मिन्नित्यन्यत्र । मदनः स्मरो धुर्धूरश्च[4] । श्वसनो मदनद्रुमो निश्वासश्च । 'श्वसनो मदनद्रुमो मदनस्मेरधुर्धूराः'[5] । इत्यादि विश्वः । अक्षो विभीतकवृक्षः अक्षि चक्षुरिति च[6] । पक्षे "बहुव्रीहौ सक्थ्यक्ष्णोः—" इति षच् । वनमन्तःपुरीयति अन्तःपुरमिवाचरति । "उपमानादाचारे" इति उपमाने कर्मणि क्यच् । "क्यचि च" इतीकारः । तवेति[7] । पन्नग इवाचरति पन्नगायते । पयः क्षीरमिवाचरति पयायते । "कर्त्तुः क्यङ् सलोपश्च"[8] इति कर्त्तरि क्यङ् । 'ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया' इति विकल्पात् सकारलोपः । पश्यन्निति[9] । नवघनमिव दृष्ट्वा घनदर्शं मराल इव संचर्य मरालसंचारम् । "उपमाने कर्मणि च" इति कर्मण्युपमाने चकारात् कर्त्तर्युपमाने च क्रमादुभयत्र णमुल्प्रत्ययः । कषादित्वादुभयत्रानुप्रयोगश्च । तुलामिति । अत्र

---

१ द्विलोपो C. २ न चाश्रायि D. ३ लकुचो द्रुमः D. ४ धत्तूरश्च D. ५ °स्मरो K. स्मरधत्तूरा D. ६ D. omits च. ७ तवेत्यादि K. ८ क्यङ् सलोपश्च D. ९ °न्नित्यादि K.

त्रिलोपे यथा

समालोक्यालेख्यस्थितमपि मृगाक्ष्यः फणभृतं
प्रकम्पन्ते धैर्यं त्वदरितरुणीनां त्वनुपमम् ।
यदेतास्त्वद्धाट्यामधिरजनि यान्त्यः फणभृतां
फणारत्नं हस्तैः पिदधति दृढं वीर विपिने ॥

अत्र मृगस्याक्षिणी इव आयते अक्षिणी यासां ता मृगाक्ष्य इत्युपमानवाचकधर्माणां लोपः ॥

इयं च क्वचिद्वस्तुप्रतिवस्तुभावेन भवति । यथा

पराध्यमणिकेयूरस्तव वीर भुजार्गलः ।[1]
धत्ते फणामणिश्लाघ्यां फणिनामीशितुः श्रियम् ॥

शौर्यादेर्धर्मस्यानिर्देशादुपमानस्य च यस्य तुलामालम्बते स न कश्चनेति प्रसक्तिमात्रेण सर्वमाम्नानूद्य निषेधः कृतः न तु शृङ्गमौक्तिकतया[2] कस्यचिन्निर्देश इत्यनयोर्लोपः तव तुलामित्युपमेयवाचकयोर्निर्देश इति द्विलोपः । त्रिलोपं[3] व्यनक्ति । अत्र मृगस्येति[4] । अत्र वाचकस्येवशब्दस्य गम्यमानार्थत्वादप्रयोग एव लोपः । धर्मस्य चायतत्वस्य सामर्थ्यलब्धस्याप्रयोग एव लोपः । उपमानस्य तु प्रथमाक्षिशब्दस्य 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इति लोपः । अत्र कान्ताक्ष्णोर्मृगाक्षिणी उपमानं तदवयवत्वान्मृगोऽप्युपमानमुच्यते । एवं स्थिते मृगस्याक्षिणीति षष्ठीसमास उपमानपूर्वपदः । तस्य "अनेकमन्यपदार्थे" इत्युत्तराक्षिशब्देन सह बहुव्रीहौ पूर्वोक्तषष्ठीसमासोत्तरपदस्य पूर्वाक्षिशब्दस्य लोपो भवतीति सूत्रार्थः ॥

एवं कतिचिदुपमाभेदानुक्त्वा भेदान्तराणि स्वयमूह्यानीत्युपेक्ष्य संप्रति समानधर्मनिर्देशप्रकारमाह । इयं चेति । समानधर्मः क्वचिदेक एव साधारण्येनोभयानुगामितया सकृन्निर्दिश्यते यथा वागर्थाविव संपृक्तावित्यत्र संपृक्तत्वम् । क्वचित् पुनः पार्थक्येन

१ पराध्यकेयूरमणिर्नरसिंह भवद्भुजः T., C., M. २ °माह्निकया K. ३ °लोपे D. ४ °स्येत्यादि K.

अत्र परार्ध्यत्वं श्लाघ्यत्वं चेत्येक एव धर्मः कथितपदस्य दुष्टत्वाभिधानात् पर्यायशब्देनोपनिबद्धः । एकस्यैव धर्मस्य[1] वारद्वयमुपादानं वस्तुप्रतिवस्तुभावः । क्वचित् पुनर्बिम्बप्रतिबिम्बभावेन यथा

वक्षस्थली तव नृसिंह धराधिनाथ
विन्यस्तनिस्तलतरङ्गिततारहारा[2] ।
चामीकरक्षितिधरस्य तटीव भाति
मन्दाकिनीसलिलवेणीविटङ्कितश्रीः ॥

अत्र विन्यस्तनिस्तलतरङ्गिततारहारत्वं[3] मन्दाकिनीसलिलवेणिविटङ्कितश्रीत्वं च वस्तुतो भिन्नावेव धर्मावभिन्नतयातिशयोक्त्याध्यवसितौ साधारण्यं[4] भजतः । भिन्नयोरेव धर्मयोर्द्विरुपादानं बिम्बप्रतिबिम्बभावः ॥

---

निर्दिश्यते । स च वस्तुप्रतिवस्तुभावेन बिम्बप्रतिबिम्बभावेन चेति द्वेधा । तत्राद्यमुदाहरति । पराध्र्येति[5] । अत्र फणिनामीशितुः श्रियमिति निदर्शनायां सामिवेल्युपमोपजीविन्यां परार्ध्यत्वं साधारणो धर्म एक एव श्लाघ्य इति शब्दान्तरेण पृथक् निर्दिष्टः स वस्तुप्रतिवस्तुभाव इत्यर्थः । शब्दान्तरेणोपादाने कारणमाह । कथितेति । शेषोन्मेषे पौनरुक्त्यप्रस्ताव इति शेषः । वस्तुप्रतिवस्तुभावस्य लक्षणमाह । एकस्यैवेति । वारद्वयमिति । एकस्यैव धर्मस्यैकत्रोपमेये वस्तुत्वेन निर्देशः पुनरुपमानेऽपि प्रतिवस्तुत्वेन प्रतियोग्यर्थत्वेन शब्दान्तरेण निर्देशो वस्तुप्रतिवस्तुभाव इत्यर्थः । न चार्थपौनरुक्त्यमत्र शङ्कनीयम् । धर्मिभेदेन भिन्नस्य तस्य प्रत्युत वैचित्र्यादिति । बिम्बप्रतिबिम्बभावमुदाहरति । वक्षःस्थलीति[6] । नन्वत्र भिन्नयोर्धर्मयोः कथं समानधर्मत्वं तत्राह । अत्रेति । हारसलिलयोरत्यन्तभिन्नयोरपि सादृश्याद्बिम्बप्रतिबिम्बवदवस्थितयोरभेदाध्यवसायादुभयानुगतैकधर्मत्वाभिमानात् समानधर्मत्वसिद्धिरित्यर्थः । बिम्बप्रतिबिम्बभावं लक्षयति । भिन्नयोरेवेति । भिन्नयोरेव वस्तुनोरत्यन्तसदृशयोरुभयधर्मत्वेन[7] पृथङ् निर्देशो[8] बिम्बप्रतिबिम्बभाव इत्यर्थः ॥

---

१ धर्मस्य वाचकद्वयेन वार° G. २ °भारा G. ३ °भारत्वं G. ४ साधर्म्यं T. ५ °ध्र्येत्यादि K. ६ °स्थलीत्यादि K. ७ °रुभयत्र धर्म° K. ८ °निर्देशादिम्ब° D.

यत्रोपमानगतानेकधर्मसंबन्ध उपमेयस्याभिधातुमभिमतस्तत्र साधारणमुपमावाचकं पदं वाच्यमेव कर्त्तव्यं न तु धर्माभिधायिपदोपादानेन प्रतीयमानम्। यथा

कलिङ्गक्ष्मापाल त्रिदशतटिनीवीचितुलिते
यशःपूरे दूरात् तव जगदिदं पूरितवति।
समुन्मीलत्कालागरुबहलधूमप्रणयिनी-
स्तमस्तोमस्ताम्यन् विशति कबरीः पक्ष्मलदृशाम्॥

अत्र त्रिदशतटिनीवीचिवद् व्यापकत्वमपि यशःपूरस्याभिमतमतो वीचितुलित इत्युक्तं न तु वीचिधवल इति। धवल इत्युक्ते धवलत्वसहचरितंधर्मान्तरमपि प्रतीयत इति चेन्न। अतिप्रसङ्गात्। यत्र शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यमहिम्नैवोपमाप्रतीतिस्तत्र वाच्या न कार्या पौनरुक्त्यप्रसङ्गात्। यथोदाहृतं प्राक्

हिरण्यकशिपुक्षेत्रदानदर्शितविस्मयः।
न कस्य श्लाघनीयोऽसि नरसिंह जगत्पते॥

---

वाचकोपादाने विशेषमाह। यत्रोपमानेति। साधारणमित्यनेकधर्मसाधारणं तत्प्रत्यायनक्षममित्यर्थः। उपमावाचकं सादृश्यवाचकं तुल्यादिपदमित्यर्थः। धर्माभिधायि साधारणधर्मविशेषवाचकमित्यर्थः। न प्रतीयमानमिति कर्त्तव्यमित्यनुषङ्गः। अत्र तुलित इति सादृश्यवाचकप्रयोगात् वीचिगतानेकसमानधर्मवतीति स्यात्। धवल इत्युक्ते तु धावल्यस्यैव प्रतीतिः स्यान्नान्यस्येति वाचकमेवोक्तमित्यर्थः। ननु धर्माभिधायिपदप्रयोगेऽपि तत्साहचर्यात् धर्मान्तरप्रतीतिः संभवतीति शङ्कते। धवल इति। अतिप्रसङ्गेन परिहरति। नेति। 'तया स पूतश्च विभूषितश्च' इत्यत्र पूतत्वविभूषितत्वयोरन्यतरोपादानवैयर्थ्यं स्यादित्यर्थः। यत्र तूपमाया व्यङ्ग्यत्वं न तत्र वाचकप्रयोगः कार्य इत्याह। यत्र शब्दशक्तीति। अत्र प्रागुक्तमुदाहरणं स्मारयति। यथेति। हिरण्येत्यादि। व्याख्यातार्थमेतत्। अत्र भगवान् नृसिंह इव नृसिंहत्वं नृप इत्युपमा व्यङ्ग्यत्वान्न वाच्या कार्या पौनरुक्त्यादित्यर्थः।

इत्युपमा॥

---

१ एकधर्माभिधायि° M. २ °कालागुरु° T. ३ °धूप° C.,G.,M. ४ °सहचारितं धर्मान्तर° T., C., M. ५ वारयति D. ६ यथोदाहृतमिति K., ७ नृसिंह इत्युपमा K. ८ K. omits इत्युपमा.

**यद्युभयोः पर्यायात् स्यादुपमानोपमेयत्वम् ।**
**सन्निहितवाक्यभेदे सत्युपमेयोपमा द्विविधा ॥३॥**

अत्रोपमेयस्योपमानत्वकरणमुपमानान्तरनिरसनैकप्रयोजनम् । द्वि[1]विधा धर्मस्य वस्तुप्रतिवस्तुतया निर्देशे साधारण्ये चेति । क्रमेण यथा

---

भू[2]यसा साधर्म्यादुपमानन्तरमुपमेयोपमां लक्षयति । **यद्युभयोरिति** । उभयोरुपमानोपमेययोः । इह सर्वत्रोपमेयमुद्दिश्योपमानं विधीयते । यन्मुखं तत् कमलमिवेति । तस्योद्देश्यविधेयभावस्य सि[3]द्धसाध्यभवनान्तरीयकतया युगपदेकत्र विरोधादुक्तं **पर्यायादिति** । स[4] च पर्यायोऽनेकस्मिन् वाक्ये संभवतीत्यत उक्तं **वाक्यभेदे सतीति** । ननु वाक्यभेदे एकं वाक्यमुपमा स्यात् मुखं पद्ममिवेत्यपरं प्रतीपभेदः स्यात् पद्मं मुखमिवेत्येवमलंकारद्वयमापद्येतेत्याशङ्कयाह । **सन्निहितेति** । सन्निहितत्वमेकवाक्यता । अयमर्थः । यत्रोभयोर्वाक्ययोर्विध्यर्थवादयोरिव सन्निहितयोराकाङ्क्षावशादेकवाक्यता तत्रोपमेयोपमा । यत्र तु व्यवहितयोरनयोर्द्वयोर्विध्योरिव मिथो निराकाङ्क्षता तत्र पूर्वोक्तमलंकारद्वयमुपतिष्ठत इति । तथापि विरुद्धधर्मसंसर्गाद्वाक्यस्याप्रामाण्यापत्तिरित्याशङ्कयाह । **अत्रोपमेयस्येति** । विरोधे गुणवादः स्यादिति न्यायादादित्यो यूपो यजमानः प्रस्तर इत्यादिवत् प्रशंसापरत्वेनाविरोधान्नाप्रामाण्यमित्यर्थः । एतेन विरुद्धधर्मसंसर्गित्वाविशेषेऽप्यनन्वये पदैकवाक्यता । इह तु वा[5]क्यैकवाक्यतेत्यादिभेदोऽनुसंधेयः । विभागवचनं व्याचष्टे । **द्विविधेति** । द्वैविध्यमेव दर्शयति । **धर्मस्येति** । बिम्बप्रतिबिम्बभावे तु प्रायेणोक्तैकवाक्यत्वाभावान्न वैचित्र्यमिति नायमस्य

---

१ द्विधा T., C., M. २ D. drops भूयसा साधर्म्यात्. ३ सिद्धसाध्यभावनान्तरीयक? D. ४ K. omits स च. ५ वाक्यैकवाक्यतेति भेदानुरूपविभागवचन D.

लोचनमधुकरमधुरं मधुकरलोचनमनोहरं[1] भवतः ।
कमलमिवाननमाननमिव कमलं भाति वीर नरसिंह ॥

अत्रैकस्मिन् वाक्ये तावदाननमुपमेयम् । तत्र[2] च लोचनं संभवति न मधुकरः[3] । ततो लोचनं मधुकर इव लोचनमधुकरः । कमले तु लोचनासंभवाल्लोचनमिव मधुकरः लोचनमधुकरस्तेन मधुरमित्युपमासमासः । अपरत्र तु कमलमुपमेयम् । तत्र[4] मधुकरः संभवति न तु लोचनम् । ततो मधुकरो लोचनमिव मधुकरलोचनम् । आनने[5] तु मधुकरासंभवान्मधुकर इव लोचनं मधुकरलोचनं तेन मनोहर[6]मित्यत्राप्युपमासमास एवं[7] । ततश्चार्थभेदादिह[8] धर्मभेद इति चेन्न । भेदे सत्यभेद इत्येवंरूपातिशयोक्तिमहिम्ना

विषय[9] इति भावः । लोचनेनेति[10] । अत्र लोचनमधुकरमधुरत्वमेकत्र समानधर्मः । अपरत्र मधुकरलोचनमनोहरत्वम् । तयोरुपमेये[11]संबन्धे उपमितसमासाश्रयणादुपमानसंबन्धे उपमासमासाश्रयणाच्चार्थभेदे समानधर्मत्वं न संभवतीति प्रत्यवतिष्ठते । अत्रेत्यादिना चेदित्यन्तेन । एकस्मिन्निति । कमलमिवाननमिति वाक्ये इत्यर्थः । लोचनमधुकर इत्यत्रोपमितसमास इति शेषः । अपरत्रेति । आननमिव कमलमित्यस्मिन् वाक्य इत्यर्थः । मधुकरलोचनमित्यत्राप्युपमितसमास इति शेषः । फलितमाह । ततश्चेति । ततः समासभेदादित्यर्थः । लोचनमधुकरमधुरमित्यत्रोपमितसमासे मधुकरसदृशलोचनमधुरमित्यर्थः । उपमासमासे लोचनसदृशमधुकरमधुरत्वमर्थः । एवं मधुकरलोचनमनोहरमित्यत्राप्येकत्र लोचनसदृशमधुकरमनोहरत्वमपरत्र मधुकरसदृशलोचनमनोहरत्वं चेत्यर्थभेदः । ततो धर्मभेद इत्यर्थः । सत्यम् । तथाप्यनयोरभेदाध्यवसायाददोष इति परिहरति । नेति ।

१ भाति नरसिंह नृपते वदनं कमलमिव वदनमिव कमलम् T., C., M. २ अत्र T., C., M. ३ न तु मधु° T., C., M. ४ तत्र च मधु° C., G. M. ५ वदने तु T.; वदनेषु C., M. ६ मनोहरमित्युपमा° D. ७ D. drops एव. ८ T. omits इह. ९ विषिभरि D. १० °नेत्यादि K. ११ °रुपमेये संबन्धे K.

भिन्नस्यापि धर्मस्यैकरूपताध्यवसायः[1][2] । एकस्यैव धर्मस्य वारद्वयमुपादानं वस्तुप्रतिवस्तुभावः । द्विरुपादाने च निमित्तं संबन्धिभेदः[3] । संबन्धिभेदश्च वाक्यभेदात् ।

वीर नरसिंह विभाति क्षितिमण्डलभारभरणहेमाद्रे ।
मन्दाकिनीव भवतः कीर्त्तिर्मन्दाकिनी च कीर्त्तिरिव[4] ॥

अत्र विमलत्वादिरूपः साधारणो धर्मः प्रतीयत एवेति धर्मसाधारण्यम् ॥

**अनुगतिरूपमङ्गानामेकस्मिन्नेव जायते वाक्ये ।**
**यद्येकस्य तदानीमन्वर्थोऽनन्वयः कथितः ॥ ४ ॥**

---

अत्र योऽयं लोचनमधुकरमधुरत्वं नाम धर्मः वस्तुतस्तस्यैव मधुकरलोचनमनोहरमिति शब्दान्तरेण पृथङ्निर्देशाद्वस्तुप्रतिवस्तुभावोऽयमित्याशयेनाह । एकस्यैवेति । नन्वेकस्य द्विरुपादाने किं निमित्तं पौनरुक्त्यादित्याशङ्क्याह । द्विरिति । इहाननकमले एकं संबन्धि कमलानने चापरं तद्भेदाद्भेदेनोपादानमित्यर्थः । संबन्धिभेदोऽपि कथमाननकमलयोरेव द्विः श्रवणादित्याशङ्क्याह । संबन्धिभेदश्चेति । तयोरेवोपमानोपमेयभावविनिमयेन[5] वाक्यद्वये निर्देशादेव इत्यर्थः । द्वितीयभेदमुदाहरति[6] । वीरेति । न कश्चिदत्र धर्मः श्रूयते कुतः साधारण्यमत आह । अत्रेति ॥

इत्युपमेयोपमा ॥

उपमेयस्यैवोपमानोक्तिसाम्यादुपमेयोपमानन्तरमनन्वयं निरूपयति । अनुगतिरिति । एकस्येत्युपमाख्यावृत्तिः[7] । एकस्मिन् वाक्ये इत्युपमेयोपमाख्या-

---

१ °रूपत्वाध्यव° T., C., M. २ °ध्यवसायात् M.; °ध्यवसानात् C. ३ भेदमात्रम् T., C., M. ४ °धर्मस्य साधारण्यम् T., G., M. ५ °भावनियमेन K. ६ द्वितीयं भेद° K. ७ एकस्येत्यादि K.

उपमाङ्गानामित्युपमानोपमेयोपमावाचकसाधारणधर्माणाम् । ए-कस्य तूपमानोपमेयत्वादिविरुद्धधर्मसंबन्धः सदृशान्तरनिषेधध्व-ननाय । अत एवास्यान्यसंबन्धवन्ध्यत्वादन्वर्थत्वम् । यथा

प्रतिभटकान्ताकुचतटमकरीलुण्टाकचापटङ्कारः ।
वीरनृसिंह इवाजौ वीरनृसिंहश्चिरं जयति ॥

अत्रोपमेयस्योपमानत्वं क्रियमाणमुपमानमेव नास्त्यस्येति कि-मपि लोकोत्तरं वस्तु व्यनक्ति ॥

## सदृशं सदृशानुभवाद्यत्र स्मर्येत तत् स्मरणम् ।

नेदमनुमानम् । सदृशमनुभूय सदृशमेव स्मर्यत इति नियमा-भावात् । सदृशदर्शनेन विसदृशस्यापि स्मरणसंभवात् । यत्र तु सदृशं दृष्ट्वा सदृशमेव स्मर्यते तत्र स्मरणमलंकारः ।

यथा

---

वृत्तिः । इहापि पूर्ववदेव विरुद्धधर्माध्यासो निरसनीय इत्याह । एकस्येति । उदाहरति । प्रतिभटेति । लुण्टाको व्याख्यातः । इहालंकारेण वस्तुध्वनिमुन्ना-ययति । अत्रेति ॥

अनन्वयः ॥

अथ सादृश्यप्रस्तावात् तदेकनिबन्धनं स्मरणालंकारं लक्षयति । सदृशमिति । अनुमानेऽन्तर्भावमाशङ्क्याह । नेदमिति । नियमाभावात् सदृशदर्शनात् सदृ-शस्यैवस्मृतिरिति व्याप्त्यभावादित्यर्थः । तत्र हेतुमाह । सदृशस्येति । उदाहरति ।

---

१ °वाचकधर्माणाम् D. २ एकस्योपमानोप° D. ३ °वास्यानुसंबन्ध° T.; °वास्य संबन्ध° D., G. ४ लुण्टाक° D. ५ °भटेत्यादि K. ६ लुण्ठाको D. ७ K. omits अनन्वयः ८ अत्र D. ९ सदृशदर्शनेन विसदृशस्यापीति D.

त्वत्प्रत्यर्थी गिरिचरगजस्याङ्कके दत्तदृष्टि-
स्तस्मिंस्तस्मिन् स्मरति मधुरं तत्तदङ्गं प्रियायाः ।
कुम्भाभोगे गुरुकुचतटं दन्तयोर्गण्डलक्ष्मी-
मूरू हस्ते गतिषु च गतिं श्रीनृसिंह क्षितीन्द्र ॥

अत्र कुम्भाभोगाद्यनुभवात् पीनस्तनतटादेः सदृशस्यैव स्मरणमुपनिबद्धम् । सादृश्येतरकारणाङ्कुरिता तु स्मृतिर्नास्यालंकारस्य गोचरः ।

अहो स रणदुन्दुभिः क्व नु गतं तदा तैर्बलै-
रहो स पुरविप्लवः क्व खलु सा कुरङ्गेक्षणा ।
अहो तदपि दुर्दिनं क्व नु गतः कुमारो भवे-
दिति भ्रमति ते रिपुर्गिरिवनं कलिङ्गेश्वर ॥

अत्राहो इति वागारम्भानुभावेन सूचिता सैन्यवियोगादिजनिता स्मृतिर्व्यभिचारिभाव एव ॥

## संप्रति कतिचिदभेदप्राधान्येऽलंकृतीर्ब्रूमः ॥ ५ ॥

---

त्वदिति । गतमेतत् । स्मृतिमात्रस्य स्मरणालंकारत्वशङ्कां वारयति । सादृश्येति । तादृशीं स्मृतिमुदाहरति । अहो इति । पुरविड्वरः पुरविप्लवः । दुर्दिनं वारदुर्दिनमित्यर्थः । अत्र सर्वं परित्यज्य पलायितस्य रिपो रणदुन्दुभिप्रभृतीनां स्मृतिस्तद्वियोगोत्थचिन्तादिहेतुका न सादृश्यहेतुकेत्याह । अत्रेति । भाव एवेति न तु स्मरणालंकार इत्यर्थः । प्रेयोऽलंकारस्य तु विषय इति भावः ॥

### स्मरणालंकारः ॥

एवं सादृश्याश्रयणेन भेदाभेदतुल्यत्व उपमादींश्चतुरोऽलंकारान्निरूप्य संप्रत्यभेदप्राधान्येनालंकारान् प्रस्तौति । संप्रतीति । अभेदप्राधान्येऽपि केचिदारोपमूलाः

---

१ °स्तस्मिन् दृष्टे O. २ [illegible]ः श्री° M. ३ °ङ्कुरा तु D. ४ पुरविड्वरः D. ५ तद. सिदुर्दिनं T., M., O. ६ °दित्यादि K. ७ सादृश्येतरेति D. ८ इत्यादि K. ९ K. drops स्मरणालंकारः १० °तुल्यत्वेन K.

**प्रथमं निरूपयामस्तत्राप्यारोपगर्भितास्तावत् ।**

**तद्रूपकमारोपे यत्रापह्नूयते न तद्विषयः ॥ ६ ॥**

अत्राभेद[1]प्राधान्याभिधानाद्वस्तुतोऽस्त्येव भेदः । अत एवोपमा प्रतीयते । भेदाभेदप्रयुक्तस्य साधर्म्य[2]स्यैतां प्रति प्रयोजकत्वात् । अभेदप्रयुक्तं[3] साधर्म्यं रूपकं प्रति प्रयोजकम् । विषयस्यापह्नूयमा[4]नत्वे त्वपह्नुतिरभिधास्यते । यदा तु विषयी विषयं रूपयति रूपवन्तं करोति तदान्वर्थाभिधानं रूपकम् । इदं तु निरवयवं सावयवं

केचिदध्यवसायमूलास्तत्रारोपमूलाः प्रथमं निरूप्यन्त इत्याह । **प्रथममिति** । तत्र बहुप्रपञ्चतया रूपकमादौ लक्षयति । **तदिति** । आरोपो[5]ऽन्यत्रान्यस्यावापः । यथा मुखं[6] चन्द्र इत्यत्र मुखे चन्द्रत्व[7]स्य । एतेनाध्यवसायमूलोत्प्रेक्षातिशयोक्तिभ्यां भेदः । विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसायः । विषयनिगरणमन्तरेणाभेदप्रतिपत्तिरारोप इत्यनयोर्भेदादिति । अत्र साधर्म्यमित्युपमातोऽनुवर्तते । तच्च भेदाभेदा[8]त्मकमित्युक्तम् । तदुभयप्राधान्यादुपमादय उक्तास्तद्वैलक्षण्यार्थमिहोक्तम**भेदप्राधान्य** इति । तत्र प्राधान्यग्रहणस्य प्रयोजनमाह । **अत्राभेदेति** । प्राधान्यमेवेह निषिध्यते भेदस्य तेनोभयमप्यत्रास्तीत्यर्थः । ततः किमत आह । **अत एवेति** । उभयसद्भावादेवेत्यर्थः । तत्सद्भावस्योपमाप्रत्यायकत्वे हेतुमाह । **भेदाभेदेति** । तत्प्राधान्यप्रयुक्तस्येत्यर्थः । रूपकस्य ततो भेदमाह । **अभेदप्रयुक्तमिति** । अभेदप्राधान्यप्रयुक्तमित्यर्थः । भेदस्तु तिरोहितो वर्तत इति भावः । यथाहुः ।

'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति ।

विषयानपह्नवविशेषणस्य व्यावर्त्य[10]माह । **विषयस्येति** । रूपकसंज्ञां व्युत्पादयति । **यदा त्विति** । **रूपवन्तं करोतीति** । महारञ्जनरागः पटमिव स्वरूपेण विषयमुपरञ्जयतीत्यर्थः ।

१ तत्रा° M. २ °धर्म्यस्यैनां T., G. ३ °प्रयुक्तं तु साधर्म्यं T., M. ४ °नत्वेऽपह्नुति° C., M. ५ आरोपोऽन्यस्यान्यत्र वापः K. ६ मुखचन्द्र D. ७ °चन्द्रस्य K. ८ °भेदात्मकम् K. ९ भेदाभेदप्रयुक्तस्येति K. १० व्यावर्त्यमपह्नुतिरित्याह K.

परम्परितं चेति प्रथमं त्रिधा। तत्राद्यं केवलं मालया चेति द्विधा। द्वितीयमपि समस्तवस्तुविषयमेकदेशविवर्त्ति चेति द्विधा। तृतीयं तु श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधम्। तत्तु प्रत्येकं केवलं मालया चेति चतुर्विधम्। तदेवामिह भेदाष्टकमेवोट्टङ्कितम्। व्यस्तसमस्तत्वादिकथने वैचित्र्याभावात्। तत्रावयवतो निष्क्रान्तं निरवयवं केवलं यथा

हेमाद्रेः कन्दरायां रतिरमणरणाटोपविच्छिन्नहार-
व्यस्तं मुक्ताफलानां तमसि तत इतः स्तोममन्वेषयन्त्याः।
कस्याश्चित् स्वस्तरुण्या निकटगतनिजप्राणनाथोपगीता
कीर्त्तिज्योत्स्ना त्वदीया क्षणमकृत मुदं श्रीनृसिंह क्षितीन्द्र॥

इदं निरवयवं केवलमेकवारमेव निरूपणात्। निरवयवं मालया यथा

कलानामालम्बः कुसुमविशिखस्य प्रतिकृतिः
क्षितेः क्षेमं लक्ष्म्याः शरणमरणिः क्षात्रमहसः।

---

'अनपह्नुतरूपस्य विषयस्योपरञ्जनम्।
भवेद्विषयिणा यत्र रूपकं तत् प्रकीर्त्यते॥'

तद्विभजते। इदं त्विति। निरवयवादिसंज्ञाः स्वयमेव व्युत्पादयिष्यति। ननु अन्येऽपि समस्तव्यस्तादिभेदाः सन्ति कथमष्टैव निष्टङ्किता इत्याशङ्क्याह। व्यस्तेति। अथ संज्ञाव्युत्पादनपूर्वमेकैकश उदाहरणान्याह। तत्रेति। यत्रावयवव्येव रूप्यते नावयवास्तन्निरवयवम्। तदेकं चेन्निरवयवकेवलरूपकमित्यर्थः। हेमाद्रेरित्यादि। गतमेतत्। अत्र कीर्त्तिरेव ज्योत्स्नेत्येकवारमवयविन एव रूपणान्निरवयवं केवलमित्याह। इदमिति। कलानामिति। कलानां विद्यानामालम्ब आधारः। प्रतिकृतिः प्रतिनिधिः। क्षेममिति। क्षेम-

---

१ द्वेधा द्विविधं तु D. २ तदेवमेव भेदा° T. ३ °त्रावयवेभ्यो° T., C., M. ४ रूपणात् T. ५ प्रतिनिधिः T., C., M. ६ क्षात्रमहसाम् D. ७ °त्नित्यादि K. ८ तत्रावयवत इत्यादि D. ९ निरवयवं D. १० गतार्थम् D. ११ °रवयवं D. १२ °मित्यादि K.

विलासो भारत्याः सुकृतपरिपाकः प्रणयिनां
खर्लूरी[1] सौख्यानां जयति नरसिंहक्षितिपतिः ॥

इदं निरवयवं मालया । एकस्यानेकधा निरूपणात्[2] । समस्तानि वस्तूनि विषयो यस्येति[3] समस्तवस्तुविषयं सावयवं यथा ।

यत्र द्वीपस्तुषारक्षितिभृदुडुगणो मौक्तिकानां निकायः
शैवालं व्योम शङ्खः कुमुदकुलगुरुर्धाम सान्ध्यं प्रवालः ।
यूथं दिक्कुञ्जराणां करिमकरकुलं किं च कृष्णः कृपाण-
स्त्वत्कीर्त्तिक्षीरवार्धिः स जयति जगति श्रीनृसिंहक्षितीन्द्र ॥

इदं सावयवम् । वार्ध्यवयवानामपि द्वीपादीनां रूपणात् । एकदेशे विशेषेण वर्त्तत इत्येकदेशविवर्त्ति सावयवं यत्रैकं[4] रूपकं कृतं सदकृतमपि रूपकान्तरं सामर्थ्याद्गमयति[5] । यथा

भुवः केलीतल्पं जयति नरसिंहक्षितिभुजो
भुजः शौर्यक्रीडाडमरसमरारम्भलटहः ।
नवप्रेयोलाभप्रमुदितसमस्ताम्बरचरी-
विकीर्णैर्मन्दारैर्विततमुपहारं भजति यः ॥

---

दूरे क्षेमस्योपचारः । शरणं गृहम् । अरणिरग्निमन्थनदारु । क्षात्रमहसः क्षात्रतेजसः प्रतापाग्नेरित्यर्थः । प्रणयिनामर्थिनाम् । खर्लूरी औषधमर्दनशिला । अत्र क्षितिपतेरवयविन एवैकस्यानेकधा निरूपणान्निरवयवमालारूपकमित्याह । इदं निरवयवं मालयेति । यत्रावयव्यवयवाश्च कार्त्स्न्येन रूप्यन्ते तत् समस्तवस्तुविषयं सावयवरूपकमित्याह । समस्तेति । यत्रेत्यादि । स्पष्टम् । कृष्णो विष्णुः । विवर्त्ति विपरिणामीति व्युत्पत्तिं दर्शयति । विशेषेण वर्त्तत इति । एतदेव व्यनक्ति । यत्रैकमिति । यत्रावयवावयविनामन्यतमरूपणादन्यस्य रूपणं गम्यते तदेकदेशविवर्त्ति सावयवरूपकमित्यर्थः । भुव इति । लटहः प्रौढः । गतमेतत् । अथ केली-

---

१ खदूरिः D. २ रूपणात् T., G. ३ विषयोऽस्येति D. ४ अत्रैकं T., C., M. ५ सामर्थ्याद्दर्शयति T. ६ खदूरिरौषध° D. ७ इत्यादि K.

इह दोष्णः केलीतल्पत्वेन रूपणाद्भुवो नायिकात्वेन रूपणं गम्यते। परम्परा जातास्येति परम्परितं श्लिष्टशब्दनिबन्धनं केवलं यथा।

किं वर्ण्यसे वीर कलिङ्ग भूप
विलासिनीमानसराजहंस।
भवन्ति यत्कान्तिसुधापयोधेः
पयो मनुष्या नलकूबराद्याः॥

अत्र वीरनरसिंहभूपस्य राजहंसत्वेन रूपणं मनसः सरस्त्वेन रूपणं प्रति निमित्तम्। तच्च मानसमेव मानसमिति श्लिष्टेनैव शब्देन कृतमिति श्लिष्टशब्दनिबन्धनं परम्परितमिदम्। केवलमेकवारमेव रूपणात्।

---

तल्पस्य नायिकाशयनधर्मकत्वादवयविरूपणादवयवरूपणं गम्यत इत्यभिप्रायवानाह। इह दोष्ण इति। उपलक्षणमेतत्। 'विगलन्मधुव्रतकुलाश्रुजलं न्यमिमीलदब्जनयनं नलिनी॥' इत्यत्राब्जनयनाद्यवयवरूपणान्नलिनीनायिकेत्यवयविरूपणं गम्यते। तथा 'निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका॥' इत्यत्र वियदालयादपरदिग्गणिकेत्यत्रावयवावयविरूपणाद्रविमित्यत्र विटमित्यवयवान्तररूपणं गम्यत इत्याद्यूह्यम्॥

अथ परम्परितभेदान् निरूपयितुं परम्परितशब्दार्थमाह। परम्परेति। तारकादित्वादितच्प्रत्ययः। यत्र रूपकद्वयं हेतुहेतुमद्भावेन स्थितं तत् परम्परितं तद्यदि श्लिष्टशब्देन सकृत् कृतं तदा श्लिष्टकेवलपरम्परितमित्यर्थः। तदुदाहरति। किमित्यादि। अत्र राज्ञो राजहंसत्वेन रूपणस्यान्यथानुपपत्तेर्मानसमेव मानसमिति

---

१ क्रीडातल्प° G. २ °नायिकात्वरूपणं T. ३ नाथ T. ४ °नृसिंह° T., C, M. ५ 'केत्यवयविरूपणा° K. ६ इत्यूह्यम् D. ७ परम्परा सञ्जातेति K. ८ °मनाय इति भावः K.

श्लिष्टशब्दनिबन्धनं परम्परितं मालया यथा

रविः पद्मोल्लासे कुवलयविकासे हिमकरः
क्षमाभृत्पक्षालीदलनपरिहासे हरिहयः ।
अशाम्यद्दानाम्भःप्रसरणविलासे करिपति-
र्न केषामासेव्यः स भवति कलिङ्गेश्वर भवान् ॥

अत्र राज्ञो रवित्वादिरूपणं पद्मायाः उल्लास एव पद्मस्योल्लास इत्यादिरूपणकारणम्[1] ।

अश्लिष्टशब्दनिबन्धनं परम्परितकेवलं[2] यथा

वीर नरसिंह[3] भूप प्रतिभटविषधरगरुत्मता भवता ।
एष कमलासहायश्चित्रं हृदयेन धार्यते भगवान् ॥

अत्र वीरनरसिंहस्य गरुत्मत्वरूपणहेतुकं प्रतिभटानां विषधरत्वं[4]-रूपणमित्यश्लिष्टशब्दनिबन्धनमिदं[5] केवलं सकृदेव निरूपणात्[6] ।

अश्लिष्टशब्दनिबन्धनं मालया यथा

यशस्त्रिदशवाहिनीहिमगिरिः प्रतापातप-
प्रथाप्रथमभूधरः प्रतिबलाब्धिमन्थाचलः[7] ।

श्लिष्टरूपकप्रवृत्तिहेतुत्वादिदं श्लिष्टपरम्परितरूपकं तच्चैकाकित्वात्[8] केवलं चेत्याह । अत्रेति[9] । श्लिष्टमालापरम्परितमुदाहरति । रविरिति । पद्माया उल्लासः स एव पद्मस्योल्लासः । कुवलयं भूवलयं तदेव कुवलयमिन्दीवरम् । क्षमाभृत्पक्षा राजवर्गास्त एव क्षमाभृत्पक्षाः पर्वतगरुतः । परिहासो विनोदः । दानं द्रव्यप्रतिपादनं तदम्भ एव दानाम्भो मदोदकम् । अत्रैकस्यैव राज्ञोऽनेकधा श्लिष्टपरम्परितरूपणाच्छ्लिष्टमालापरम्परितमित्याह । अत्र राज्ञ इति । अश्लिष्टकेवलपरम्परितमुदाहरति । वीरेत्यादि । हृदयेनेति । न तु स्कन्धेनेति व्यतिरेक इति भावः । अश्लिष्टमालापरम्परितमुदाहरति । यश इति[10] । प्रताप एवातपस्तस्य प्रथा प्रथनमावि-

१ इतिरूपण° T., इत्यादिनिरूपण° M. २ केवलं परम्परितं T., C., M. ३ °नृसिंहस्य G., M. ४ विषधररूपण° D, ५ T. drops इदम् ६ °रूपगात् C., M. ७ प्रतिभटाब्धि° T. ८ तस्यैकाकि° K. ९ अत्रेत्यादि K. १० इत्यादि K.

पराक्रममहामदद्विरदकेलिविन्ध्याचलः
गुणौघमणिरोहणो विजयते कलिङ्गेश्वरः ॥

इदमश्लिष्टशब्दनिबन्धनं मालया। अनेकशो रूपणात्।

इदं तु वैधर्म्येणापि संभवति।

त्यागस्तावत् सुरतरुयश इत्यादि ॥[1]

यत्र व्यस्तं रूपकं तत्र न विप्रतिपद्यामहे। यत्र समस्तं तत्रोपमारूपकयोः साधकबाधकप्रमाणसद्भाव एवान्यतरनिश्चयकारणम्। तत्रोपमायाः परिग्रहे साधकं यथा

शरासनमिदं नमस्तव विलोक्य लोकोत्तरं
पिनाकमिव दानवास्तुहिनरश्मिचूडामणेः।
अमी रिपुमहीभृतो युधि कलिङ्गपृथ्वीपते
सरत्नविरुदाङ्गदं तव नमन्ति पादाम्बुजम् ॥

---

भावस्तस्याः प्रथमभूधर उदयाद्रिः। परं तु स्पष्टमेव। तदेवं प्रवर्तकविषयत्वेन परम्परितमुक्तम्। क्वचिन्निवर्तकविषयत्वेनापि दृश्यत इत्याह। इदं त्विति। वैधर्म्येण व्यतिरेकेणेत्यर्थः। त्याग इत्यादि। यथा गङ्गादिप्रवर्तकत्वेन हिमगिरित्वादिरूपणं कृतं प्रागत्र तु यशःकौमुद्यादिनिवर्तकत्वेन त्यागादीनां कालमेघत्वादिना[2] रूपणमिति वैधर्म्येणेत्युक्तम्[3]।

तदेवं रूपकमष्टधा निष्टङ्क्य संप्रति प्रसङ्गात् समस्तरूपके किञ्चिन्मीमांसितुमारभते। यत्र व्यस्तमिति[4]। समस्ते तु समासस्योभयसाधारणरूपत्वादुपमारूपकयोर्यस्य साधकं प्रमाणमस्ति तस्य परिग्रहोऽर्थादितरस्य त्यागः[5]। यस्य तु बाधकं तस्य परित्यागोऽर्थादितरस्य स्वीकार इत्याह। यत्र समस्तमिति[6]। तत्रोपमास्वीकारे साधकमुदाहरति। शरासनमिति[7]। रत्नखचितं यद्विरुदाङ्गदं विरुदाङ्कितकटकं तेन

---

१ C. inserts यथा before त्यागस्ताव° २ कालमेघादिरूपण° D. ३ वैधर्म्येणोक्तम् D.
४ °मित्यादि K. ५ °दितरत्याग. K. ६ °मित्यादि K. ७ °मित्यादि K.

इह रत्नविरुदाङ्गदसंबन्धः पादे संभवतीत्युपमां प्रत्यनुगुणतां भजते। अम्बुजे तु न संभवतीति न रूपकं प्रत्यनुगुणता। बाधकं यथा

शोषिताशेषदुर्वारवैरिस्त्रीजनमानसः
नृसिंह भूपते[1] भाति प्रतापतपनस्तव ॥

अत्र शोषिताशेषदुर्वारवैरिस्त्रीजनमानसत्वलक्षणसाधारणधर्मोपादानमेव प्रतापस्तपन इवेत्युपमायाः शङ्कामपाकरोति। "उपमितं व्याघ्रादिभिः—"[2] इत्यादिना सूत्रेण सामान्याप्रयोग एव तस्याः प्रादुर्भावात्।

रूपकपरिग्रहे साधकं यथा

यस्यानिशं दिविषदश्चरणारविन्द-
मुत्तंसयन्त्यमितभक्तिभरावनम्राः।
देवः सुधाकरकिशोरकचारुचूडः
स श्रेयसेऽस्तु भवतो नरसिंह देव[3] ॥

अत्रोत्तंसनमरविन्देन क्रियते न पुनश्चरणेनेति रूपकपरिग्रहे[4] उत्तंसनमेव साधकं प्रमाणम्।

---

सहेति तथोक्तम्। अत्र पादाम्बुजमित्युपमास्वीकारे साधकमुद्भिनत्ति। इहेति। तेनेह व्याघ्रादीनामाकृतिगणत्वात् "उपमितं व्याघ्रादिभिः–" इत्यादिनोपमितसमास आश्रयणीय इत्यर्थः। उपमाबाधकमुदाहरति। शोषितेति[6]। मानसं मनः सरोविशेषश्च। बाधकमुद्भावयति। अत्रेति। समानधर्मोपादानस्य बाधकत्वे हेतुमाह। उपमितमिति। व्याघ्र इव शूर इति प्रत्युदाहरणादिति भावः। यस्येति[8]। स्पष्टम्।

---

१ नृपते C., M. २ व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रेण T. ३ भूप T., C., M. ४ रूपकत्वपरिग्रहे C., M. ५ D. omits अत्र. ६ उपमाया बाधक' K. ७ °तेत्यादि K. ८ °स्येत्यादि K.

यथा वा

तल्पेषु कल्पद्रुमपल्लवानां
निषेदुषीभिः सुरसुन्दरीभिः।
त्वत्कीर्तयो वीर कलिङ्गनाथ
मनःकुरङ्गं रजयन्ति गीताः॥

इह रञ्जेरनुषङ्गलोप एव रूपकं प्रत्यनुकूलतामालम्बते न तूपमां प्रति। तस्यैतां प्रति प्रतिकूलत्वात्। यदाह दुर्गसिंहः। रञ्जेर्मृगरमण इत्यनुषङ्गलोपः। यत्र पुनरन्यतरपरिग्रहे साधकबाधकप्रमाणविरहस्तत्र संदेहसंकरः। यत्रारोपविषयं विनैव रूपणं क्रियते तत्र दोष एव। यथा

एतस्मात् समरस्थलं कलयत श्लाघ्यं कालिङ्गेशितुः
सैन्यैर्यत्र पुनश्च पाण्डवचमूसंरम्भसंभावनाः।

रूपकसाधकस्यैवोदाहरणान्तरमाह। तल्पेष्विति। सुरसुन्दरीभिर्गीतास्त्वत्कीर्तय इत्यन्वेतव्यम्। अत्रापि रूपकसाधकमुद्घाटयति। इह रञ्जेरिति। अनुषङ्गलोपोऽनुनासिकलोपः। तस्यैतां प्रतीति। तस्यानुषङ्गलोपस्य एतामुपमां प्रतीत्यर्थः। प्रतीतितुल्ये हेतुमाह। यथा हीति। अनुषङ्गलोपमाहेत्यन्वयः। इह मृगरमणे ह्यनुषङ्गलोप उक्तः। तत्र मन एव कुरङ्ग इति रूपके मृगरमणं भवति। कुरङ्ग इव मन इत्युपमितसमासे तु मनोरमणं स्यान्न मृगरमणमित्यनुषङ्गलोप एव नोपमां सहते। ततो "मयूरव्यंसकादयश्च" इति रूपकसमास आश्रयणीयः। तेषामाकृतिगणत्वादित्यर्थः। रूपके बाधकं तु 'मुकुलितनयनैर्मुखारविन्दैर्घनमहतामिव पक्ष्मणां भरेण' इत्यत्र मुखैरेवारविन्दैरिति रूपकपरिग्रहे मुकुलितनयनैरिति विशेषणं बाधकम्। अरविन्दानां नयनसंबन्धायोगात्। ततः पारिशेष्यात् व्याघ्रादित्वादुपमितसमास इत्यापन्नम्। यत्र त्वन्यतरनिश्चायकप्रमाणाभावस्तत्र संदेहसंकरः। यथा 'पाणिपल्लवविधूननमन्तः' इत्यादावित्यभिप्रेत्याह। यत्र पुनरिति। यत्र रूपके निर्विषयारोपः क्रियते स दोष एवेत्याह। यत्रारोपेति। एतादिति। कलयतेति प्रैषे लोट्। यत्र समरस्थले सैन्यैः कर्तृभि-

१ रञ्जेर्णौमृग° T. २ °रमणे उपसंख्यानमित्य° T. ३ कलयतः T., C., G., M., D.
४ यथा वा तल्पेष्विति K. ५ इत्यन्वयः K.

दिक्कान्ताकुचकुम्भकेलिपुलकैर्बाणैः कृपाणैरपि
क्रीडाकृष्टकरालकालरजनीचक्रैश्चिरं चक्रिरे ॥

इह कुचकुम्भविषयो नोपात्तः ।

यत्र त्वारोप्यमाणस्य विषयिण एकत्वेऽपि बहुत्वं तत्र न दोषः । विषयेषु प्रत्येकमारोपात् । यथा मुखेन्दव इति ॥

**तं परिणामं द्विविधं कथयन्त्यारोप्यमाणरूपतया ।**
**परिणमति यत्र विषयः प्रस्तुतकार्योपयोगाय ॥७॥**

बाणैः कृपाणैरपि करणैः पाण्डवचमूसंरम्भसंभावनाश्चक्रिर इत्यन्वयः । अत्र दोषां तामुद्घाटयति । इह कुचकुम्भेति । दिक्कान्तानां प्रसिद्धकुचासंभवात् । कश्चिच्छैलादिविषये कुचकुम्भत्वमारोप्यम् । न चेह कश्चिद्विषय उपात्त इति दोष-प्रायमित्यर्थः । लोके प्रसिद्धैकाङ्गिभावस्याप्यनेकेष्वारोप्यमाणस्यैकस्य वस्तुनोऽने-कत्वेन निर्देशो न दोषः । आविष्टलिङ्गत्ववदाविष्टसंख्याकत्वानियमाभावादित्याह । यत्र त्विति । अदोषत्वे हेतुमाह । प्रत्येकमिति । न हि मुखेन्दव इत्यत्र मुखसमुदाये चन्द्रस्यारोपः किं तु प्रतिमुखं ततो विषयबहुत्वारोपः । विषयिणि बहुत्वव्यपदेशो न विरुध्यते प्रतिमाचन्द्रवत् । बुद्धिपूर्वकत्वं तु विशेष इति भावः ॥

रूपकम् ॥

तदेवमारोपमूलेषु प्रकृतोपरञ्जकतया रूपकं निरूप्य तद्वैधर्म्येण प्रकृतोपयोगि-तया परिणामं लक्षयति । तमित्यादि । यत्र प्रकृतकार्योपयोगितया विषयो विषय्यात्मना परिणमति स परिणामालंकारः । स च वक्ष्यमाणभङ्ग्या द्विविध इत्यर्थः । ननु विषयस्य विषय्यारोपणाविशेषात् को विशेषो रूपकपरिणामयो-

१ दोष एवायमित्यर्थः D. २ लोकप्रसिद्धै° D. ३ °नेकेषामारोप्य° D. ४ परिणमते K. ५ विषय्याकारारोपणा° D.

एष न रूपकम्। आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे रूपकस्य जागरूकत्वात्। यत्रारोपविषयः प्रकृतकार्यसिद्ध्यर्थमारोप्यमाणात्मतया परिणमति तत्र यथार्थाभिधानः परिणामः। सामानाधिकरण्यवैयधिकरण्याभ्यां भवन्न द्वैविध्यमतिक्रामति।

यथा

अमरनगरीसौधोत्सङ्गाधिरोहमहोत्सव-
 व्यतिकरधुराधौरेयाणामरातिमहीभुजाम्।
मरकतमयी निश्रेणिस्त्वत्कृपाणलता कवीन्
 कति न कुरुते श्लाघाव्यग्रान् कलिङ्गपुरन्दर॥

अत्रारोप्यमाणनिश्रेणिरूपतया परिणमन्ती कृपाणलता प्रकृतममरनगरीसौधोत्सङ्गाधिरोहणं कार्यं प्रत्युपयोगितां भजते।

---

रित्याशङ्क्याह। एषं न रूपकमिति। कुत इत्याशङ्क्य रूपके भेदमाह। आरोप्यमाणस्येति। परिणामे विशेषमाह। यत्रारोपविषय इति। आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे रूपकं प्रकृततादात्म्येन प्रकृतोपयोगित्वे परिणाम इत्यर्थः। यथाह सर्वस्वसंजीवनीकारश्चक्रवर्ती

'विषय्याकारमारोप्य विषयस्थगनं यदा।
रूपकत्वं तदा तत्र रञ्जनेन समन्वयः॥
यदा तु विषयो रूपात् स्वस्मादप्रच्युतो भवेत्।
उपयुक्त्यै पराकारः परिणामस्तदा मतः॥' इति।

पूर्वोद्दिष्टं द्वैविध्यं दर्शयति। सामानाधिकरण्येति। अमरेति। व्यतिकधुरा संपर्कभारः। 'ऋक्पूर-' इत्यादिनाम् अप्रत्ययः समासान्तः। धुरं वहतीति धौरेयः। "धुरो यड्ढकौ" इति ढक्प्रत्ययः। श्लाघाव्यग्रान् प्रशंसोत्सुकान्। लक्ष्ये लक्षणं पातयति।

---

१ °रञ्जकत्वेन T., C. २ °रोहसदुत्सव° D. ३ °महीभृताम् T. ४ निःश्रेणि° T. ५ °निःश्रेणि° T., ६ K. omits एष. ७ भेदकमाह K. ८ संजीविनीकार°. K. ९ °रेयादि K. १० °दिना समासान्तः K. ११ °णमापातयति K.

राजन् नृसिंह भवतः समरोत्सवेषु
धूलिभिरन्धतमसं सपदि व्यधायि ।
निस्त्रिंशकृत्तशिरसाममरत्वभाजां
स्वर्गाङ्गनासुरतकेलिषु शात्रवाणाम् ॥

अत्रारोप्यमाणान्धतमसरूपतया परिणतानां धूलीनां प्रस्तुतसुरतोपयोगित्वम् ॥

**किंसलयति[1] कविः प्रतिभावशतः प्रकृतार्थभित्तिकं यत्र ।**
**संशयमप्रकृतेऽर्थे संदेहोऽयं समाख्यातः ॥ ८ ॥**

यत्र सादृश्यदर्शनात्[2] स्वप्रतिभावशेन वर्णनार्थं कविः संदेहमुपनिबध्नाति तत्र प्रकृतस्य संदिह्यमानत्वादन्वर्थोऽयमलंकारः । न तु स्थाणुर्वा स्यात् पुरुषो वा स्यादितिवत् स्वैरसप्रवृत्ते संदेहे[3] इत्याशयेनाभिहितं प्रतिभावशत इति ।

---

अत्रेति । द्वितीयमुदाहरति । राजन्निति[4] । अन्धं तमोऽन्धतमसं गाढध्वान्तम्[5] । "अवसमन्धेभ्यस्तमसः" इति समासान्तोऽच्प्रत्ययः । धूलीभिरन्धतमसं व्यधायि धूल्योऽन्धतमसत्वेन परिणता इत्यर्थः । धूलिभिरिति वैयधिकरण्यम्[6] । अत्रापि लक्षणार्थं योजयति । अत्रेति ॥

परिणामः ॥

अथारोपप्रस्तावादभेदप्राधान्य[7] एव संदेहालंकारं लक्षयति । किसलयतीति[8] । कविप्रतिभोत्थापितसादृश्यनिबन्धनः प्रकृताप्रकृतगोचरः संदेहः संदेहालंकार इति लक्षणार्थ इत्याह । यत्रेति । प्रतिभावशात इति विशेषणस्य व्यावर्त्यमाह न त्विति । अयं तु त्रिविधः निश्चयान्तः शुद्धः निश्चयमध्यश्चेति । तत्राद्य-

---

१ कलयति T. २ °दर्शनवशात् D.; °वर्णनात् C., M. ३ स्वरसप्रवृत्तसंदेहे C; स्वरसप्रवृत्तत्वेन संदेहे T.; स्वरसप्रयुक्तसंदेहे M. ४ °न्नित्यादि K. ५ गाढं ध्वान्तम् D. ६ °रण्ये D ७ °प्रस्तावात्तदभेद° K. ८ ° तीत्यादि K.

यथा[1]

कान्तः किं कैरविण्याः कलयति कमलोल्लासने नैष शक्तिं
नाथः किं वासराणामुदयति कुमुदे नैष लक्ष्मीं वितन्वन् ।
किं कृष्णो न द्विजानामधरयति पतिं भूयसोक्तेन किं वा
ज्ञातः पश्चान्नृसिंहक्षितितलतिलक त्वं विचित्रैश्चरित्रैः[2] ॥

अत्र चन्द्रादिरूपतया संदिह्य ज्ञातस्त्वमिति निश्चयः कृत इति निश्चयान्तः संदेहः । किं चैष[3] निश्चयसाधककमलोल्लासनादिपदद्योतनीयव्यावर्त्तकांशगतश्लेषमूलाभेदाध्यवसायरूपातिशयोक्त्यनुप्राणितोऽत्र वर्त्तत इत्यनयोरङ्गाङ्गिभावेन संकरः । भूयसोक्तेन

---

मुदाहरति । कान्त इति । कमलाया उल्लासनं कमलस्योल्लासनं च । कुमुदे कौर्भुवो मुदे मोदाय अन्यत्र कुमुदे कैरवे । कृष्णो विष्णुर्द्विजानां पतिं ब्राह्मणोत्तमं पक्षिराजं च । अधरयत्यवधीरयत्यधिरोहति च । किं भूयसोक्तेनेति अलमतिबहूक्तेनेत्यर्थः । विचित्रैश्चरित्रैरन्येष्वसंभावितैरसाधारणैर्गुणैरित्यर्थः । इह संदेहस्य निश्चयान्तत्वं व्यनक्ति । अत्रेति । अभ्युच्चयत्वेनालंकारविशेषमिहोन्नावयति । किं चेति । इह संदेहभेदस्य निश्चयान्तत्वेन विच्छित्तिविशेषस्तावद्विवक्षितः । निश्चयान्तत्वं च सति निश्चये । स च व्यावर्त्तकधर्मायत्तः । स चेह कमलोल्लासनादिः । अत्र कमलस्योल्लासनं चन्द्राद् व्यावर्त्तकं । तच्च प्रकृते राज्ञि न संभवति । यत्तु संभवति कमलाया उल्लासनं न तद् व्यावर्त्तकम् । तथापि तस्य व्यावर्त्तकाभेदाध्यवसायरूपातिशयोक्तिमहिम्ना व्यावर्त्तकत्वे ततो निश्चयान्निश्चयान्तः संदेह इत्यस्यानया श्लेषमूलातिशयोक्त्या[4] द्रव्यदेवतावत् संनिपत्योपकारितयाङ्गाङ्गिभावेन संकर इत्यर्थः । न केवलं संकरः किं तु संसृष्टिरपीत्याह । भूयसेति । साम्यविषये क्वचिच्चन्द्रादिकमुक्त्वा वक्तव्यान्तरस्याहृत्या निषेधाद्वक्ष्यमाणविषयेऽभिधेयांशोक्तावंशान्तरनिषेधरूप[6] आक्षेपभेदस्तेन सहास्य संसृष्टिरित्यर्थः । इहालं-

---

१ D. drops यथा. २ चरित्रैर्विचित्रैः T., O., M., G. ३ किं चायं G.; किं च निश्चय° D. ४ °श्लेषमूलातिशयोक्त्य° T. ५ अलमतिबहूक्त्या K. ६ °द्वक्ष्यमाणविषयांशोक्तावंशान्तरनिषेध° D.

किं वेति वाक्याभिहितेनाक्षेपालंकारेण सह संसृष्टिरपि । तेन चाक्षेपालंकारेण निर्दिष्टेष्वन्येषु वा त्रिदशेष्वपि कोऽपि न तेऽस्ति तुल्य इति व्यतिरेको व्यज्यते । अयं च संदेहः शुद्धोऽपि संभवति यत्र संशय एव पर्यवसानम् । क्वचिदारोप्यमाणानां भिन्नाश्रयत्वेऽपि दृश्यते । यथा

किं निम्नेषु समीकृता वसुमती शैलाः किमुत्सारिताः
किं प्रक्षालितमम्बरं धवलिताः किं[1] वा वनश्रेणयः ।
अप्येताः कवलीकृताः किमु दिशः सर्वाः किमेकीकृताः
कीर्त्या वीर नृसिंह भूप[2] भवतः सप्तापि पाथोधयः ॥

अत्रारोपविषयभूतायां कीर्त्तावारोप्यमाणानि[3] समीकरणादीनि वसुमतीप्रभृतिभिन्नाश्रयगतत्वेनोपनिबद्धानि ॥

---

कारेणालंकारध्वनिमप्याह । तेन चेति । अथ शुद्धभेदमाह । शुद्धोऽपीति । एवं धर्मिणि धर्म्यन्तरारोपेण भेधा संशय उक्तः । अथैकस्मिन् धर्मिणि नानाविषयानेकक्रियारोपेण भेदान्तरमाह । क्वचिदारोप्यमाणानामिति । किमित्यादि । कवलीकृता मिश्रीकृता एकत्रेलीकृता इत्यर्थः । अत्रारोप्यमाणानां भिन्नाश्रयत्वं व्यनक्ति । अत्रेति । इह कीर्त्तौ विषयभूतायामारोप्यमाणानां कीर्त्येककर्तृकाणां समीकरणाद्यनेकक्रियाणां वसुमत्याद्यनेककर्मकत्वमेव भिन्नाश्रयत्वम् । अयं भावः । प्रायेण क्रियाभेदे[4] कारकैक्यं यथा 'सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्' । तथा कारकभेदे तु क्रियैक्यं यथा 'अस्तशैलगहनं नु[5] विवस्वानाविवेश जलधिं नु महीं नु' इत्यादि । अत्र तूभयमपि भिन्नमिति विशेष इति ॥

संदेहः[6] ॥

---

१ किं वाम्बुदश्रेणयः C., M. २ देव C., M. ३ T. inserts तव before कीर्त्त्यां.° ४ क्रियाया भेदे K, ५ °गहनानि नु भास्वानाविवेश D. ६ K. omits संदेहः.

वस्त्वन्तरप्रतीतिर्विलसति सादृश्यहेतुका यत्र ।
तं भ्रान्तिमन्तमेतं[1] ब्रुवतेऽलंकारपारदृश्वानः ॥१॥

अतस्मिंस्तदिति प्रत्ययो भ्रान्तिः । सो[2] विद्यते यस्मिन्निति[3] भ्रान्तिमान् । नायं स्मरणम् । तत्तांशस्पर्शिज्ञानरूपतया स्मरणस्याङ्गीक्रियमाणत्वात् । नापि संदेहः । विरोधस्फूर्तिपुरःसरतया परस्परविरुद्धकोटिद्वयनिविष्टज्ञानरूपत्वेन संदेहस्याभ्युपगम्यमानत्वात्[4] । न चैवमतिव्याप्तिः । प्रकृताप्रकृतत्वेन मिथो[5]विरोधिनी जानामीत्यादिवाक्यस्यालंकारतयानाद्रियमाणत्वात्[6] । इदन्तांशावच्छिन्नं[7] ज्ञानं हि[8] भ्रान्तिमतो विषयः ।

---

असम्यग्ज्ञानप्रस्तावात् संशयानन्तरं भ्रान्तिमन्तमाह । वस्त्वन्तरेति । कविकल्पितसादृश्यनिबन्धना भ्रान्तिर्यस्मिन् कृतिविशेषे[9] विद्यते[10] स भ्रान्तिमदलंकार इत्यर्थः । भ्रान्तेर्लक्षणमाह । अतस्मिन्निति । मत्वर्थमाह[11] । सोति । ननु सन्निकृष्टार्थगोचरा सादृश्यनिबन्धना स्मृतिरेवेयमिति स्मरणालंकारादभेदमाशङ्क्य तत्तामात्रोल्लेखिनी[12] प्रतीतिः स्मृतिरिदन्तोल्लेखिनी[13] तु भ्रान्तिरित्यनयोर्भेद इत्याह । नायमिति । तर्हीदन्तोल्लेखित्वाविशेषात् संदेहेऽतिव्याप्तिरित्याशङ्क्याह । नापीति । इदमिदं वेत्यनवधारणात्मा विरुद्धकोटिद्वयावलम्बी विमर्शः संशयः भ्रान्तिस्त्विदमेवेत्यवधारणात्मिका मिथ्याप्रतीतिरिति भेद इति भावः । एवं च सति द्वे इमे विरुद्धे इत्यादिज्ञानेषु संदेहशङ्का न कार्येत्याह । न चैवमिति । तस्मात् संदेहस्मरणाभ्यां विविक्तविषय एव भ्रान्तिमानित्याह । इदन्तेति ।

---

१ °मेनं C., M.; °मेवं D. २ स T. ३ यस्मिन्नयं M.; यस्मिन्नसौ O., G. ४ °गम्यमानत्वम् D. ५ प्रकृताप्रकृतत्वे मिथो° D. ६ °नाश्रीयमाणत्वात् C., M. ७ °च्छिन्नज्ञानं M. ८ C. and M. omit हि ९ भणितिविशेषे K. १० K. omits विद्यते. ११ अन्वर्थमाह D. १२ °ल्लेखनी D. १३ °ल्लेखनी D.

यथा

सुराङ्गनाभ्यो मलये त्वदीयं
श्रुत्वा यशो वीर नृसिंह भूप ।
जिह्वा[1]ञ्चलान्युल्ललयन्ति दुग्ध-
मृणाललोभादुभयेऽपि नागाः ॥

सादृश्येतरकारणाङ्कुरिता च[2] भ्रान्तिर्नास्यालंकारस्य गोचरः ।

कल्पान्तक्षुभ्यदम्भोभरतरलतरोदन्वदुत्तुङ्गरिङ्गत्-
कल्लोलश्रेणिहल्लीसकवलितामिव प्रेक्ष्यते क्षोणिचक्रम् ।
त्वत्खड्गोत्कृत्तवक्षःस्थलविवरवलत्प्राणवायुप्रयाण-
भ्राम्यच्चेतोभिराजौ प्रतिभटसुभटैः श्रीनृसिंह क्षितीन्द्र ॥

अत्र गाढतरमर्मप्रहारः कारणं भ्रान्तेः । संदेहानन्तरं तु[3] भ्रान्तिमतो निरूपणम[4]सम्यग्ज्ञानत्वसाधर्म्येण ।

**तत्तन्निमित्तभेदादेकमनेकैरनेकधा यत्र ।**
**उल्लिख्यते स धीरैरुल्लेखः कथ्यते[5]ऽन्वर्थः ॥ १० ॥**

इदमिति मिथ्यावधारणमित्यर्थः । उदाहरति । **सुराङ्गनाभ्य** इति । उभये नागाः सर्पा गजाश्च । तेषां यशसि सादृश्यादिदं दुग्धमिदं मृणालमिति च भ्रान्तेरि[6]ह वर्णनाद्भ्रान्तिमदलंकार इति ज्ञेयम् । **कल्पान्तेति**[7] । हल्लीसकं मण्डलाकारनृत्तविशेषः । 'यन्नृत्यं मण्डलाकारं तद्धल्लीसकमुच्यते' इति लक्षणात् । अत्र भ्रा[8]न्तिकारणमुद्भावयति । **गाढतरेति** । एतेनेदं रजतमित्यादिदोषजभ्रमाणामलंकारत्वं निराकृतमित्यनुसंधेयम् । अस्य संदेहानन्तर्ये कारणमाह । **संदेहानन्तरमिति** ॥

**भ्रान्तिमान्[9] ॥**

अतस्मिंस्तद्बुद्धिसाम्याद्भ्रान्तिमदनन्तरमुल्लेखं लक्षयति । **तत्तदिति**[10] । एक-

---

१ जिह्वाञ्चलं चञ्चलयन्ति D. २ T., C., and M. drop च. ३ T., C., and M. drop तु. ४ °मसत्यज्ञान° T. ५ कथ्यतेऽयमन्वर्थः C., M. ६ D. omits इह ७ °न्तेत्यादि K. ८ K. omits भ्रान्ति. ९ K. omits भ्रान्तिमान्. १० तत्तदित्यादि K.

अस्य न रूपके तावदन्तर्भावः । वस्तुनस्ताद्रूप्ये[1]ऽस्य प्रगल्भमानत्वात् प्रकृतोपरञ्जकत्वमात्रेण रूपकस्य चरितार्थत्वात् । नापि भ्रान्तिमति । अतद्रूपस्य तद्रूपताप्रतिभासेऽप्यनेकधोल्लेखलक्षणं विच्छित्त्यन्तरमुररीकृत्यास्य प्रवर्त्तमानत्वात् । नाप्यभेदाध्यवसायरू[2]पायामतिशयोक्तौ । एकस्यानेकप्रतिपत्तृकर्त्तृकत्वेनानेक[3]धोट्टङ्कितत्वात् । सर्वथा रूपकादेर्विभक्त एवास्य विषयः । यदि पुनः क्वचन तत्प्रतिभासस्तदानीमपि न विरोधः कश्चन । रूपकादिना [4]संहास्यैकवाचकानुप्रवेशलक्षणस्य संकरस्याभिमतत्वात् । तस्माद्यत्रैकस्या[5]नेकधोल्लेखः क्रियते तत्रोल्लेखालंकारः । अनेकधोल्लेख-

स्यानेक[6]निमित्तयोगादनेकैरनेकधोल्लेखनमुल्लेख इत्यर्थः । अन्यस्यान्यत्वेन रूपणाद्रूपकमेवेदमित्याशङ्क्याह । **अस्येति** । भेदकमाह । **वस्तुन** इति । विषयस्यारोप्यमाणतादात्म्यनिमित्तवैचित्र्यमुल्लेखः रूपके तु तदुपरक्ततामात्रनिमित्तमिति भेद इत्यर्थः । तर्ह्यस्य भ्रान्तिमत्यन्तर्भाव इत्याशङ्क्यैकधानेकधोल्लेखनाभ्यामनयोर्भेद इत्याह । **नापि भ्रान्तिमती**[7]ति । तर्हि भेदेऽभेदरूपातिशयोक्तावन्तर्भावः स्यादित्याशङ्क्य ग्रहीतृभेदाभेदाभ्यामनयोर्भेद इत्याह । **नाप्यभेदे**[8]ति । अनन्तर्भावं निगमयति । **सर्वथेति** । तादृग्विच्छित्तिविशेषसंभवादिति भावः । [9]एवं च सति यत्र [10]रूपकादेरप्यवभासस्तत्र संकरः न तु सर्वथास्याभावः । अन्यत्र विविक्तविषयसंभवादित्याह । **यदि पुन**[11]रिति । विविक्तविषयमेव निष्कृष्याह । **तस्मादिति** । एकस्यानेकधोल्लेखने योग्यता कथमत आह । **अनेकधेति** । अनेकेषामप्यारोप्य[12]माणानां ये धर्मा असाधारणगुणास्तेषां संबन्धः सद्भावः । स एवास्य[13]ानेकधोल्लेखनयोग्यतापादक इत्यर्थः । तथापि किमर्थमुल्लिखन्तीति

१ तद्रूपापत्तिभावे C., तद्रूपत्वापत्तिभावे M. २ °रूपातिशयोक्तौ° T. ३ °नेकधोद्दङ्कनात् T., G, ४ सहैक° T. ५ °स्यानेकैरनेकधो° C. ६ °दनेकैरनेकैरनेकधो° D. ७ °तीत्यादि K. ८ °देत्यादि K. ९ एवं सति K. १० रूपकादेरप्यन्तर्भाव° D. ११ °रित्यादि K. १२ अनेकेषामारोप्य° D. १३ °स्यानेकोल्लेखन° K.

निमित्तं त्वनेकधर्मसंबन्धः। तत्र रुच्यर्थित्वव्युत्पत्तयो यथायोगं प्रयोजिकाः। ततश्च यथासंभवं प्रवर्त्तमानरुच्यर्थित्वव्युत्पत्तिप्रयुक्तानेकधर्मसंबन्धरूपनिमित्तवशादेकमनेकैरनेकधोल्लिख्यत इति यौगिकत्वमप्यस्य संभवति।

यथा

न भवसि कथंकारं श्लाघ्यः कलिङ्गपुरन्दर
स्मर इति वरारोहाः साक्षान्मुकुन्द इतीन्दिरा।
सुरतरुरिति त्वां सेवन्ते निरन्तरमर्थिनो
भरतमुनिरित्यार्यास्तौर्यत्रयीनिपुणा अपि॥

अत्रैक एव कलिङ्गपुरन्दरस्तत्तत्सौन्दर्यादिगुणयोगात् स्मराद्यनेकरूपतया निरूपितः॥

## कलयति विषयेऽपह्नवमारोप्यं यत्र भासते सुतराम्।
## आहुरपह्नुतिमेतां बन्धच्छाया त्रयी चास्याः॥११॥

---

प्रतिपत्तिप्रवृत्तिप्रयोजकापेक्षायामाह। तत्रेति। रुचिरनुरागः अर्थित्वं लिप्सा व्युत्पत्तिः शब्दार्थसंगतिग्रहः आसां च रुच्यादीनां समासेन व्यासेन वा यथासंभवं प्रयोजकत्वमिति दर्शयन् लक्षणार्थं निष्कृष्याह। ततश्चेति। अन्वर्थ इत्युक्तं संग्रहे तद् व्यनक्ति। उल्लिख्यत इत्यादि। उदाहरति। नेति। अत्र स्मरमुकुन्दत्वोल्लेखनयो रुचिर्निमित्तं सुरतरुत्वोल्लेखनेऽर्थित्वं भरतमुनित्वोल्लेखने व्युत्पत्तिरित्यनुसंधेयम्। लक्ष्ये लक्षणं पातयति। अत्रेति।

उल्लेखः॥

अथारोपगर्भेषु परिशेषादपह्नवस्य लक्षणं विभागं चाह। कलयतीति। विष-

---

१ तत्र तु रुच्य° D. २ °प्रयुक्तत्वानेक° D. ३ °मनेकधोल्लिख्यत T., C, M. ४ °रने-कतयोल्लिख्यत D. ५ °प्रवृत्तिप्रयोजका° K. ६ अत्रेति K. ७ K. omits उल्लेखः.

अत्र प्रक्रान्तापह्नववैधर्म्येण निरूपणमेतस्योः। रूपकमा[2]रभ्यारोपक[3]क्ष्यागतालंकारविचारः प्रस्तुत इति। विषय आरोपस्य। अस्याश्च त्रयी बन्धच्छाया। तथा हि क्वचिदा[4]रोपविषयमपह्नुत्यारोप्यते विषयी। क्वचिद्विषयिणमारोप्यारोपस्यापह्नूयते विषयः। क्वचित् पुनरसत्यत्वाभि[5]धायिभिश्छला[6]दिभिः शब्दैरपह्नवो निर्दिश्यते। त[7]त्राद्यभेदद्वयं वाक्यभेद एव संभवति। तृतीयभेदे त्वेकवाक्यत्वम्। क्रमेण यथा

अश्रान्तस्यन्दमानोद्धुरमदलहरीसौरभोन्मेषहर्ष-
प्रेङ्खोलच्चञ्चरीकप्रकरपरिकरं दिग्गजाः किं वहन्ति।
किं त्विदमग्रं कलिङ्गेश्वर तव भुजयोश्चण्डिमानं विलोक्य
व्री[8]डाचिन्तावनम्रान् स्फुटमसितपटैश्छादयन्ति स्वहस्तान्॥

---

येऽपह्नवं कलयति भजति अपह्नुते सतीति यावत्। यत्रारोप्यमाणस्यारोपविषयापह्नवेनावभासनं सापह्नुतिः। सा च त्रिधा निबध्यत इत्यर्थः। अस्याः संगतिमाह। अत्र प्रक्रान्तेति। प्रक्रान्ता रूपकादयो नापह्नुतविषयाः। एषा त्वपह्नुतविषयेति वैधर्म्यलक्षणा संगतिरित्यर्थः। नन्वेषु विषयापह्नवस्य कः प्रसङ्गः अत आह। रूपकमारभ्येति। आरोपप्रस्तावाद् विषयापहारस्य प्रसक्तिरस्तीत्यर्थः। इति शब्दो हेत्वर्थे। संग्रहे विषय इत्युक्तं कस्येत्याकाङ्क्षायामाह। विषय आरोपस्येति। संग्रहस्थं विभागभागं विवरीतुमाह। अस्याश्चेति[12]। अपह्नुत्यारोपः आरोप्यापह्नवश्छलादिशब्दैरसत्यत्वप्रतिपादनं चेति त्रिविधोऽस्या बन्ध इत्यर्थः। अश्रान्तेति। चञ्चरीका भृङ्गा वहन्ति किं न वहन्तीत्यर्थः।

---

१ T., C. and M. insert उचितम् after एतस्याः २ °मारभ्य संप्रत्यारोप° T., C., M. ३ °कक्षागता° D. ४ °दारोपस्य विषय° D. ५ °भिधायिच्छलादि° C., M. ६ °श्छलादिशब्दै° T. ७ तत्राद्यं भेद° C. ८ व्रीलश्चिन्ता° T. ९ °स्यारोपस्य विषया° D. १० D. has पूर्व before प्रक्रान्ता. ११ विभागं D. १२ °श्चेत्यादि K. १३ °स्यां संबन्ध K.

अत्रापह्नवपूर्वक[1] आरोपः । मधुकरकुलमिदं न भवतीत्यपह्नवं विधाय नीलपटावगुण्ठन[2]रूपतयारोपस्य कृतत्वात् ।

पृथ्वीभारावतारं कृतवति भवतो दोष्णि हर्षेण दूतः
शेषेण प्रेषितोऽसौ निवसति भुजगः[3] कोऽपि संवादहेतोः ।
क्रुध्यत्कालीकटाक्षद्युतिदलनकलाकेलिकारस्त्वदीये
पाणौ नायं कृपाणः सकलगुणनिधे श्रीनृसिंह क्षितीन्द्र ॥

अत्रारोपपूर्वकोऽपह्नवः । फणधरपतिप्रहितोऽयं दूतभुजग इत्यारोपं विधाय न भवति कृपाण इत्यपह्नवस्य कृतत्वात्[4] । किं चात्रापह्नुत्या सकलरिपुवधूवैधव्यमचिरेण रणे भवता करिष्यत इति वस्तु प्रतीयते ।

वीरश्रीसिंहकान्ताविहरण[5]कनकक्ष्माधराकारबाहो
कीर्तिज्योत्स्नासुधांशो गुणमणिजलधे श्रीनृसिंह क्षितीन्द्र ।
प्रत्यग्रोदग्रजाग्रद्वदहनघनज्वालमालापदेशा-
द्देशाः शोकं वहन्ते निजपतिविरहाद्दुःखितास्त्वद्रिपूणाम् ॥

अत्रापदेशशब्देनापह्नवनिर्देशः कृतः । एकस्मिन्नेव वाक्येऽपह्नवाभिधायिभिश्छलादिशब्दव्यतिरिक्तैर्वपुर्भङ्गि[6]नामादिभिः शब्दैरपह्नवनिर्देशो द्रष्टव्यः[7] ॥

---

[8]अपरं सुगमम् । वीरेति[9] । वीरश्रीरेव सिंहकान्ता सिंहाङ्गना । देशा जनपदाः । निजपतिविरहात् स्वस्वामिनाशात् । इह लक्षणार्थं[10] योजयति । अत्रेति । छलादिशब्दैरपह्नवनिर्देश इत्युपलक्षणम्[11] । वपुर्भङ्ग्यादिशब्दैरपह्नवनिर्देशोऽप्येष भेदः स्यादेवेत्याह । अपह्नवाभिधायिभिरिति ॥

अपह्नुतिः[12] ॥

---

१ पूर्वं आरोपः T., M., ˚पूर्वारोपः C. २ ˚वकुण्ठन˚ T., C., M. ३ दूतो भुजग T. ४ विहितत्वात् T., C., M. ५ ˚केसरिण्या विहरण˚ T., C., M. ६ D. omits भङ्गि ७ ˚निर्देशोऽन्यत्र द्रष्टव्यः T., C., M. ८ इतः परं K. ९ ˚रेत्यादि K. १० लक्षणं D. ११ निर्देश इत्यंश इत्यु˚ K. १२ K. drops अपह्नुतिः.

**अप्रकृतत्वेन[1] स्यादध्यवसायो[2] गुणाभिसंबन्धात् ।**
**साध्यः प्रकृतस्य यदा कथितोत्प्रेक्षा तदा तज्ज्ञैः ॥ १२**

आरोपादध्यवसायस्य प्रकृष्यमाणत्वादत्र निरूपणं[3] समुचितमेतस्याः । अभिन्नत्वेन प्रतिभासनमध्यवसायः । स[4] द्विविधः सिद्धः साध्यश्च[5] । यत्र लक्ष्यमाणगुणसंबन्धाद् विषयिणो

---

तदेवमभेदप्रधानेष्वलंकारेष्वारोपमूलास्तावदुक्ताः । अथाध्यवसायमूलामुत्प्रेक्षां[6] तावल्लक्षयति । **अप्रकृतत्वेनेति** । अप्रकृतगुणक्रियाभिसंबन्धात् प्रकृतस्याप्रकृतत्वेन संभावनमुत्प्रेक्षेत्यर्थः । संगतिमाह । **आरोपादिति** । अप्रकृतगुणक्रियाभिसंबन्धाच्चमत्कारविशेषकारित्वं[7] प्रकर्षः । अध्यवसायस्य लक्षणमाह । **अभिन्नत्वेनेति** । विषयनिगरणेनेति शेषः । अन्यथारोपेऽतिव्याप्तेः । अत एव 'विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः' इति **सर्वस्वकारः** । इदं तावद्विवेक्तव्यम् । अध्यवसायो निश्चयज्ञानं स च सम्यङ् मिथ्या चेति द्विप्रकारो लोके यथा शुक्तावेव शुक्तिरियमिदं रजतमिति च । स द्विरूपोऽपि नालंकारः । चमत्काराभावात् । किं तु बुद्धिपूर्विकैवेयमतस्मिंस्तद्बुद्धिरन्यधर्मसंबन्धनिबन्धना[8] अयं पारिजात इत्यादि । सोऽयमलौकिको[9]ऽपरोऽध्यवसायः[10] इहालंकारमूलत्वेन विवक्षितस्तस्यैव लोकोत्तरचमत्कारकारणत्वात् । तं[11] विभजते । **स द्विविध इति** । तत्र सिद्धाध्यवसायस्य स्वरूपमाह । **यत्र लक्ष्यमाणेति** । **विषयगतत्वेनेति** । अयं पारिजात इति पुरोवर्तिविषयतादात्म्येनेत्यर्थः । नन्वन्यशब्दस्यान्यत्रप्रयोगे कः संबन्धोऽत आह । **लक्ष्यमाणगुणसंबन्धादिति** । लक्ष्यमाणा ये गुणा वितरणादयस्तद्योगादियं पुनर्लक्षितलक्षणेत्यर्थः । विवेचितं चैतद् द्वितीयोन्मेषे । तादात्म्यारोपणस्य फलमाह ।

---

१ अप्रकृतत्वेनान्यत्राध्यव° D. २ °सायोऽयं गुणा° D. ३ निरूपणमेतस्याः T.; निरूपणमुचितमेतस्याः C., M. ४ स च द्वि° M. ५ साध्यश्चेति T., M. ६ °मूलप्रस्तावे तत्र साध्याध्यवसायमूलामुत्प्रेक्षां K. ७ K. omits अप्रकृतगुणक्रियाभिसंबन्धात् ८ °संबन्धेन अयं D. ९ °किकोऽध्यव° १० °ध्यवसायः स इह° D. ११ K. omits तं.

विषयगतत्वेनारोप्यमाणत्वाद्भिन्नस्यापि विषयिणो विषयक्रोडी[1]-कारेण प्रवृत्तत्वादभिन्नत्वेन प्रतीतिस्तत्राध्यवसायः सिद्धः । एतदाश्रयेणातिशयोक्तेः प्रथमः प्रकारः कथयिष्यते । यत्र पुन-रुपात्तविषयत्वाद्विषयिणो भिन्नत्वेन प्रतिभानं[2] तत्र व्यञ्जनव्या-पारेणाभिन्नत्वप्रतीतेः साध्यमानत्वात् साध्यः । एतदवलम्बनेन प्रवर्त्तमानायाः पुनरस्याः संभावनमभिमानस्तर्क ऊहश्चेति पर्यायाः[3] ।

---

भिन्नस्यापीति । कथं भिन्नस्याभिन्नतया प्रतीतिसंभवस्तत्राह । क्रोडीकारेणेति । विषयस्य क्रोडीकारो निगरणमनुपादानमिति यावत् । यत्र विषयस्योपादानं तत्राध्यव-सायः साध्य इति वक्ष्यति । यत्र तु तस्यानुपादानं तत्र विषयिण एवोपादानमहिम्ना तस्य वस्तुतोऽसत्यस्यापि सत्यताप्रतीतौ विषयस्य तदात्मनाध्यवसितत्वादध्यवसित-प्राधान्ये ज्ञातो घट इत्यत्र घटं प्रति ज्ञानस्यैवाध्यवसायस्याध्यवसितं प्रत्युपसर्जनत्वं प्रतीयते । एतदेवाध्यवसायस्य सिद्धत्वं नाम । तदेतदाह । तत्राध्यवसायः सिद्ध इति । सिद्धाध्यवसायस्योपयोगमाह । एतदाश्रयेणेति । प्रथमः प्रकार इति । भेदेऽभेदरूप इत्यर्थः । इतरेषु भेदेष्वभेदाध्यवसायासंभवादिति भावः । अलंकारसर्वस्वकारस्तु तेष्वपि स्वतःसिद्धकविप्रौढोक्तिसिद्धातिशययोरभेदाध्य-वसायसंभवान्नाव्याप्तिरित्याह 'अत्र चातिशयाख्यं यत् फलं प्रयोजकत्वान्निमित्तं तत्राभेदाध्यवसायः' इत्यादिना संदर्भेण । अथ साध्याध्यवसाय[4]स्वरूपमाह । यत्र पुनरित्यादि । अभिन्नत्वप्रतीतेरध्यवसायस्येत्यर्थः । साध्यमानत्वात् प्राधान्येन प्रति-पाद्यमानत्वात् साध्योऽयमध्यवसाय इत्यर्थः । साधकमाह । व्यञ्जनव्यापारेणेति । अभिधायाः किं प्रतिबन्धकं तदाह । भिन्नत्वेन प्रतिभानमिति । तथा प्रतिभाने हेतुमाह । उपात्तेति । यत्र विषयविषयिणोर्द्वयोरुपादानं तत्र भेदवदवभासादभेदो[5] नावभासते । विषयिणोऽसत्यताप्रतीतेः । तथापि विषयस्य तया व्यपदेशात्तद्धर्मयो-गित्वाभ्यामभेदो[6]ऽध्यवसीयते संभाव्यत इति व्यापारप्राधान्याध्यवसायः साध्य-इत्यर्थः । अस्यो[7]त्प्रेक्षादिशब्दप्रवृत्तिनिमित्तत्वेनोपयोगमाह । एतदवलम्बनेनेति ।

---

१ °क्रोडीकरणप्रवृत्त° T. २ प्रतिभासनं D, M. ३ C. and M. have उदाहरणम् after पर्यायाः ४ साध्याध्यवसायस्य D. ५ भेदावभासाद° D. ६ °दोऽध्यवसीयते K. ७ तस्यो° D.

श्रीमन्नृसिंह नृपते भवतो यशोभिः
क्षीरार्णवं स्वपितरं परिभूयमानम् ।
उत्पश्यतः सितकरस्य कुरङ्ग एष
शोकाग्निधूम इव भाति तदात्मजस्य ॥

अत्र धूमत्वेनोत्प्रेक्षणे कुरङ्गस्य प्रवृत्तिनिमित्तं श्यामत्वं गुणो लक्ष्यमाणः । तदभिन्नत्वप्रतीतिः साध्या प्रयोजनम् । उपमोपक्रमादुत्प्रेक्षा यथा

स्वःसिन्धौ विबुधेन्द्रविभ्रमवने खे हाटकाद्रौ दिशां
कण्ठे वीर नृसिंह देव भवतः कीर्तेः परिस्फूर्तयः ।
डिण्डीरप्रकरन्ति फुल्लकलिकाभारन्ति तारावधू-
नाथांशुप्रसरन्ति निर्झरसरित्पूरन्ति हारन्ति च ॥

इयं च व्यञ्जकेवादिशब्दप्रयोगे वाच्या । तदप्रयोगे प्रतीयमाना चेति प्रथमं द्विविधा । द्विविधाया अपि गुणः क्रिया वा निमित्तं तच्च क्वचिदुपात्तं क्वचिदनुपात्तं च. । विषयोऽपि जातिगुणक्रियाद्रव्यतदभावरूपेणाष्टविधः । स च स्वरूपेण हेतुत्वेन फलत्वेन च यथायोगमुत्प्रेक्ष्यते । तदियं निमित्तविषयविशेषयोजनाभेदाद्बहुधा प्रपञ्चितेयमुत्प्रेक्षान्यत्र । अत्र तु दिङ्मात्रमुदाहरति । श्रीमदिति[6] । अत्र स्वपितरमित्यनेनैवात्मजत्वे प्रतीयमाने पुनरात्मजग्रहणं शोकातिशयद्योतनार्थम् । उत्प्रेक्षाया विषयमाह । अत्रेति । निमित्तमाह । प्रवृत्तीति । धूमशब्दस्य लक्षितलक्षणया कुरङ्गे प्रयोगं विवक्षन्नाह । गुणो लक्ष्यमाण इति । एतेनेयमुपात्तगुणनिमित्ता जातिस्वरूपोत्प्रेक्षेति द्रष्टव्यम् । लक्षणाप्रयोजनमाह । तदभिन्नत्वप्रतीतिरिति । सिद्धाध्यवसायव्युदासार्थमुक्तं साध्येति । उपमयोपक्रमो यस्यां सोपमोपक्रमा । स्वरिति । डिण्डीरप्रकरन्ति डिण्डीरप्रकरा इवाचरन्ति । "सर्वप्रातिपदिकेभ्यः" इत्युपमानादाचारार्थे क्विप् । "सना-

१ धूमस्योत्प्रेक्ष° C., M.  २ अभिन्नत्व° T., M., C.  ३ कर्णे C., M.  ४ तदिदं K.
५ °विषयविशिष्टनिमित्तयोजना° K.  ६ °दित्यादि K.  ७ K. drops पुनर्  ८ °ग्रहणार्थं K.
९ विवक्षन्नाह K.  १० स्वरित्यादि K.

अत्रोपमानत्वेनोपनिबद्धस्यापि डिण्डीरप्रकरादेः स्वःसिन्धुप्रमुखेषु स्थानविशेषेषु संभवौचित्यादभिन्नत्वेन प्रतीतेरुत्प्रेक्षायामुपमायाः पर्यवसानम् । धर्मिणि धर्मारोपणे तु व्यङ्ग्या । तत्र गुणस्योत्प्रेक्षणं हेतुत्वेन । क्रियायाः फलत्वेनापि ।

यथा

कैलासान् कीर्त्तिरेषा सृजति कति न ते हस्ततिग्मांशुयात्रा-
भङ्गांस्त्यागस्तु शृङ्गाञ्चलदलितनभःपर्वणः स्वर्णशैलान् ।
इत्थं मन्दाक्षचिन्ताप्रसरविधुरधीरात्मभूरात्मगुप्त्यै
लीनो वैकुण्ठनाभीसरसिजकुहरे श्रीनृसिंह क्षितीन्द्र ॥

---

धन्ता धातवः" इति धातुसंज्ञायां वर्त्तमाने लट् । एवं सर्वत्र । अत्र स्वःसिन्ध्वादिभिर्डिण्डीरप्रकरादीनां यथासंख्यमन्वयाद्यथासंख्यालंकारेण तत्संकीर्णेयमुपमोपक्रमोत्प्रेक्षा । उपक्रमत्वं व्यनक्ति । अत्रेति । उक्तानुशासनप्राबल्यान्मुखतो डिण्डीरप्रकरादेरुपमानत्वावभासेऽपि कीर्त्तिस्फूर्तीनां स्वःसिन्ध्वादिषु डिण्डीरादिरूपतानियमाभावो न संभवौचित्यात् । संभावनमात्रस्य न्याय्यत्वात् डिण्डीरप्रकराः किमित्यभेदाध्यवसाये पर्यवसानादियमुत्प्रेक्षैवेत्यर्थः । इह क्वचित् धर्मिणि धर्म्यन्तरारोपः यथोदाहृतं प्राक् । क्वचिद्धर्मस्यारोपः । यथा वक्ष्यति । तत्र विशेषमाह । धर्मिणीति । व्यङ्ग्येति । उच्यत इति शेषः । अत्र धर्मो गुणः क्रिया च तयोः स्वरूपोत्प्रेक्षायामविचारः । हेतुफलोत्प्रेक्षयोर्विशेषमाह । तत्रेति । गुणस्य हेतुत्वेनैवोत्प्रेक्षा क्रियायास्तु स्वहेतुत्वेन फलत्वेन चेत्यर्थः । तत्र गुणहेतूत्प्रेक्षामुदाहरति । कैलासानित्यादि । तत्रात्मभुवो लीनत्वं प्रति चिन्ताविधुरधीहेतुत्वोत्प्रेक्षणात् क्रियानिमित्तगुणहेतूत्प्रेक्षेयं व्यञ्जकाप्रयोगात् गम्येत्यभिप्रेत्याह ।

---

१ °मानत्वोपनिबद्ध° C. २ °निबद्धस्य डिण्डीर° C., M. ३ धर्मारोपेण C., M. ४ °त्प्रेक्षणं तु हेतुत्वेन T. ५ °मुत्प्रेक्षेत्यर्थः. D. ६ °रोपेणोदाहृतं D. ७ D. drops तु. ८ D. drops तत्र ९ °हेतुकत्वोत्प्रेक्षणात् D.

अत्र विधुरधीत्वं गुणो हेतुः।

त्वत्तः कोऽप्यपरः कदापि पुरुषश्चित्तेऽपि न स्थापित-
स्त्वच्चिन्तापरया मयेति भवतः प्रत्यायनां[1] कुर्वती।
तन्वी दुःसहपञ्चबाणदहनोत्सङ्गं प्रविष्टा सती
पाण्डिम्ना विरहोत्थितेन सुभगा व्याख्याति[2] शुद्धिं निजाम्॥

अत्र प्रत्यायना[3]करणं[4] शुद्धिप्रकाशनहेतुः[5]

त्रैलोक्यप्रथमानवीरपरिषद्[6]व्यावृत्त[7]वीरायित
श्रीमन्[8] वीर नृसिंह देव भवतः कर्त्तुं वतंसं यशः।
यत् पूर्वं श्रवणावतंसपदवीं नीतं धरित्रीभुजां
तत्कम्पेन निरन्तरेण शिरसः प्रभ्रंशयन्ते बुधाः॥

अत्र वतंसीकरणं फलम्। यत्र सचेतनधर्मस्याचेतनगतत्वेनारोपणात् सादृश्यं प्रतीयते तत्र तदभिधायिन इवादेरुपादानं न कार्यम्। पौनरुक्त्यापत्तेः। यथा[9]

नतु मृगाङ्कमृगस्य तृणैर्विना
कथममुष्य भविष्यति जीवितम्।
इति मृगाङ्करुचः कुरुते तृणं
तव कृपालु[10] कलिङ्गपते यशः॥

---

अत्रेति। क्रियाहेतूत्प्रेक्षामुदाहरति। त्वत्त इति। एषा च क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा पूर्ववद् गम्येत्याह। अत्र प्रत्यायनेति। क्रियाफलोत्प्रेक्षामुदाहरति। त्रैलोक्येति[11]। वीरायितं वीरकर्म। अत्र शिरःकम्पस्य यशोवतंसीकरणार्थत्वोत्प्रेक्षणात् क्रियानिमित्तक्रियाफलोत्प्रेक्षेयमित्याह। अत्र वतंसीति। विशेषान्तरं वक्तुमाह। यत्रेति। अत्रापि विषयव्याप्त्यर्थमुदाहरणचतुष्टयमाह। नन्विति[12]। इह तृणकरणमनादरकरणम्। तद्घाससंपादनेनाभेदाध्यवसायात् कृपालुत्वगुणरूप-

---

१ प्रत्यायनं T. २ प्रख्याति T. ३ प्रत्यायनकरणं T. ४ °करणमभिशुद्धि° C., M. ५ °प्रकाशने हेतुः T. ६ वरिपुरुषव्यावृत्त° C. ७ °व्यावृत्ति° D. ८ श्री श्रीमन् नरसिंहदेव भवतः C., M. ९ T. drops यथा. १० दयालु T. ११ °क्येत्यादि K. १२ नन्वित्यादि K.

कान्त्यानया तव तुलातपनीयराशि-
मन्दीकृतद्युतिरिवाञ्चति लज्जमानः ।
किं चामुनार्थिभवनेषु निधीकृतेन
जाता नृसिंह नृपते वसुधा यथार्था ॥

मरुत्पाथोवह्निव्यतिकरसुतीक्ष्णेन तपसा
तुलामध्यारूढं तव तदपि कान्त्या जितमहः ।
इति ज्ञात्वा दानाम्भसि तव नृसिंह क्षितिपते
सुवर्णं निर्विण्णं विरचयति तीर्थेषु वसतिम् ॥

दिङ्मातङ्गैः सह स्पर्शो भ्रान्तितः प्राप्य शुद्धये ।
पुष्करं गाहते कीर्त्तिर्नृसिंह नृपते तव ॥

**अध्यवसितिसिद्धत्वं प्रकृतस्यान्यत्वकल्पनं यद्वा ।**
**संबन्धासंबन्धौ तद्व्यत्यासे भवेदतिशयोक्तिः ॥ १३ ॥**

हेतूत्प्रेक्षायां निमित्तमिति श्लेषमूलाभेदातिशयोक्तिप्राणितक्रियानिमित्तगुणहेतूत्प्रेक्षेयम् । तत्र कृपालुत्वस्य चेतनधर्मस्याचेतने यशसि विरोधात् कृपालुत्वमेवेत्युत्प्रेक्षागमकत्वान्नेवादिशब्दप्रयोगावकाश इत्याशयः । कान्त्येति[2] । अत्र तुलातपनीयराशेरवाञ्चनस्य लज्जाहेतुकत्वोत्प्रेक्षणात् क्रियानिमित्तगुणहेतूत्प्रेक्षा । लज्जमान इवेत्युत्प्रेक्षाक्षेपकत्वं[3] तुल्यमिति व्याख्यातम् । मरुदिति[4] । धमनतापनसेकैः शोधितमेव सुवर्णं देयमिति भावः । तुलामध्यारूढमिति । तुलापुरुषदानमित्याशयः । तीर्थेषु पात्रेषु गङ्गादिषु च । अत्रापि[5] सुवर्णस्य तीर्थवसतेर्निर्वेदहेतुकत्वोत्प्रेक्षणात् क्रियानिमित्तगुणहेतूत्प्रेक्षैव । निर्विण्णमिवेत्युत्प्रेक्षालाभः[6] पूर्ववत् । दिगिति[7] । मातङ्गा गजाश्चण्डालाश्च[8] । भ्रान्तिः पर्यटनं व्यामोहश्च । पुष्करमम्बरं तीर्थविशेषश्च । चण्डालस्पर्शिनोऽपि[9] शुद्ध्यर्थं तीर्थमवगाहन्त इति भावः । इहापि शुद्धये इति फलोत्प्रेक्षा । पुष्करावगाहनक्रियानिमित्ता श्लेषमूलाभेदातिशयोक्त्युत्थापितेति संकरः । फलस्य लिप्सालक्षणत्वात् अचेतनायां कीर्त्तौ विरोधाच्छुद्ध्य इवेति सादृश्याक्षेपादिवाद्यनपेक्षा[10] ॥

उत्प्रेक्षा[11] ॥

तदेवमध्यवसायप्राधान्येनोत्प्रेक्षां लक्षयित्वा संप्रत्यध्यवसितप्राधान्येनातिशयोक्तिं विभागपूर्वकमाह । अध्यवसितीति । अध्यवसितिरध्यवसायः । तस्याः सिद्धत्वं

1 °मुनात्र भवनेषु T. 2 कान्त्येत्यादि K. 3 °क्षेपकत्वं तु लज्जायाः कृपया व्याख्यातम् K. 4 मरुदित्यादि K. 5 अत्रापि च 6 °लाभश्च पूर्ववत् K. 7 दिगित्यादि K. 8 °श्चण्डालाश्च K. 9 °स्पर्शिनो हि K. 10 °दिवानपेक्षा K. 11 K drops उत्प्रेक्षा.

अध्यवसितिसिद्धत्वमिति भेदे सत्यभेदः । प्रकृतस्यान्यत्वकल्पनमित्यभेदे भेदः। तद्व्यत्यासे संबन्धासंबन्धावित्यसंबन्धे संबन्धः संबन्धे त्वसंबन्ध इति चतुर्धा भवत्यतिशयोक्तिः। अतिशयस्योक्तिरिति यौगिकत्वमस्याः। क्रमेण यथा।

सिद्धरूपता अध्यवसितप्राधान्यमिति यावत्। एतेनाध्यवसायप्रधानोत्प्रेक्षाव्यावृत्तिः। एतच्च प्रथमभेद एव न भेदान्तरेष्विति दर्शयन् भेदान् विभजयति । अध्यवसितिसिद्धत्वमिति। अभेदप्रतिपत्तेरध्यवसायशब्दार्थत्वादिति भावः। चतुर्धेति। एतत्प्रस्तावं निरूप्य भेदाभिप्रायम्। भेदान्तरस्यापि कार्यकारणपौर्वापर्यभङ्गाख्यस्य अलंकारसर्वस्वकारोक्तच्छायासंगतिवशेन कार्यकारणभावमूलालंकारप्रस्ताव वक्ष्यमाणत्वात् । काव्यप्रकाशकारस्तु भेदेऽभेदः अभेदे भेदः यद्यर्थवाचकप्रयोगादसंभावितार्थान्तरकल्पनं कार्यकारणपौर्वापर्यभङ्गश्चेत्येवं चातुर्विध्यं सिद्धान्तयांचकार । तदपि चिन्त्यम्। तथा हि तन्मते संबन्धासंबन्धाख्यौ नालंकारावतः पृथग्भूतौ वा स्वोक्तभेदान्यतमान्तर्भूतौ वा। नाद्यः। विच्छित्तिविशेषसद्भावात्। न द्वितीयः। भेदकानिरूपणात्। न तृतीयः। प्रथमभेदयोर्धर्मितादात्म्यविधिनिषेधात्मनोः संसर्गमात्रविधिनिषेधात्मकत्वेनानयोरन्तर्भावायोगात् । चतुर्थे त्वप्रसक्तिरेव। तृतीयभेदे तु किमनयोस्तत्रान्तर्भावस्तस्य वानयोरिति विमृश्यताम्। तथा हि।

'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य।'
'राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥'

इत्यादिकं हि तस्योदाहरणम् । तत्राद्येऽसंभावितोऽर्थः पुष्पप्रवालयोर्मुक्ताफलविद्रुमयोश्च संबन्ध एव यदिशब्देन संभाव्यत इत्यसंबन्धे संबन्धभेद एवायम् । द्वितीये तु अकलङ्कं चेदिति कलङ्कासंबन्ध इन्दोश्चेच्छब्देन संभाव्यत इति संबन्धेऽप्यसंबन्धभेद एवायम्। एवं स्थिते सामान्ये विशेषस्यान्तर्भाव उचितः विशेषे वा सामान्यस्य तदत्रभवन्त एव विदांकुर्वन्तु । तस्मादस्मदुक्तः पञ्चधा विभाग एव न्याय्य इत्यलम्। तर्हि किमत्रानुगतं सामान्यलक्षणम्। 'अध्यवसितप्राधान्ये त्वतिशयोक्तिः' इति सर्वस्वकारोक्तमेवेति ब्रूमः। न चाव्याप्तिः। स्वतःसिद्धकविप्रौढोक्तिसिद्धातिशययोः फलभूतयोरभेदाध्यवसानस्य सर्वभेदव्यापकत्वात्। यथाह संजीविनीकारः।

'अभेदाध्यवसायो हि फलेऽतिशयनामनि।
न पुनः फलितोऽस्त्यत्र भेदोऽभेदे न सिध्यति॥' इति।

फलितविषयाभेदाध्यवसायो न व्याप्नोतीत्यर्थः । एतल्लक्षणविवक्षयैव सामान्यसंज्ञां व्युत्पादयति । अतिशयस्योक्तिरिति। तदेतदाश्रयेणातिशयोक्तेः

१ °छायाया संगति° D. २ °संबन्धाख्यभेदेनालंकारौ K. ३ पृथगुक्तौ D. ४ चानयो°. D. ५ तत्स्फुट° D. ६ °रुचिस्मितस्य K. ७ संबन्ध एवा° D. ८ °प्यसंबन्ध एवा° D. ९ व्याप्यानित्यलं प्रपञ्चेन K.

पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर।
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥

अत्र कर्णशब्दवाच्ययोरर्थयोर्भेदेऽप्यभेदनिर्देशः।

अशेषभोगाधारं त्वामक्रमात्तबलिश्रियम्।
कलिङ्गेश्वर जानामि नूतनं पुरुषोत्तमम् ॥

अत्रापि पुरुषोत्तमशब्दवाच्ययोरर्थयोर्भेदेऽप्यभेदो निर्दिष्टः।

इदमन्यत् सारस्वतमन्यद्गाम्भीर्यमन्यदौदार्यम्।
त्वं नरसिंह नरेश्वर न भवसि पैतामही सृष्टिः ॥

अत्र सारस्वतादीनामभेदेऽप्यन्यत्वेन भेदः।

स्थाने स्थाने कुलशिखरिषु त्वद्यशो गीयमानं
सिद्धद्वन्द्वैस्तटतरुलताकेलिदोलाधिरूढैः।

---

प्रथमः प्रकारः कथयिष्यत इति कथमुक्तं प्राक्। फलिताभेदाध्यवसानविवक्षयेत्यविरोधः। तस्मान्निष्कण्टकमेतत् सर्वथेति संतोष्टव्यम्। **पल्लवत** इति पल्लवादित्यर्थः। कर्णं श्रोत्रं राधेयं च। एकः पल्लवो भूषयत्यवतंसतया। अन्यः करस्तिरस्कुरुते वितरणेनेत्यर्थः। नन्वयं व्यतिरेको न त्वतिशयोक्तिरित्याशङ्क्याह। **अत्र कर्णशब्दवाच्ययोरिति**। श्लेषमूलातिशयोक्त्युत्थापितो व्यतिरेकसंकर इति भावः। अस्यैवोदाहरणान्तरमाह। **अशेषेति**। अशेषाणां भोगानामाधारः शेषशरीरशायी न भवतीति तथोक्तम्। अक्रमेण यौगपद्येनात्ता बलिनां प्रबलद्विषां श्रीर्येन तं क्रमेण पादन्यासेनात्ता बलेरसुरस्य श्रीर्येन स न भवतीति तथोक्तम्। पुरुषोत्तमं पुरुषश्रेष्ठं हरिं च। अत्र व्यतिरेकश्लेषमूलातिशयोक्त्युत्थापिता नूतनपुरुषोत्तमत्वोत्प्रेक्षा। तत्रातिशयोक्त्यंशं दर्शयति। **अत्रेति**। द्वितीयभेदमुदाहरति। **इदमन्यदिति**। तृतीयं भेदमुदाहरति। **स्थान इति**। औपवाह्ये राजवाह्ये। यद्यपि 'राजवाह्यस्त्वौपवाह्यः' इति कुञ्जरभेदेष्वमरस्तथापि कुरङ्गे उपचर्यते। मन्दायन्ते मन्दाभवन्ति। "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इति क्यङ्प्रत्ययः ॥

**अतिशयोक्तिः ॥**

---

१ कर्णवाच्ययो॰ M., C. २ त्वां विक्रमात्त॰ C., M. ३ पुरुषोत्तमवाच्ययो॰ T. ४ डोल॰ T., C., M. ५ सर्वं संतोष्टव्यम् D. ६ इत्यादि K. ७ ॰षेत्यादि K. ८ ॰न्यदित्यादि K. ९ इत्यादि K. १० तुरङ्गे K. ११ K. drops अतिशयोक्तिः.

श्रुत्वा हर्षात् प्रमुषितगतावौपवाह्ये कुरङ्गे
मन्दायन्ते मलयमरुतः श्रीनृसिंह क्षितीन्द्र ॥

अत्र कुरङ्गेण मलयमरुतामसंबन्धेऽपि संबन्धः ।

त्वयीत्थं सर्वेभ्यो वितरति कलिङ्गेश्वर सदा
न दानप्रस्तावो दिविचरतरूणां समजनि ।
यदि स्यादेतेषामपि विषमकण्डूविनयन-
क्षणारम्भेष्वैरावणकरटकाषव्यतिकरैः[1] ॥

अत्रामरतरूणां वितरणसंबन्धेऽप्यसंबन्धः ॥

**इत्थमलंकारद्वयमध्यवसायाश्रयेण निर्णीय ।**
**अधुनालंकृतिवर्गं गम्यौपम्याश्रयं ब्रूमः[2] ॥ १४ ॥**

**औपम्यगम्यतायां प्रकृतानां तुल्यधर्मसंबन्धे ।**
**अप्रकृतानामथवा चतुर्विधा तुल्ययोगिता ज्ञेया[3] १५**

तुल्यधर्मेण योगो जातोऽस्यामित्यन्वर्थनामा तुल्ययोगिता । धर्मस्तु द्विविधो गुणः क्रिया च । ताभ्यां सह प्रत्येकं प्रकृतानामेवाप्रकृतानामेवाभिसंबन्धादियं चतुर्धा । क्रमेण यथा

अथालंकारान्तरनिरूपणाय संगतिमाह । इत्थमिति । औपम्यगर्भेष्वपि पदार्थवाक्यार्थगतत्वेन द्वैविध्ये वाक्यार्थस्य पदार्थपूर्वकत्वात् पूर्वं पदार्थगतमलंकारद्वयं न्याय्यं तत्रापि समासस्य व्यासपूर्वकत्वात् प्रकृताप्रकृतसमासाश्रयाद्दीपकात् पूर्वं व्यासाश्रितां[4] तुल्ययोगितां लक्षयति । औपम्येति[5] । औपम्यगम्यतायामित्यधिकारकथनम् । केवलप्रकृतानां केवलाप्रकृतानां वा तुल्यधर्मयोगे तुल्ययोगिता । सा च वक्ष्यमाणभङ्ग्या चतुर्विधेत्यर्थः । संज्ञां व्युत्पादयति । तुल्यधर्मेणेति । तारकादित्वादितचप्रत्ययान्तेत्यर्थः[6] । धर्मस्वरूपनिरूपणपूर्वकं चतस्रो विधा दर्शयति । धर्म[7] इति ।

१ °करटकषायव्यतिकरैः C., M. २ व्याख्यास्यामः D. ३ भवति T., C.; भाति M. ४ व्यासमाश्रित्य D. ५ °म्येत्यादि K. ६ °प्रत्यय इत्यर्थः D. ७ धर्मस्त्वित्यादि K.

प्रत्यर्थिपृथ्वीपतिमानमर्दनं
सेवासमायातनृपालपालनम् ।
कात्यायनीपादसरोजपूजनं
नैसर्गिकं ते नरसिंह भूपते ॥

अत्रारिमर्दनादीनां प्रकृतस्य राज्ञो धर्मत्वात् प्रकृतत्वम् । नैसर्गिकत्वं गुणः । अत्रैव विद्योतत इति पाठे क्रिया ।

गर्जद्दुर्जयशत्रुसैन्यजलधेर्मन्थाय विद्वज्जना-
भीष्टानां परिपूरणाय वसुधावष्टम्भदानाय च ।
श्रीमन्नुत्कलभूमिपाल भवतः सृष्टे भुजे वेधसा
व्यर्थः संप्रति मन्दरः सुरतरुः सर्पाधिपश्चाभवत्[1] ॥

अत्र मन्दरादीनामुपमानत्वादप्राकरणिकत्वम्[2] । व्यर्थत्वं गुणः । अत्रैव निन्द्य इति पाठे क्रिया ।

श्लेषप्रतिभोत्थापिताप्येषा[3] संभवति ।

यथा

अलंकारावबद्धानि काव्यान्यरिकुलान्यपि ।
नरसिंह महीपाल कीर्तिं पल्लवयन्ति ते ॥

---

अतःपरं सुगमम् । अलंकारैरिति[4] । अलंकारैरुपमादिभिरवबद्धानि संनद्धानि । अन्यत्रालमत्यन्तं कारायामवबद्धानि निगलितानि । अभेदाध्यवसायेन त्वलंकारावबद्धत्वं काव्यानामरिकुलानां च केवलप्रकृतानां समानधर्मः । एवमप्रकृतत्वेनाप्युदाहार्यम् ॥

तुल्ययोगिता[5] ॥

---

१ °श्चाभवन् T. २ मन्दारा° T. ३ °प्रतिभत्थापि M. ४ °रित्यादि K. ५ K. drops तुल्ययोगिता.

**मिलितानां तु तथैषां दीपकमित्युच्यते षोढा ।**
**एतदलंकृतियुगलं कथितं तावत् पदार्थगत्वेन[1] ॥ १६ ॥**

अत्रोपमागर्भत्वे[2] सत्यपि वाच्यालंकारमुखेनैव चारुत्वम् । अतो न ध्वनित्वेन व्यपदेशः । किं तु गुणीभूतव्यङ्ग्यत्वेन । **एषां** प्रकृतानामप्रकृतानां प्रकृताप्रकृतानां च । **तथेति** ग्रहणं गुणक्रियायोग इत्याद्यनुवृत्त्यर्थम्[3] । संभूय वर्त्तमानानि प्रकृताप्रकृतान्यत्र प्रयोजकानि । अत एवोपमानोपमेयभावस्य वास्तवत्वम् । इवादेरनुपादानादौपम्यस्य गम्यत्वम् । परमार्थतो वाक्यार्थगतत्वेनास्यालंकारस्य संभवेऽप्येकया क्रिययानेकवस्तुनो भिन्नस्य संबन्धादौचिती-

---

एवं प्रकृताप्रकृतव्यासाश्रयणेन तुल्ययोगितामुक्त्वा तत्सामस्त्याश्रयणे दीपकं निरूपयति । **मिलितानामिति**[4] । तुशब्दस्तुल्ययोगितावैलक्षण्यार्थः । व्यासे तुल्ययोगिता दीपकं तु मिलितानां समस्तानामेषां प्रकृताप्रकृतानां तुल्यधर्मसंबन्धे संपद्यते । तच्च वक्ष्यमाणरीत्या षड्विधमित्यर्थः । इहौपम्यस्य गम्यमानत्वाद् ध्वनिरेवायं किं न स्यादत आह । **अत्रेति** । इह विद्यमानमपि व्यङ्ग्यमौपम्यरूपं वाच्यालंकारोपस्कारकतया स्थितत्वादपराङ्गनामा गुणीभूतव्यङ्ग्यभेदो भवन्न ध्वनिव्यपदेशमर्हतीत्यर्थः । समस्तानां प्रयोजकत्वे फलमाह । **अत एवेति** । तुल्ययोगितायां हि केवलं प्रकृतानामुपमेयत्वं केवलाप्रकृतानां तूपमानत्वमेवेति वैवक्षिक एवोपमानोपमेयभावः अत्र तूभयेषां सामस्त्यान्मुख्य एव गम्यत इत्यर्थः । गम्यत्वे हेतुमाह । **इवादेरिति** । ननु समानधर्मस्य प्रत्यर्थसंबन्धे[5] वाक्यार्थगतत्वमेवास्य तत् कथं पदार्थगतत्वमत आह । **परमार्थत इति** । वस्तुतो वाक्यार्थगतत्वेऽपि सर्वत्र संबध्यमानैकधर्मस्य पदार्थत्वात् तद्दृष्ट्या पदार्थगतत्वोपचार इत्यर्थः । क्रियाग्रहणं गुणस्या-

---

१ पदार्थगतत्वेन D., M. २ °गर्भितत्वे T. ३ इत्याद्यर्थम् D. ४ °मित्यादि K.
५ °संबन्धिवाक्यार्थ° K. .

षशेन पदार्थगतत्वेनाभिधानम्। प्रकृताप्रकृतान्यतरसांनिध्यमधितिष्ठन्नपि साधारणो धर्मः प्रसङ्गेनान्यदपि दीपयतीति दीपकम्। यधुक्तं बिन्दूलंकारे[2] कविचक्रवर्तिना हरिहरेण

'यः प्रस्तुताप्रस्तुतयोर्वर्गे कुत्रापि संगतः।
समानो धर्म एकोऽन्यद्दीपयेत्तत्तु दीपकम्॥'

इति। साधर्म्यस्य तु वाक्यादिमध्यान्तगामित्वादेतत् षट्प्रकारम्। क्रमेण[4] यथा

---

त्युपलक्षणम्। प्रवृत्तिनिमित्तमाह। प्रकृताप्रकृतेति। कथमेकत्रावस्थितस्यानेकत्रोपकारकतेत्याशङ्क्याह। प्रसङ्गेनेति। अन्यार्थमनुष्ठितस्यान्योपकारकत्वप्रसङ्गः[5]। यथा पश्वर्थानुष्ठितप्रयाजादीनामिष्ट्युपकारकत्वम्। यथा वा लोके[6] देवसमीपे स्थापितस्य दीपस्य कुम्भस्तम्भाद्युपलम्भोपकारकत्वं[7] तथा यमप्येकत्र स्थितः सर्वं दीपयतीति दीपकमुच्यत इत्यर्थः। अत्राभियुक्तसंमतिमाह। यदिति[8]। विभागं दर्शयति[9]। साधर्म्यस्य त्विति। साधर्म्यं समानधर्मो गुणक्रियारूपो द्विविधः। तस्यैकस्यैवादिमध्यान्तगतत्वेन त्रैविध्ये द्वैविध्यमित्यर्थः। वाक्यादिमध्यान्तगामित्वादिति। वाक्यानामादिमध्यान्तवाक्यानां यथासंख्यं य आदिमध्यान्तास्तद्गतत्वादित्यर्थः। एवं च[10] वैचित्रीविशेषाद्विच्छित्तिविशेषलाभः[11]। आदिमध्यान्तवाक्यगतत्वमात्रेणाप्ययमलंकार इष्यत एव।

---

१ °गत्वाभिधानं C., M. २ विद्वदलंकारे D., C. ३ एकोऽस्य दीपये° T. ४ क्रमेणोदाहरणं यथा D. ५ °ष्ठितस्याङ्गस्यान्यत्राप्यनुषङ्ग उपकारप्रसङ्गः D. ६ K. omits लोके देवसमीपे ७ °पकारत्वं K. ८ य इत्यादि K. ९ विशदयति K. १० D. omits च ११ वैचित्रीवशा° D. १२ K. omits वाक्य.

करोति न मुदं कस्य नरसिंह नरेश्वर[1] ।
राकाचन्द्रमसो बिम्बं पुण्डरीकं यशस्तव ॥

क्षीरोदवीची कमलासखेन
प्रकाशते भानुमता दिनश्रीः ।
द्यौः पारिजातेन कलिङ्गनाथ
निशा शशाङ्केन मही त्वया च ॥

वीर नृसिंह कवित्वं चम्पकसौरभ्यमिन्दुसौन्दर्यम् ।
गङ्गाजलमाधुर्यं कस्य न भुवनेषु सर्वदा मान्यम् ॥

एवं गुणयोगेऽपि ॥

**वाक्यार्थगतत्वेन स्यात् सामान्यं पृथग्विनिर्दिष्टम् ।**
**[2]यस्यां द्वेधा तज्ज्ञैः सा प्रतिवस्तूपमा समाम्नाता ॥ १७ ॥**

पदार्थगतालंकारनिरूपणानन्तरं वाक्यार्थगतालंकारनिरूपणावसरः । [3]पदार्थारब्धत्वाद्वाक्यार्थस्य । वस्तुशब्दस्य वाक्यार्थाभिधा-

---

तत्र क्रियायोगे भेदत्रयं क्रमेणोदाहरति । करोतीत्यादि । [5]गुणयोगे भेदत्रयस्याप्युदाहरणमूह्यमित्याह । एवं गुणयोगेऽपीति ॥

दीपकम् ॥

अथौपम्यगर्भेषु पदार्थगतालंकारनिरूपणानन्तरं वाक्यार्थगतालंकारप्रस्तावे सामान्यधर्मस्य सकृन्निर्देशेन दीपकमुक्त्वा तद्वैधर्म्येणासकृन्निर्देशेन प्रतिवस्तूपमामाह । वाक्यार्थगतत्वेनेति । यत्रोपमानोपमेयवाक्ययोरेक एव समानधर्मः पर्यायशब्देन पृथङ् निर्दिश्यते सा प्रतिवस्तूपमा सा च साधर्म्यवैधर्म्याभ्यां [7]द्विविधेत्यर्थः । संगतिमाह । पदार्थगतेति । वाक्यार्थस्य पदार्थसंसर्गात्मकत्वात् तदारब्धत्वव्यपदेशः । संज्ञां व्युत्पादयति । वस्तुशब्दस्येति । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मोऽ-

---

१ महीश्वर T. २ यस्माद् द्वेधा D. ३ पदार्थत्वा° C. ४ वाक्यस्य T. ५ गुणयोगे तु D.
६ K. omits दीपकम्. ७ द्वेधेत्यर्थः D. ८ °गतेत्यादि K.

यित्वात् प्रतिवाक्यार्थमुपमेति सार्थक[1]ताभि[2]धानेयं द्विधा । साधर्म्येण वैधर्म्येण च[3] । क्रमा[4]द्यथा

दातारः कति न प्रभाकरकरक्रीडासखीनां दिशां
चक्रे किं तु नृसिंहपार्थिवतुलामेकोऽपि नारोहति ।
अर्थ्यास्ते न परोऽपि कश्चन मणिश्चिन्तामणिप्रक्रिया-
मब्धिः क्षीरपयोधिभङ्गिमचलः कैलासहेलामपि ॥

अत्रारोहणमध्यासनं चेत्येक एव धर्म उपमेयवाक्ये उपमानवाक्ये च पर्यायपदेनोपनिबद्धः ।

याञ्चादैन्यपराङ्मुखी भवतु वो जिह्वा नृपेष्वर्थिनः
सर्वस्यापि कलिङ्गभूपतिरिह क्षेमङ्करः सेव्यताम् ।
तत्ताहक्फलभारवैभवनमन्नीरन्ध्रशाखाभरे
मन्दारे पुरतः स्थिते किमपरैर्लक्षेण वृक्षैरपि ॥

अत्र मन्दार एव सेव्यतामिति प्रतीतिरस्तीत्येक एव साधारणो[5] धर्म उभयत्रापि वर्त्तते ।

संतोषकरणनिपुणो[6] नरसिंह नरेश्वर त्वमखिलस्य ।
नानन्ददानचतुरश्चिन्तामणिमन्तरेण कोऽप्यस्ति ॥

---

स्यामिति प्रतिवस्तूपमेत्यर्थः । **दातार** इति । दिशां चक्रे दिङ्मण्डले परशब्दस्य मण्यब्ध्यचलैः प्रत्येकं संबन्धः । क्वचित् समानधर्मस्यैकत्रैव प्रयुक्तस्यापरत्र गम्यत्वेऽप्येषा संभवतीत्याशयेनोदाहरणान्तरमाह । **याञ्चे**ति । क्षेमं करोतीति क्षेमङ्करः । "क्षेमप्रियमद्रेऽण् च" इति खच्प्रत्ययः । अत्रोपमेयवाक्ये प्रयुक्तं सेव्यत्वमुपमानवाक्येऽपि प्रतीयत इत्याह । **अत्रे**ति । वैधर्म्योदाहरणमाह । **संतोषे**ति ॥

प्रतिवस्तूपमा ॥

---

१ सार्थकाभिधाने° T., M. २ °भिधाने द्विधा C. ३ D. omits च. ४ क्रमेण यथा T., M. ५ साधारणधर्मः T. ६ °निपुण° T., C., M. ७ इत्यादि K. ८ °षेत्यादि K ९ K. omits प्रतिवस्तूपमा.

अत्र व्यतिरेकमुखेनाभिधानाद्वैधर्म्यम् ॥

**बिम्बप्रतिबिम्बत्वं यद्युपमानोपमेययोर्भवति ।**
**धर्मस्यापि तदानीं दृष्टान्तः कथ्यते द्विविधः ॥१८॥**

अत्र दृष्टान्तालंकारमहिम्नैव[1] बिम्बप्रतिबिम्बभावेन प्रतीयमानमुपमानोपमेयभावमनादृत्य दृष्टान्तोदाहरणनिदर्शन[2]रूपाः शब्दाः कविना न प्रयोक्तव्याः । पौनरुक्त्यापत्तेः । दृष्टोऽन्तो निश्चयो यत्रेति यथार्थाभिधानम्[3] । साधर्म्यवैधर्म्याभ्यां भवन्नुभयथा भवति । क्रमेण यथा

त्वमसि रिपुनराधिनाथमाथ[4]-
प्रकटभुजार्गलविक्रमो नृसिंहः ।
मदकरटिकठोरकुम्भपीठी[5]-
दलनदुरन्तनखाङ्कुरो मृगेन्द्रः ॥

अपि सहजमनोहरं कवित्वं
भवति नृसिंहगुणान्वितं मनोज्ञम् ।

---

एवं शुद्धसामान्यनिर्देशेन प्रतिवस्तूपमामुक्त्वा संप्रति बिम्बप्रतिबिम्बभावेन वाक्यभेदाश्रितं दृष्टान्तमाह । बिम्बेति । न केवलं धर्मिणोः किं तु धर्मस्यापि बिम्बप्रतिबिम्बभावेन निर्देशो यत्र स दृष्टान्तः । स च पूर्ववत् साधर्म्यवैधर्म्याभ्यां द्विविध इत्यर्थः । दृष्टान्तादिवाचकप्रयोगे तु नायमलंकार इत्याह । अत्रेति । भिन्नयोरेव वस्तुनोरत्यन्तसदृशयोरुभयत्र पृथङ्‌ निर्देशो बिम्बप्रतिबिम्बभावः । संज्ञां व्युत्पादयति । दृष्ट इति । दार्ष्टान्तिके संदिग्धस्यार्थस्यात्र निश्चयदर्शनादयं दृष्टान्त इत्यर्थः । त्वमित्यादि । अन्नारिमथनकरिमथनयोर्भुजनखरयोश्च बिम्बप्रतिबिम्बभावः । अपीति । अत्र नृसिंहगुणाङ्कितत्वकुचकलशसंगतत्वयोर्बिम्बप्रतिबिम्बभावः ॥

---

१ D. has दृष्टान्तालंकारमहिम्नैव after °रूपाः शब्दाः २ °निदर्शना° C. ३ °भिधानः T. ४ °माथि° C. M. ५ °पाटी T., C., M. ६ भुजनमनो° C. ७ °म्बेत्यादि K. ८°पीत्यादि K.

अकुचकलशसंगतं तरुण्याः
कलयति मौक्तिकदाम दुर्भगत्वम्[1] ॥

**प्रतिबिम्बनस्य[2] करणं संभवता यत्र वस्तुयोगेन।**
**गम्यमसंभवता वा निदर्शना सा द्विधाभिमता॥१९॥**

पूर्वत्र प्रतिबिम्बनस्य प्रक्रान्तत्वादिहैव लक्षणमुचितमेतस्याः। वस्तुयोगेन वस्तुसंबन्धेन[3]। द्विधा संभवद्वस्तुसंबन्धासंभवद्वस्तुसंबन्धा च। क्रमेण यथा

यद्प्येकाकिन्यो यदपि रमणीया युवतय-
स्तथापि स्वच्छाश्चेद्दधति जगति श्लाघनधुराम्।
इहार्थे प्रामाण्यप्रकटनपरा कीर्त्तिरनिशं
भुजङ्गानां लोके चरति नरसिंह क्षितिपते ॥

अत्र स्वच्छत्वाद्भुजङ्गलोकं भ्रमन्त्याः कीर्त्तेरुक्तार्थप्रामाण्यप्रकटनपरत्वेन संबन्धः प्रतिबिम्बनमाक्षिपति।

---

दृष्टान्तः[4] ॥

अथ बिम्बप्रतिबिम्बभावे वाक्यभेदेन दृष्टान्तमुक्त्वा तदभेदेन निदर्शनां दर्शयति। प्रतिबिम्बनस्येति। यत्र वस्तुसंबन्धेन प्रतिबिम्बनं गम्यते सा निदर्शना। सा च संभवद्वस्तुसंबन्धासंभवद्वस्तुसंबन्धा चेति द्विविधेत्यर्थः[5]। संगतिमाह। पूर्वत्रेति। संभवन् बाधरहितः सन्नेव वस्तुसंबन्धः स्वसामर्थ्यात् प्रतिबिम्बनं कल्पयति यत्र सा संभवद्वस्तुसंबन्धा। यत्र त्वसंभवन् बाधितः सन्ननुपपत्त्या प्रतिबिम्बनमाक्षिपति सा त्वसंभवद्वस्तुसंबन्धेत्यर्थः। यद्पीति[6]। इहार्थे स्वच्छानां सर्वत्र श्लाघ्यत्वरूपार्थे। भुजङ्गाः सर्पा विटाश्च। संभवद्वस्तुसंबन्धत्वं दर्शयति। अत्रेति। प्रामाण्यप्रकटनपरत्वं तत्प्रतिपादनपरत्वं तेन संबन्धः संभवत्येवेति शेषः। कारीषोऽग्निरध्यापयतीतिवत् तत्समर्थाचरणरूपतया संभवात्। प्रतिबिम्बनमाक्षिपतीति। कीर्त्तिप-

---

१ °दुर्गतत्वम् C., M. २ प्रतिबिम्बितस्य T., C., M. ३ °संबन्धेनेति D. ४ K. omits दृष्टान्तः ५ द्वैधेत्यर्थः D. ६ °पीत्यादि K.

दृप्यद्दुर्वारवैरिक्षितिपतिवनितालोचनाम्भोरुहेन्दुः
क्रीडासौधं कलानां जगति गजगतिर्नन्दतु श्रीनृसिंहः।
यत्कीर्तिक्रोडलीनं कलयति गगनं क्षीरनीराकरान्त-
र्निद्राणस्य स्रवन्तीसहचरदुहितुः प्राणनाथस्य लीलाम्॥

अत्र भगवतः श्रीकृष्णस्य लीलया संबन्धः कथमपि गगनस्य न संभवतीति लीलामिव लीलामवगमयति। एषा पदार्थवृत्तिरुदाहृता। वाक्यार्थवृत्तिर्यथा

वीरनरसिंहतेजः स्तुतिवर्त्मनि यः प्रणेतुमभिलषति।
अभिनवकमलकलाचीकुहरे विनिवेशयेत् स वडवाग्निम्॥

अत्र दृष्टान्तालंकार इति चेन्न। परस्परनिरपेक्षवाक्यार्थगतत्वेन तस्य प्रगल्भमानत्वात्। अत्र पुनः परस्परसापेक्षत्वं वाक्यार्थयोरिति निदर्शनैव भवितुमर्हति। इयं पुनः प्राकरणिकधर्मस्याप्राक-

तिव्रतयोरिति भावः। दृप्यदित्यादि। स्पष्टम्। वीरेति। कलाची पात्रविशेषः। अत्र यदेतत्तेजःस्तुतिकरणं तत् कमलक्रोडे वडवाग्निनिवेशनमिति सामानाधिकरण्येन संबन्धः प्रतीयते। स च विरोधादसंभवंस्तद्वद्दुष्करमिति वाक्यार्थयोः प्रतिबिम्बनमाक्षिपतीति वाक्यार्थवृत्तिरियं निदर्शनेति भावः। उदाहृतभेदेऽस्य दृष्टान्तादभेदमाशङ्कते। अत्रेति। परिहरति। नेति। भेदकमाह। परस्परेति। यत्र परस्परनिरपेक्षार्थत्वेन वाक्यार्थभेदस्तत्र दृष्टान्तः। यत्र सापेक्षार्थत्वेन विध्यर्थवादयोरिव वाक्ययोरेकवाक्यता तत्र निदर्शनेति भेदः। सापेक्षत्वं चोक्तरीत्या वाक्यार्थे वाक्यार्थसमारोपादिति भावः। एवं पूर्वाचार्यानुसारादुपमानधर्मस्योपमेयेऽसंभवादियं निदर्शनोक्ता। वस्तुतस्तूपमेयधर्मस्योपमानेऽसंभवादपीयं संभवतीत्याह। इयं पुनरिति। तन्नाद्यभेदः प्रागुदाहृतोऽपि स्फुटार्थं पुनरुदाह्रियत इत्याशयेनाह।

१ कथंचिदपि M. २ °नृसिंह° C., M. ३ कुहरेऽपि निवेश° M. ४ दृष्टान्तोऽलंकार M. ५ परस्परापेक्षत्वं C.; परस्परव्यपेक्षत्वं T. ६ T. drops पुनः. ७ वीरनरसिंहेत्यादि K. ८ स्ववाक्यार्थ° K.

रणिकगतत्वेनासंभवे निरचायि चिरन्तनैः। वस्तुतस्तु विपर्ययेऽपि संभवति। उभयथापि संबन्धानुपपत्तेः समानत्वात्। क्रमेण यथा

या चण्डांशुमयूखमण्डलमहाहंकारसर्वंकषा
ख्याता वीर नृसिंह देव जगति प्रौढिः प्रतापस्य ते।
त्वद्धाटीचकिताः पलाय्य विपिने वासं परःकोटयः
कुर्वन्तोऽनुभवन्ति संततमिमां दावानले विद्विषः॥

अत्र प्रतापः प्रकृतस्तद्धर्मस्य प्रौढेरप्रकृते दावानले कुतः संभव इत्युपमानोपमेयभावः प्रतीयते।

यः कैलासनिवासधूर्जटिजटाकोटीरतारापति-
ज्योत्स्नाचुम्बितसिद्धसिन्धुलहरीगर्भत्विषां विभ्रमः।
उद्वेलाम्बरचूडकालिमकथानिर्मन्थनोत्कन्धरः
सोऽयं वीर नृसिंह देव नृपते त्वत्कीर्त्तिषु प्रेक्ष्यते॥

अत्र सिद्धसिन्धुलहरीगर्भत्विषोऽप्रकृतास्तद्धर्मस्य विभ्रमस्य प्रकृतासु कीर्त्तिष्वसंभवादौपम्यं गम्यम्॥

---

क्रमेणेति। येति। सर्वं कषतीति सर्वंकषा। "सर्वकूलाभ्रकरीषेषु कषः" इति खच्प्रत्यये मुमागमः। कोटेः परं परःकोटयः अपरिमिता इत्यर्थः। "पञ्चमी" इति योगविभागात् समासः। राजदन्तादित्वात् कोटेः परनिपातः। पारस्करादित्वात् सुडागमः। शेषं सुगमम्॥

निदर्शना॥

---

१ °संभवेन निरचायि M. २ विरचायि D. ३ पराः कोटयः T., C., M. ४ °नलेऽपिद्विषः T. ५ °स्तस्य T. ६ °निवासि° T., M. ७ य इत्यादि K. ८ K. omits निदर्शना.

उपमानादुपमेयं यत्राधिक्यस्य गोचरीभवति ।
सति भेदप्राधान्ये व्यतिरेकोऽयं समाख्यातः ॥२०॥

भेदो वैलक्षण्यम् ।

पवित्रमत्रोत्रमुदीरयन्ति
त्वामुत्कलाधीश बिडौजसं च ।
इयान् विशेषो युववोर्यदेष
नापारिजातस्त्वमपारिजातः ॥

---

अथौपम्यगर्भेष्वेव भेदप्राधान्यात् व्यतिरेकं लक्षयति । उपमानादिति । अत्रोपमानादुपमेयस्याधिक्ये अल्पत्वे वा द्वेधा व्यतिरेकः इत्यलंकारसर्वस्वकारः । तत्राद्यभेदे न विवादः । द्वितीये तु

'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्त्ति यातं तु ॥'

इत्येतदुदाहृत्य चन्द्रादुपमानादुपमेयस्य यौवनस्य यातस्यानिवर्त्तितत्वादल्पत्वमिति व्याख्यातं तत् काव्यप्रकाशकारेणास्थैर्यस्यानिवर्त्तितत्वमाधिक्यमेव नाल्पत्वमित्येकत्वमेव न द्वैधमिति प्रत्याख्यातम् ।[2] चान्यदस्योदाहरणं दृश्यते युज्यते वा । तस्मात्तन्मतेनैव स्वयमप्याह । आधिक्यस्येति । यत्रोपमानादुपमेयस्याधिक्यं भेदप्राधान्येन कथ्यते स व्यतिरेक इत्यर्थः । आधिक्यं चोपमेयस्योत्कर्षहेतावुपमानस्यापकर्षहेतौ च सति संभवेत्तत्र द्वयोर्हेत्वोरुक्तौ द्वयोरनुक्तौ एकैकोक्तौ च चत्वारोऽस्य भेदाः । ते पुनरिवादिशब्दप्रयोगात् सदृशादिशब्दप्रयोगादर्थाक्षेपाच्च शाब्दत्वार्थत्वाक्षिप्तत्वैः सादृश्यत्रैविध्येन त्रैविध्ये द्वादशभेदाः । ते च श्लेषाश्लेषाभ्यां द्वैधेऽप्येवं चतुर्विंशतिरस्य भेदाः । तत्र दिङ्मात्रमुदाहरति । पवित्रेति[3] । पवित्रं पावनं

---

१ °मिति कथमेतद् द्वैविध्यामिति K. २ न चान्य° K. ३ °विशेत्यादि K.

अत्र श्लेषप्रतिभोत्थापितदीपकानुप्राणितो व्यतिरेकः ॥

श्रीमन्नुत्कलभूमिपाल भवतो दानाम्बुकल्लोलिनी-
मेतां पूरपवित्रितावनितलां दृष्ट्वापगानां पतिः ।
शिप्रां नेच्छति नर्मदां न मनुते गोदावरीं नेक्षते
कालिन्दीं न धिनोति सिन्धुतटिनीं नाश्लिष्यति प्रागिव ॥

अत्रेतराभ्यो दानाम्बुकल्लोलिनी सौभाग्येन[2] विशिष्यत इति व्यतिरेकः ॥

**प्राधान्येन निबद्धं यद्युपमानोपमेययोरेकम् ।**
**अन्यत् सहार्थसहितं भवति सहोक्तिस्तदा ख्याता ॥ २१ ॥**

---

सच्छोभनं गोत्रं कुलं नाम वा यस्य तम् । अन्यत्र पर्वेभ्यो जात् त्रसन्तस्त्रस्यन्तो गोत्रा अद्रयो यस्य तम् । 'गोत्रं नाम[3]कुलाद्रिषु' इति विश्वः । एष विडौजा अपगतमरिजातं यस्य[4] सोऽपारिजातः निःसपत्नो न नित्यमसुरोपद्रुतत्वात् । त्वं त्वपारिजात इत्युपमानादाधिक्यमुपमेयस्य । अपारिजातः पारिजातरहितो नेति च प्रतीयते। अयं च द्वयोर्हेत्वोरुक्तावाक्षिप्तसादृश्यः श्लेषाश्रितो भेदः । स च पवित्रेत्यादिप्रकृताप्रकृतसमानधर्मस्यावाक्यगतत्वाद्दीपकभेदेनापि संकीर्ण इत्याशयेनाह । अत्र श्लेषेति । श्रीमन्नित्यादि । अयं तु द्वयोरनुक्तावाक्षिप्तसादृश्योऽश्लेषाश्रितः । इतरानादरकरणादाधिक्यं प्रतीयत इत्याह । अत्रेति ॥

व्यतिरेकः[5] ॥

अथ भेदप्राधान्येनैव सहोक्तिं लक्षयति । प्राधान्येनेति । इहोभयोः प्रकृतत्वादुपमानोपमेयभावो वैवक्षिकः । तत्र सहार्थनिर्दिष्टस्याप्राधान्यादुपमानत्वमर्थादितरस्य प्राधान्यादुपमेयत्वम् । यत्रोपमानोपमेययोरेकस्य शाब्दः क्रियासंबन्ध इतरस्य

---

१ न श्लिष्यति D. २ D. omits सौभाग्येन. ३ 'नाम्नि कुले चाद्रौ' K. ४ यस्यासावपा° K. ५ K. omits व्यतिरेकः.

यथा

संग्रामाङ्गणभूषणस्य भवतः कर्णावतंसीभव-
ज्ज्यावल्लीवलयोद्धुरेण धनुषा मुक्तैः समं मार्गणैः ।
एतैस्तैः प्रतिमल्लभूमिपतिभिः स्पर्धानुबन्धादिवे[1]
श्रीमन् वीर नृसिंह देव सहसा[2] दिक्चक्रमुल्लङ्घितम्[3] ॥

अत्र मार्गणानां प्रतिमल्लपलायनं प्रति निमित्ततामातन्वतामपि समसमयत्वेनोपनिबन्धः । रिपुगतादिक्चक्रलङ्घनं शाब्दं बाणगतं तु सहार्थसामर्थ्यात् प्रतीयते ।

---

सहार्थनिर्देशगम्यः सा सहोक्तिरित्यर्थः । सा च नियमेनातिशयोक्तिमूला सती कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिमूला श्लेषभित्तिकाभेदाध्यवसायमूला चेति द्विधा । तत्राद्यामुदाहरति । संग्रामे[4]ति । अत्र मूलभूतामतिशयोक्तिं तावद्दर्शयति । अत्रेति । लक्षणार्थं च योजयति । रिपुगतेति । रिपूणां क्रियासंबन्धः शाब्दः । अत एव तेषां प्राधान्यम् । बाणानां तु सहार्थसामर्थ्यगम्य इत्यप्राधान्यम् । "सहयुक्तेऽप्रधाने" इत्यप्राधान्ये तृतीयाविधानादिति भावः । अयं चात्र गुणप्रधानभावः शाब्द एव । वस्तुतस्तु कालोपलक्षणत्वादुभयेषां समप्राधान्यमेव दिक्चक्रोल्लङ्घने शाखाप्रस्तरयोरिव प्रहरणे । यथा सह शाखया प्रस्तरं प्रहरतीत्यत्र प्रस्तरप्रहरणस्य प्रक्षेपात्मनः कृष्णाविषाणप्रासनवदुपयुक्तसंस्कारस्य प्रतिपत्तिकर्मत्वेन हविरासादनादिप्रयुक्तप्रस्तरवदेव वत्सापाकरणादिप्रयुक्तशाखायामपि विनियुक्तविनियोगप्रसङ्गेनाप्रयोजकत्वात् प्रस्तरवच्छाखाया अपि तत्र प्राधान्यमेव नाङ्गत्वमिति निर्णीतं चतुर्थषष्ठयोस्तृतीयेऽङ्गत्वं चोक्तमिति चेन्नैष दोषः। तत्र हि सूक्तवाक्येन प्रस्तरं प्रहरतीत्यत्र तृतीयाश्रुत्या सूक्तवाक्यस्य साधनत्वावगमान्मान्त्रवर्णिकदेवतासंबन्धेन निर्वापालम्भनादिवद्याजिकल्पनायां प्रहरणोपलक्षिते[5]ष्टदेवता[6]नमस्कारार्थे होमे प्रस्त[7]रस्तस्याङ्गत्वमुक्तम्[8] । इह तु प्रहरणमात्रे प्रस्तरस्यापि प्राधान्यमे-

---

१ °दितः M. २ भवता दिक्° T. ३ °मुल्लम्बितम् T. ४ °मेत्यादि K. ५° पलक्षिते तत्रेष्ट° K. ६ °देवतासंस्कारार्थे D. ७ परस्याङ्ग° D. ८ K. omits उक्तम्.

श्लेषभित्तिकाध्यवसायमूला यथा

रणे वीरनृसिंहस्य सिंहनादेन तर्जिताः ।
मदं मुञ्चन्ति मातङ्गैः सहैव परिपन्थिनः ॥

अत्र मदयोर्भेदेऽप्यभेदः ॥

**ब्रूमोऽधुना सहोक्तिप्रतिभटभूतं[1] विनोक्त्यलंकारम् । एकेन विना किंचिद्यत्रान्यत् स्यात् सतोऽसतो यद्वा ॥ २२ ॥**

सतः शोभनादन्यदशोभनम् । असतोऽशोभनादन्यच्छोभनम् । क्रमेण यथा

न[2] त्वद्गैरिवधूवक्त्रं विना कान्त्या विराजते ।
ज्योत्स्नया न विना चन्द्रमण्डलं क्षितिमण्डन ॥

---

वेत्यविरोधः । यत्र न सहार्थनिर्देशः कालोपलक्षकस्तत्र वास्तवोऽपि गुणप्रधानभावोऽस्ति । यथा शतेन राजपुत्रैः सहाध्वर्युः सहालंकारैर्गौर्देयेत्यादौ राजपुत्रगुणकत्वमध्वर्योरलंकारगुणकत्वं गोश्चेति । ततः शाखाप्रस्तरयोरिव शरशावकयोरपि शाब्द एव गुणप्रधानभाव इति सिद्धम् । द्वितीयामुदाहरति । रणे[3] इति । मदयोरिति । दानाहंकारयोरित्यर्थः[4] । अन्यत् सर्वं पूर्ववत् ॥

सहोक्तिः[5] ॥

विनोक्तेः[6] संगतिमाह । ब्रूम इति । लक्षणमाह । एकेनेति । यत्र केनचिद्विना कस्यचिदशोभनत्वं शोभनत्वं वा सा विनोक्तिर्द्विधेत्यर्थः । अत्र शोभनत्वाशोभनत्वनिवृत्त्योरन्यवृत्तिनिमित्तत्वख्यापनाय[7] तदन्यथाकथनम् । नेति[8] । अत्र कान्तिज्योत्स्नयोर्विनाभावाद्वैरिवर्गचन्द्रमण्डलयोर्न विराजत इत्यशोभनत्वं शोभ-

---

१ °प्रतिभटरूपं D. २ न ते रिपुवधू° C., M. ३ रण इत्यादि K. ४ °काररूपयो° D. ५ K. omits सहोक्तिः ६ विनोक्तिसंगति° D. ७ °निमित्तताख्या° K. ८ नेत्यादि K.

विना पद्माकरो ग्राहैश्चन्दनं भुजगैर्विना।
विना भाति खलैर्वीर नृसिंह भवतः सभा॥

**साधारणधर्मवशाद्गम्येनाप्रस्तुतेन चारुत्वम्।**
**प्रस्तुतमुपैति वाच्यं यस्यामेषा समासोक्तिः॥२३॥**

व्यङ्ग्येऽपि रूपके प्रस्तुतोपरञ्जकत्वमेवाप्रस्तुतस्य। यत्रारोप्यमाणपदार्थत्वेनारोपविषयस्य प्रतिभासनादप्राधान्यं तत्र परिणामः। यत्र पुनरारोप्यमाणपदार्थधर्मविशिष्टत्वेन[1] प्रति-

---

नत्वनिवृत्तिरुक्ता। विने[2]ति। अत्र ग्राहादिविनाभावात् पद्माकरादीनां भातीति शोभनत्वमशोभनत्वनिवृत्तिरुक्ता॥

[3]विनोक्तिः॥

अथ विशेषणविच्छित्त्याश्रयणेनालंकारद्वयमुच्यते तत्रौपम्यगर्भत्वसाम्याद्विनोक्त्यनन्तरं समासोक्तिमाह। सा[4]धारणेति। ये[5]त्र प्रस्तुतविशेषणसाम्यादप्रस्तुतं गम्यते सा समासोक्तिरित्यर्थः। नन्वेतदेकदेशविवर्त्तिरूपकेऽतिव्याप्तमाशङ्क्य ततो भेदमाह। व्यङ्ग्येऽपि रूपक इति। व्यङ्ग्यरूपकेऽपीत्यपेरन्वयः। एकदेशविवर्त्तिरूपक इत्यर्थः। तस्यै[6]कदेशविवर्त्तमानस्यैकदेशान्तरे व्यङ्ग्यत्वादित्युपरञ्जकत्वं रूपकत्वं स्वेन रूपेण प[7]ररूपाच्छादकत्वमिति यावत्। एकदेशे तूपरञ्जकत्वेन प्रक्रान्तत्वादेकदेशान्तरमप्युपरञ्जकत्वेनैव व्यज्यते। समासोक्तौ तु विशेषणमात्रव्यङ्ग्यत्वादप्रस्तुतस्य प्रस्तुतावच्छेदकत्वमात्रं न तूपरञ्जकत्वमिति भेद इत्यर्थः। तर्हि रूपकपरिणामयोः को भेदस्तत्राह। यत्रेति। अप्रस्तुतस्य स्वतादात्म्येन प्रस्तुतोपयोगित्वं परिणामे नोपरञ्जकत्वमित्यर्थः। तदुभयविविक्तसमासोक्तेः स्वरूपमाह। यत्र पुनरिति। विशेषणसाम्यमात्रगम्यत्वेन रूपसमारो-

---

१ पदार्थधर्मविशिष्टत्वेनारोप° C., M.; °पदार्थस्य विशिष्टत्वे° T. २ विनेत्यादि K. ३ K. omits विनोक्तिः ४ साधारणेत्यादि K. ५ यत्र च प्रस्तु° D. ६ °कदेशे वर्त्तमान° D. ७ पररूपावच्छेदकत्व° D.

भासनादारोपविषयस्य प्राधान्यं तत्रेयम्[1]। अतस्तु प्रस्तुताद्वाच्यादप्रस्तुतस्य प्रतीयमानत्वे संक्षेपेणार्थयोः कथनमित्यन्वर्था समासोक्तिः। निमित्तमन्तरेण प्रस्तुतादप्रस्तुतस्य गम्यत्वेऽतिप्रसङ्गः स्यादित्यत्र निमित्तं साधारणो धर्मः। स द्वेधा गुणः क्रिया च। गुणो यथा

गुणप्रणयिनी मुष्टिग्राह्यमध्या सुवंशजा।
नरसिंहधनुर्वल्ली करोति भवतो मुदम्॥

अत्र श्लेषोपपादितस्य गुणप्रणयित्वादिगुणरूपस्य धर्मस्य साधारणत्ववशादपरित्यक्तस्वरूपाया एव धनुर्वल्याः स्त्रीत्वधर्मविशिष्टत्वप्रतीतिः।

यथा वा

विशालवलभीभुजान्[2] लघुविशीर्णलूतागुण-
प्रतानवसनश्रियः स्फुटसुधाविलासस्मितान्।

पायोगादप्रस्तुतस्य विषयावच्छेदकत्वमात्रं न तु तादात्म्येनावच्छेदकत्वमेवेति[3] सर्वालंकारोत्तीर्णेयं समासोक्तिरित्यर्थः। संज्ञां व्युत्पादयति। अत इति। कथनं प्रतिपादनं तेनोभयोरवाच्यत्वेऽप्यदोषः। अत्र विशेषणं गमकमित्युक्तं कीदृशस्य[4] तस्य गमकत्वं कस्य वा विशेषणत्वं कतिविधं वेत्यपेक्षायामाह। निमित्तमिति[5]। गुणेति[6]। गुणो मौर्वी रूपलावण्यादिश्च। मध्यो लस्तकः अवलग्नं च। वंशो वेणुरन्वयश्च। अत्र को गुणः कथं च तस्य साधारण्यं तद् दर्शयन् लक्ष्ये लक्षणं पातयति। अत्रेति। साधारणत्ववशादिति। श्लेषमूलाभेदाध्यवसायवशादित्यर्थः। अत्र व्यवहारसमारोपो न रूपसमारोप इति यदुक्तं तद्व्यनक्ति। अपरित्यक्तेति[7]। इह त्रयी विशेषणगतिः। श्लिष्टमौपम्यगर्भं साधारणं चेति। तत्राद्यमुक्तम्। द्वितीयमाह। विशालेति[8]। लूता तन्तुवायकीटः। तस्या

[1] तत्र सेयम् D. [2] °वलभीभुजा T. [3] तादात्म्यमाच्छादकत्वं चेति K. [4] D. drops दृशस्य [5] °मित्यादि K. [6] °णेत्यादि K. [7] °क्तेत्यादि K. [8] °लेत्यादि K.

नृसिंह वसुधाधिप त्वदरिवीरलीलागृहान्
विशङ्कमुपगूहते विपिनपावकज्वालिका ॥

अत्र वलभी भुजेव वलभीव भुजेत्याद्युपमासमाससामर्थ्योपजातगुणसाधारणत्वमाहात्म्याद्गृहाणां पावकज्वालायाश्च नायकताख्यधर्मविशिष्टत्वप्रतीतिः ।

क्रिया यथा

विश्राणनैस्तैः परिभूयमानः
कल्पद्रुमो वीर कलिङ्गनाथ ।
लतोपगूढोऽपि न भृङ्गनादै-
राभाषते न स्मयते च पुष्पैः ॥

अत्राभाषणादिक्रियारूपधर्मसाधारण्याल्लताकल्पद्रुमयोर्नायकत्वप्रतीतिः ।

---

गुणप्रतानः तन्तुवितानः । सुधा लेपद्रव्यविशेषः । अत्रापि विशेषणस्य साधारण्यमापादयन् लक्षणं योजयति । अत्रेति । वलभी भुजेवेत्युपमितसमासः । वलभीवद् भुजेति मयूरव्यंसकादिः । एवं लूतागुणप्रतानो वसनश्रीरिव सुधा विलासस्मितमिवेत्यादि योज्यम् । उक्तसमासद्वयविवक्षयाह । उपमासमासेति । गुणो विशालभुजत्वादिः तस्य साधारणत्वमभेदाध्यवसायादिति भावः । नायकयोर्भावो नायकता तदाख्यधर्मविशिष्टप्रतीतिरित्यनेन व्यवहारसमारोप एवायं न रूपसमारोप इति सूचितम् । क्रियेति । स्पष्टम् । औपम्यगर्भविशेषणे यत्रोपमासमासस्तत्र समासोक्तिरित्युक्तम् । यत्रोपमारूपकसमाससंकरस्तत्रापि समासोक्तिरस्तीत्याह ।

---

१ D. has वलभी भुजेव वलभीभुजेत्युपमा°; T. has वलभी भुजेव वलभीभुजेत्याद्युपमा°
२ विभागनैस्ते T. ३ °नायिकानायकत्व° T., C., M. ४ क्रियेत्यादि K.

धाटीं वीर नृसिंह देव भवतः श्रुत्वा वनान्तं भिया
यान्तीनां रभसादरातिसुदृशां शाखाभुजैः शाखिनः ।
आकर्षन्ति कचान् हरन्ति सिचयं मृद्नन्ति गण्डस्थलीः[1]
श्लिष्यन्ति स्तनयोः स्पृशन्ति जघने गृह्णन्ति कण्ठे मुहुः ॥

अत्र शाखाभुजैरित्युपमारूपकसंदेहसंकरसमासोत्थापिता समासोक्तिः ।

रूपकगर्भत्वे[2] पुनः समासान्तराश्रयणात् साधारणधर्मत्वं संभवदपि न समासोक्तेर्गोचरः । एकदेशविवर्तिरूपकमुखेनैवार्थान्तरस्य व्यज्यमानत्वेनास्याः कैमर्थ्य[3]प्रसङ्गात् ।

धावन्तीर्नरसिंह देव रभसाद्वीक्ष्य प्रसूनेक्षणै-
स्तासां बाहुलतासहोदरतया वात्सल्यनिघ्ना इव ।
आहारोऽस्तु फलैरिति प्रतिवनं पादे लगन्त्यो लता
याचन्ते त्वदरातिराजरमणीः पुष्पन्धयानां रुतैः ॥

धाटीमिति । विनापि[4] विनाभूयेत्यर्थः । सिचयं वस्त्रम् । संकरं दर्शयति । अत्रेति । उभययाप्याकर्षणादिक्रियानिर्वाहात् संदेहः । यत्र पुना रूपकनिश्चयः न तत्र समासोक्तेरवकाश इत्याह । रूपकगर्भत्वेनेति । कैमर्थ्यं[5] वैयर्थ्यम् । धावन्तीरित्यादि । सहोदरता सादृश्यमेकोदरता च । वात्सल्यनिघ्नाः प्रेमपरतन्त्रा इत्यर्थः । पुष्पाणि धयन्तीति पुष्पन्धयाः भृङ्गाः । "नाडीमुष्टयोश्च" इति चकाराद्धेटः खश्प्रत्यये मुमागमः । अत्र लता वात्सल्यनिघ्नाः सत्यो रमणीर्याचन्त इवेति चेतनधर्मः[6] प्रार्थनमुत्प्रेक्ष्यते । तस्मिन्नवसर्थमचेतनासु लतासु सखी-

१ °स्थलीं O., M. २ रूपकगर्भितत्वे T. O. ३ कैमर्थक्यं T. ४ विना विनाभूतेत्यर्थः D. ५ कैमर्थक्यं K. ६ चेतनाधर्मः D.

अत्र विलोकनानुगुण्यात् पुष्पाणां नयनत्वेन रूपणासिद्धौ लतानां सखीत्वरूपणं प्रतीतिपथमवतरदुत्प्रेक्षाया निमित्ततामातनुते ।

विधुरीकुर्वन् कबरीं लुम्पन् मकरीं विसूत्रयन् हारम् ।
वीर विरोधिमृगीदृशि खेलति कामीव ते खड्गः ॥

अत्र विधुरीकरणादिसाधारणधर्मसामर्थ्यादेवाप्रस्तुतस्य कामिनः प्रतीयमानत्वादुपमायाः पौनरुक्त्यमिति समासोक्तिविषय उपमा न कार्या । तस्मात् 'हम्मीरमानमर्दन खेलति खड्गस्तवारिनारीषु' इति पाठः परिणमयितव्यः ॥

**विलसति विशेषणानां प्रतीयमानार्थगर्भता यत्र ।**
**सहृदयहृदयाह्लादी परिकरनामा स निर्दिष्टः ॥२४॥**

---

स्वबुद्धिन्यायेन । तत्र निमित्ततयैकदेशविवर्तिरूपकसमासोक्त्योः प्रसक्तौ रूपकस्य प्राबल्यमाह । अत्रेत्यादि । प्रसूनेक्षणैरित्यत्रोक्तसाधकबलात् रूपकासिद्धौ प्रक्रान्तप्राबल्यादेशान्तरेऽपि तदेव प्रवृत्तं सन्निमित्ततां भजतीति न समासोक्तेरवकाश इत्यर्थः । एवं समासोक्त्येकदेशविवर्तिरूपकयोः समावेशे रूपकं बलीय इत्युक्तम् । उपमासमासोक्तिसमवाये तु समासोक्तिरेव बलीयसीति दर्शयन् साधारणविशेषणाश्रितां समासोक्तिं चोदाहरति । विधुरीति । विधुरीकुर्वन् विरहितं कुर्वन् कबरीं केशपाशम् । "जानपद——" इत्यादिना ङीप् । विसूत्रयन् विच्छिन्दन् । ननु कामीवेत्युपमैवेयं न समासोक्तिरित्याशङ्क्य सत्यं तां वराकीं बाध्यतयोपस्थापितां निष्कासयाम इत्याह । अत्रेति । तथापि कुतः समासोक्तिरत आह । तस्मादिति । अस्याः प्रपञ्चस्त्वलंकारसर्वस्वे द्रष्टव्यः ॥

समासोक्तिः ॥

विशेषणविच्छित्तिसाम्यात् समासोक्त्यनन्तरं परिकरं लक्षयति । विलसतीति । प्रतीयमानार्थगर्भतार्थान्तरप्रत्यायकत्वमित्यर्थः । साभिप्रायविशेषणत्वं परि-

---

१ कबरी O., M. २ प्रक्रान्तबलादेकदेशान्तरेऽपि K. ३ विधुरीत्यादि K. ४ कामिनी सेत्युप° K. ५ K. drops समासोक्तिः ६ °सतीत्यादि K.

नरसिंहनरेन्द्रेण नन्दनद्रुमबाहुना।
धनेशांशावतारेण धन्याः केनार्थिनः कृताः॥

**ताहक् किमपि विशेष्यं साभिप्रायत्वमश्नुते यत्र।**
**स परिकराङ्कुरनामालंकारः कीर्तितः कविभिः॥२५॥**

परिकरवैपरीत्येनास्य प्रवृत्तेरिहाभिधानम्।

नरसिंह महिपाल कीर्तिस्त्रिपथगा तव।
न कस्य भविता श्लाघ्या पुनाना भुवनत्रयम्॥

अत्र त्रिपथगेति त्रिभुवनपवित्रीकरणायोपपत्तिरूपमभिप्रायमभिव्यञ्जयन् वाच्योन्मुखीभवतीति नायं ध्वनेर्विषयः। क्वचित् पुनः

---

कर इत्यर्थः। समासोक्तौ प्रस्तुतविशेषणानां साधारण्यादप्रस्तुतविशेष्यगमकत्वं परिकरे तु प्रस्तुतगत[1]विशेषप्रत्यायनेन तदुपस्कारकत्वमिति भेदः। नरसिंहे[2]ति। अत्र कल्पद्रुमादप्युदारः कुबेरादप्याढ्य इति विशेषणाभिप्रायः॥

**प[3]रिकरः॥**

विशेषणविच्छित्त्याश्रयणादलंकारद्वयमभ्यधायि। अथ विशेष्यविच्छित्त्याश्रयणादेकमलंकारं परिकराङ्कुरनामानं लक्षयति। तादृगिति[4]। तादृक् त[5]थाद्दृशमित्यर्थः। साभिप्रायविशेष्यत्वं परिकराङ्कुर इत्यर्थः। संगतिमाह। परिकरेति। नरसिंहेति[6]। विशेष्यस्य साभिप्रायत्वं विवृणोति। अत्र त्रिपथगेति। त्रिभिः पथिभिर्गच्छतीति व्युत्पत्त्या योगबलात् त्रिभुवनाभिव्यापकपावनत्वं गम्यते। गङ्गादिशब्दैस्तु नैवमिति भावः। वाच्योन्मुखत्वं वाच्योपस्कारकत्वम्। अतो न ध्व[7]निशङ्केत्याह। इ[8]ति नायमिति। क्वचिद्योगमनपेक्ष्य प्रसिद्धेरेव व्यञ्जकत्वमित्याह। क्वचित्पुनरिति। अत्र व्यङ्ग्यव्यञ्जने विवृणोति।

---

1 D. drops गत 2 °हेत्यादि K. 3 K. drops परिकरः 4 °गित्यादि K. 5 तथातुल्यमि° D. 6 °हेत्यादिना K. 7 °ध्वनित्वशङ्के° D. 8 नायमिति D.

प्रसिद्धत्वाद्विशेष्यमतथाभूतं प्रयुक्तमपि तथाभूतमभिप्रायमभिव्यनक्ति। यथा

नाथः[2] काकोदराणां कथयति लिखति क्ष्मापतिः कार्त्तवीर्यो
मेला[3]नन्दो जलानां निधिरचलपतिर्लेखनी[4] व्योम पत्रम्।
संख्या दूरे परार्धाद्यदि भवति पुनः किं च वैरिञ्चमायुः
संख्येयत्वं तदानीं दधति तव गुणाः श्रीनृसिंह क्षितीन्द्र॥

अत्र काकोदरनाथादीनि विशेष्याणि सहस्रमुखत्वादिरूपमभिप्रायमभिव्यञ्जयन्ति॥

**यत्र विशेष्यविशेषणसाम्यं स श्लेष एष तु द्वेधा।**
**किं चास्मिन् वाच्यत्वं विशेष्ययोस्तुल्ययोरेव॥२६॥**

नायं समासोक्तिः। विशेषणमात्रसाम्यस्य तां प्रति प्रयोजकत्वात्। विशेष्यविशेषणसाम्यमधिकृत्य चास्य प्रवृत्तत्वात्[5]। नाप्ययं तुल्ययोगिता। विशेष्यगतश्लिष्टत्वस्य तस्यामभावात्। अयं तुल्ययोरेवेति

---

अत्रेति। काकोदरनाथादीनां सहस्रमुखत्वादिरूपेणैव प्रसिद्धत्वादिति भावः॥

परिकराङ्कुरः[6]॥

विशेषणमात्रविच्छित्त्या समासोक्तिपरिकरावुक्तौ विशेष्यमात्रविच्छित्त्या परिकराङ्कुरालंकारः। अथोभयविच्छित्त्याश्रयणेन श्लेषमाह। विशेषणेत्यादि। विशेषणविशेष्यनिष्ठं शब्दमात्रसाधर्म्यं श्लेषः। स केवलप्रकृतगोचरः केवलाप्रकृतगोचरश्चेति द्विविध इत्यर्थः। उभयगोचरस्तृतीयोऽपि भेदोऽस्तीति केचित्। तन्निरासार्थमाह। किं चेति। यतस्तुल्ययोरेव विशेष्ययोर्वाच्यत्वं नातुल्ययोरतो द्विविध एवायमित्यर्थः। समासोक्तितुल्ययोगितयोः क्रमेणातिव्याप्तिं निरस्यति। नायमिति[7]। द्वितीयार्धं तृतीयभेदनिरासपरत्वेन व्याचष्टे। अयं तुल्ययोरेवेति।

---

१ °द्विशेष्यं प्रयुक्तमतथाभूतमपि तथाभूतमभिप्राय° D. २ नाथः काकोदराणामित्यादि T. ३ मेलामन्दो C., M. ४ °र्लेखिनी C., M. ५ प्रवर्तमानत्वात् T. ६ K. drops परिकराङ्कुरः. ७ नायमित्यादि K.

वचनसामर्थ्यात् प्राकरणिकयोरेव वाप्राकरणिकयोरेव वाभिधेयत्वेन भवन्न द्वैविध्यमतिक्रामति । क्रमेण यथा

कन्दर्पोदयमाश्रयद्भिरलसैः कान्तारसंप्रापितैः
शश्वत्सानुचरैः प्रभूतकनकोत्तुङ्गक्षयैर्भूषितैः ।
राजन् वीर नृसिंह देव भवतोमित्रैः समस्तैरपि
प्राप्यन्ते ननु चित्रमत्र युगपत्तास्ताः पराभूतयः ॥

अत्र त्यागशौर्ययोर्वर्ण्यमानत्वान्मित्रामित्राणां प्राकरणिकत्वम् ।

निजकरकलितस्वाहं काष्ठाश्लेषोपनीतमाहात्म्यम् ।
हम्मीरमानमर्दन भवतस्तेजो विभावसुं जयति ॥

केवलप्रकृतयोःकेवलाप्रकृतयोर्वा विशेष्ययोः प्रकृतत्वाप्रकृतत्वयोरविशेषादभिधाया नियन्तुमशक्यत्वाद्वाच्यत्वं संभवति । प्रकृताप्रकृतयोस्तु प्रकृतनियन्त्रणादप्रकृतप्रतीतेर्ध्वनित्वेन चैविध्यासंभवात् द्वैविध्यमेवेत्यर्थः । तयोः पृथक्शब्दनिर्देशे तूपमादीपकाद्यलंकारान्तरैर्बाध इति भावः । कन्दर्पेति । कन्दर्पोदयं कामोद्रेकमन्यत्र कुत्सितदर्पोद्रेकमित्यर्थः । कान्तारसं कान्तारागमन्यत्र कान्तारं वर्त्मदुर्गमम् । सानुचरैरनुचरसंहितैः प्रस्थचरैश्च । कनकैः सुवर्णधुर्धूरैश्च । उत्तुङ्गक्षयैस्तुङ्गभवनैः प्रबलनाशैश्च । भूषितैरलंकृतैर्भुव्युषितैः शयानैश्च । भवतोमित्रैरित्यत्रमित्रैरमित्रैरिति च्छेदः । समस्तैर्मिलितैः समन्ततः क्षिप्तैश्च । परा उत्कृष्टयः भूतयः संपदः । अन्यत्र पराभूतयः पराभवाः । अत्र कनकवर्जं सर्वत्र शब्दश्लेषः । निजेति । 'बलिहस्तांशवः कराः' इत्यमरः । करेण राजदेयेन बलिना कलिताः स्वाहाः स्वान्यहानि संपन्नानि यस्य तत् कलितस्वाहं करदानफलीकृतजीवितकालमन्यत्र हस्तगृहीतस्वाहादेवीकं तथांशुकृतनिजवासरं च । स्वान्यहानि स्वाहाः । प्रतिमासं दिनकरभेदात् स्वशब्दः । काष्ठाश्लेषः प्रकर्षप्राप्तिरिन्धनसंबन्धो दिग्व्याप्तिश्च तेनोपनीतमाहात्म्यं प्राप्तप्रभावम् । तेजः प्रतापः । विभावसुमग्निमर्कं च ।

१ मित्रैरमित्रैरपि D. २ कन्दर्पेत्यादि K. ३ °सचिवैः D. ४ °धंत्तूरैश्च D. ५ निजेत्यादि K.

अत्र विभावसुशब्दवाच्ययोर्दहनतपनयोरुपमानत्वादप्राकरणिकत्वम् । विशेष्यविशेषणसाम्येन पुनर्यत्र प्रकरणादिना प्रकृतार्थ एव शृङ्खलितायामभिधायामप्रकृतार्थाभिधानाय सामर्थ्यविधुरत्वेऽपि शब्दस्याप्रकृतार्थोऽपि प्रतीतिसरणिमनुसरति तत्र शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो ध्वनिः । यथा

हिरण्यकशिपुक्षेत्रदानदर्शितविस्मयः ।
न कस्य श्लाघनीयोऽसि नरसिंह जगत्पते[1] ॥

अयं च प्रयत्नादिभेदात् प्रातीतिक एव शब्दान्यत्वे जतुकाष्ठन्यायेन स्वयमेव शब्दयोः श्लिष्टत्वाच्छब्दगतः । अत एवास्य सभङ्गपद-

---

अयं तु शब्दश्लेष एव । प्रकृताप्रकृतगोचरे तूभयसाम्ये ध्वनिरेव न श्लेष इत्याह । विशेष्येति[2] । ननु विशेष्ययोः पृथङ्निर्देशे विशेषणमात्रसाम्ये प्रकृताप्रकृतश्लेष इत्यन्यैरुक्तं किं नेष्यते । तत्रोपमादीपकाद्यलंकारान्तराविरोधे श्लेषस्य प्रतिभासमात्रसारत्वात् । ननु गुणक्रियासाम्यवच्छब्दसाम्यमुपमायां प्रयोजकमपि[3] नूपमाप्रतिभोत्पत्तिहेतुः श्लेष एवायम् । अन्यथात्रापि विविक्तविषयालाभात् सर्वथैवास्य बाधः स्यात् ततो निरवकाशत्वात् सर्वालंकारापवादोऽयमित्यलंकारसर्वस्वकार इति चेन्न । पूर्वोक्त[4]भेदद्वयेऽस्यावकाशत्वात् । न च तत्रापि तुल्ययोगिताशङ्कावकाशः । तत्र विशेष्यश्लेषाभावात् । तस्माद् द्विविध एव श्लेष इति सिद्धम् । द्विविधोऽप्ययं पुनः शब्दगतोऽर्थगतश्चेति द्विविध इति ब्रुवन्नाद्यं दर्शयति । अयं चेति । प्रातीतिकः प्रतीतिसिद्धो न त्वौपपत्तिक इत्यर्थः । यत्र प्रयत्नस्वरादिभेदाद्वस्तुतो भिन्नयोरेव शब्दयोः मिथःसंश्लेषभेदाज्जतुकाष्ठवदेकत्वेनावभासः शब्दश्लेष इत्यर्थः । अत एवेति । शब्दभेदादेवेत्यर्थः । सभङ्गपदत्व

---

१ महीपते T. २ विशेष्येत्यादि K. ३ प्रयोजकमप्युपमा° D. ४ पूर्वभाषित° K.

त्वम् । यत्र पुनः प्रयत्नादिभेदाभावाच्छब्दैक्ये सत्येकनालावलम्बितफलद्वयन्यायेनार्थयोः श्लिष्टत्वं तत्रार्थगतः । अत एवात्राभङ्गपदत्वम् । शब्दपरिवर्त्तनसहिष्णुत्वमर्थश्लेषस्य विषय इति पुनः काव्यप्रकाशकारस्य[1] सिद्धान्तः[2] ॥

मर्थावभासवेलायामिति[3] शेषः । द्वितीयं[4] निरूपयति । यत्र पुनरिति । यद्यप्यर्थभेदाच्छब्दभेद इति दर्शने प्रत्यर्थं शब्दभेदस्तथापि तस्यौत्पत्तिकत्वात् प्रत्यर्थं शब्दभेदो ज्ञाप्यत इत्युपपत्तिगम्यत्वाद्भेदस्य तु प्रतीतिसिद्धस्य दुरपह्नवत्वाच्छब्दैक्यमेव युक्तमित्यभिप्रेत्याह[5] । शब्दैक्ये सतीति । अत एव शब्दैक्यादेवेत्यर्थः । यत्रैकवृन्तफलद्वयवदखण्डैकशब्दे अर्थद्वयसंश्लेषः[6] सोऽर्थश्लेष इत्यर्थः । इहालंकार्यालंकारभावो लोकगम्यः । यथा लोके कण्ठगतः कण्ठालंकारः कर्णगतः कर्णालंकार इत्यादिव्यपदेशस्तथा शब्दगतः शब्दालंकारोऽर्थगतोऽर्थालंकार इत्युभयरूपः श्लेषः । स उभयोऽप्यर्थश्लेषद्वारसंगत्यार्थालंकारप्रस्ताव एवालंकारसर्वस्वकारमतेनात्र निरूपितः । काव्यप्रकाशकारेण त्वलंकार्यालंकारभावस्यान्वयव्यतिरेकावसेयत्वात् भास्वत्करेत्यादावभङ्गपदत्वेऽपि भास्वरहस्तसूर्यकिरणरूपार्थद्वयस्य भास्करशब्दान्वयव्यतिरेकानुविधानाच्छब्दाश्रयत्वाच्छब्दश्लेष एवेति द्वितीयोऽपि शब्दालंकारप्रस्तावे निरूपितस्तर्हि तन्मते कोऽर्थश्लेषस्य विषय अत आह । शब्दपरिवर्त्तनेति । यदाह । 'अर्थश्लेषस्य स विषयो यत्र शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना' इति । यत्र शब्दान्वयव्यतिरेकानुविधानं विनैवार्थयोः स्वमहिम्नैव श्लिष्टत्वं सोऽर्थश्लेष इत्यर्थः । यथोदाहृतं तेनैव[7] ।

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥

इत्यत्रोन्नमनावनमनयोरौद्धत्यानौद्धत्योयाश्चार्थयोस्तुलाखलवर्त्तिनोः शब्दपरिवर्त्तनेऽपि श्लिष्टताप्रतीतिः ॥

श्लेषः[8]

---

१ काव्यप्रकाशिकाकारस्य T., M. २ राद्धान्तः T., C., M. ३ अर्थभासवेला° K. ४ तृतीयं K. ५ न्याय्य इत्यु° K. ६ शब्देनार्थद्वय° K. ७ तेन D. ८ K, drops श्लेषः.

**सामान्यविशेषत्वे सारूप्ये कार्यकारणत्वे च ।**
**अप्रस्तुतप्रशंसा निर्दिष्टा प्रस्तुतस्य गम्यत्वे ॥२७॥**

इहाप्रस्तुतस्याप्रस्तुतत्वादेव वर्णनमनुचितमपि प्रस्तुतपरत्वेनौचितीमालम्बत इति प्रस्तुतं व्यङ्ग्यमप्रस्तुतस्य वाच्यस्य सिद्धिमादधातीति वाच्यसिद्ध्यङ्गमिदं गुणीभूतव्यङ्ग्यम्। अत एवाप्रस्तुतस्य प्रशंसा कथनमित्यन्वर्थताश्रयणसामर्थ्यादप्रस्तुतस्य वाच्यत्वमत्र सूत्रेऽनुपात्तमपि लभ्यते। संबन्धेन विना पुनरप्रस्तुतात्प्रस्तुतावगतावतिव्याप्तिः स्यादित्यर्थान्तरप्रतिपत्तिनिमित्तेन भवितव्यं संबन्धेन। संबन्धे तु भवन्ती सामान्यविशेषत्वकार्यकारणत्वसारूप्यरूपसंबन्धत्रयोल्लङ्घनजङ्घालतां नावलम्बते। सामान्यविशेषत्वे

प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिरुक्ता तद्वैपरीत्येनाप्रस्तुतात्प्रस्तुतप्रतीतावप्रस्तुतप्रशंसामाह। **सामान्येत्यादि**। परिकरादीनां तु त्रयाणां विशेषणविच्छित्तिप्रसङ्गान्मध्यप्रवेशः। यत्र सारूप्यादिसंबन्धत्रयान्यतमवशेनाप्रस्तुतकथनात् प्रस्तुतं गम्यते सोऽप्रस्तुतप्रशंसेत्यर्थः। ननु प्रस्तुतमुपेक्ष्याप्रस्तुतस्य कथने कोऽलंकारः। प्रत्युत वाजपेयशरद्वर्णनवत् परिहासहेतुरयं दोष एवेत्याशङ्कामनूद्य प्रस्तुतावगमकत्वान्न दोष इति परिहरति। **इहेति**। प्रस्तुतावगमे कोऽयमतिशय इत्यत आह। **प्रस्तुतमिति**। ननु न्यूनं लक्षणमप्रस्तुतस्य कथनमित्यनुक्तेरित्याशङ्क्य संज्ञानिर्वचनात्तल्लभ्यत इत्याह। **अत एवेति**। संबन्धापेक्षायाः प्रयोजनमाह। **संबन्धेनेति**। अन्यथा सर्वं सर्वेण गम्यत इत्यतिप्रसङ्गः स्यादित्याह। **अतिव्याप्तिः स्यादिति**। अतः परमासमाप्तेरस्याः स्पष्टोऽर्थः श्लोकाश्च गताः

१ °चित्यमालम्बते C.; °चित्यमवलम्बते T., M. २ °वतिप्रसङ्गः स्यादि° D. ३ संबन्धेन तु T. ४ भवन्ती न T. ५ जंघालतामलम्बते T. ६ सारूप्यादिनियमवलत्रय° K. ७ सेयमप्रस्तुत° K. ८ इहेत्यादि K. ९ °शय अत आह K. १० D. omits ननु ११ न्यूनलक्षण° D. १२ इतः पर° D. १३ स्पष्टार्थाः श्लोकाः प्रायेण गतार्थाः D.

सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्य प्रतीयमानत्वे द्वैतं कार्यकारणत्वेऽपि कार्यात् कारणस्य कारणाद्वा कार्यस्य व्यज्यमानत्वे द्वैविध्यं सारूप्ये त्वेक एव प्रकार इत्यस्याः पञ्च प्रकाराः । तत्र सामान्याद्विशेषस्य प्रतीतौ यथा

दयायै दृक् कर्णः सरसकविसूक्ताय वदनं
सरस्वत्यै पृष्ठ्यै भुजशिखरमीशाय हृदयम् ।
इति प्रत्तास्तावत् स्वयमवयवा अप्यविरतं
प्रदेयं किं कस्मै न तव नरसिंह क्षितिपते ॥

अत्र मनोरथपथातिशायि तव वितरणमिदं येन कृतार्थीकृतोऽहमिति विशेषे प्रस्तुते किं कस्मै न त्वया प्रदीयत इति सामान्यमुक्तम् । तेनात्र सामान्यादप्रस्तुताद्वाच्यात् प्रस्तुतो विशेषः प्रतीयते । विशेषात् सामान्यप्रतीतौ यथा

नृसिंह वसुधाधिप त्वयि रणोन्मुखे धावतः
प्रतीपपृथिवीपतेः पथि पथि प्रदीप्तक्षुधः ।
चिरादगुरवन्ध्यतां दुरवगाहविन्ध्याटवी-
पलाशिविटपाञ्चलाहृतफलार्पणेन द्विपाः ॥

अत्र रणाय स्पृहयति नरसिंहक्षितिपतौ कति कति न दुरवस्थामन्वभवन्नरपतय इति सामान्ये प्रस्तुते प्रतीपपृथ्वीपतेरिति विशेषः कथितः ।

कार्यात् कारणप्रतीतौ यथा

क्षीरोदो लवणोदवत् कुमुदिनी नीलोत्पलिन्याकृति-
र्ज्योत्स्ना ध्वान्तमलीमसा मलयजः कालागरुश्यामलः ।

---

प्रायेण व्याख्यातश्च । इह व्यङ्ग्यस्य प्रस्तुतस्य स्वयं वाच्यसिद्ध्यङ्गत्वमुक्तमन्यैस्तु-

१ पलाशविटपा° C., M. २ नृसिंह° C. ३ °मन्वभूवन्नरिनरपतय D. ४ कारणगुणप्रतीतौ C. कारणगुणप्रतीतिर्यथा T.

हंसाः क्रौञ्चसहोदराः किमपरं मुक्ताश्च नीलोपमाः
श्रीमन् वीर नृसिंह देव भवतः कीर्त्तेः स्फुरन्त्यग्रतः ॥

इह क्षीरोदप्रभृतीनामुपमानत्वेनोपनिबद्धानामप्रस्तुतत्वं कीर्त्तेश्चोपमेयत्वेनोपात्तायाः प्रस्तुतत्वम्। ततः क्षीरसागरादिगतेन लवणार्णवत्वादिसंभावनावशोन्मिषितेनाप्रस्तुतेन मालिन्यरूपेण कार्येण लोकोत्तरं किमपि कीर्त्तिगतमवदातत्वं प्रस्तुतमेव प्रतीयते। कारणात् कार्यप्रतीतौ यथा

बाहुस्ते नरसिंह देव विजयश्रीकेलिसौधध्वज-
स्तत्रापि प्रलयाग्निधूमरुचिना खड्गेन सख्यं गतः।
निर्मर्यादविशीर्यमाणविशिखप्राग्भारशात्कारिणि
प्राक्रीडत् समरे सपत्नहरिणाक्षीणां ह हा हा विधिम् ॥

अत्र सपत्नहरिणाक्षीणां कीदृशी दशा वर्त्तत इति राज्ञा कार्ये पृष्टे केनापि कारणमुदीरितम्। सारूप्ये यथा

पणश्रेणी शशकपरिषच्छल्यकानां कुटुम्बं
कोकिव्यूहः श्रयति सुखितां यत्र कुत्रापि कुञ्जे।
कोऽसौ धन्यः कथय सुकृती पादपोऽभ्रंलिहश्री-
र्यस्य च्छायामयमनुसरत्यातपार्त्तः करीन्द्रः ॥

अत्र सरूपादप्रस्तुताच्छाच्यात्तरोः सरूप एव प्रस्तुतो महान्तमपि रक्षितुं क्षमो नरसिंहमहीपतिः प्रतीयते। अभिनवगुप्ताचार्याः पुनरस्यां वाच्यव्यङ्ग्ययोः सममेव प्राधान्यमाहुः ॥

ल्यप्राधान्यमुक्तं सोऽपि गुणीभूतव्यङ्ग्यभेद एवेत्याह। अभिनवगुप्तेति ॥

अप्रस्तुतप्रशंसा

१ नीलोत्पलाः D., G. २ °विकीर्यमाण° D., G. ३ दशा कीदृशी वर्त्तत T. ४ पणश्रेणिः D. ५ K. omits अप्रस्तुतप्रशंसा.

34

सामान्येन विशेषः सामान्यं वा यदा विशेषेण ।
कथितः समर्थ्यतेऽर्थो भवति तदार्थान्तरन्या-
सः ॥ २८ ॥

अर्थ्यत इत्यर्थः प्रस्तुत इति यावत् । इहाप्रस्तुतप्रशंसाप्रसङ्ग-संगतत्वेनास्य[1] निरूपणम् । अपूर्वत्वेन[2] प्रतीतेरविद्यमानत्वादनु-मानवैलक्षण्यम्[3] ।

लक्ष्मीस्ते परिचारिका दश दिशो दास्यस्तवाज्ञापराः
पृथ्वी ते करदायिनी तव गिरां देवी विनोदास्पदम् ।
गाढं वीर नृसिंह देव निखिलप्रत्यर्थिलक्ष्मीर्मुदा
त्वामालिङ्गति मन्त्रशक्तिमहतां का वा न वश्याः स्त्रियः ॥

अत्र मन्त्रशक्तिमहतामिति सामान्येन लक्ष्मीस्त्वामालिङ्गतीति विशेषः समर्थितः ।

वीरैः[4] सर्वानपि नरपतीञ्छौर्यगाम्भीर्यभाजः
शक्तो[5] जेतुं निशितविशिखैः कार्मुकाणां कदम्बैः ।

---

सामान्यविशेषभावप्रसङ्गादर्थान्तरन्यासमाह । सामान्येनेति । यत्र प्रस्तुतस्य सामान्यस्य विशेषस्य वा पूर्वं पश्चाद्वा निर्दिष्टस्य तदितरेण समर्थनमर्थान्तरन्यास इत्यर्थः । संग्रहकारः समर्थशब्दं प्रस्तुतसामर्थ्यपरत्वेन व्याचष्टे । अर्थ्यत इति । संगतिमाह । इहेति । अनुमानाद् भेदमाह । अपूर्वत्वेनेति । अप्रतीतप्र-त्यायनमनुमाने प्रतीतस्य समर्थनमत्रेति भेद इत्यर्थः । यद्यपि कार्यकारणभावमूलौ च द्वौ भेदावुक्तावलंकारसर्वस्वे तथापि तयोः काव्यलिङ्गेऽन्तर्भाव इति काव्यप्रका-शकारसिद्धान्तावलम्बनेन भेदद्वयमेव लक्षयित्वोदाहरति । लक्ष्मीरिति[6] । स्प-

---

१ प्रसंगत्वेनास्य C., प्रसङ्गपरत्वेनास्य M. २ अपूर्वकत्वेन C., M. ३ °दनुमानत्वेन वैल-क्षण्यम् C., M. ४ वीराः G., D. ५ शक्ता G., D. ६ लक्ष्मीरित्यादि K.

एतत् सत्यं भुवनभवनाभोगसाम्राज्यलक्ष्मी-
शिक्षादक्षो जयति नृपतीनुत्कलक्षोणिपालः ॥

अत्र सकलवीरवृत्तान्तः सामान्यरूपो विशेषरूपेण नरसिंहनरपतिवृत्तान्तेन समर्थितः[1]। अयमत्र प्रतिफलितोऽर्थः। सामान्यविशेषयोर्वाच्ययोर्वाच्यत्वेऽर्थान्तरन्यासः। सामान्ययोरेव विशेषयोरेव वा वाच्यत्वे दृष्टान्तः। अत्र वीप्सासमानफलं[2] बहुवचनमवश्यं प्रयोक्तव्यं सर्वादिशब्दो वा यथा सर्वोपसंहाररूपा व्याप्तिर्व्यज्यते। इतरथा वाच्यावचनं स्यात् ॥

**यत्र व्यङ्ग्यस्य सतो हेतोः कार्याभिधानभङ्गीभिः।**
**स्यादभिधानं सुधियः पर्यायोक्तं विदुस्तदिदम्॥२१॥**

अत्र प्रतीयमानप्रस्ताव एवास्य निरूपणकारणम्। ध्वन्यमानत्वमनुभवत एव कथं वाच्यत्वानुभव इत्यभिधानस्य व्याघातः

---

ष्टोऽर्थः। अस्य दृष्टान्ताद्विषयं विविनक्ति। अयमत्रेति[3]। अस्यैव विशेषान्तरमाह। अत्रेति। बहुवचनादिप्रयोगस्य फलमाह। यथेति। अन्यथा वाच्यावचनाख्यो दोषः स्यादित्याह। इतरथेति ॥

अर्थान्तरन्यासः[4] ॥

अथाप्रस्तुतप्रशंसानन्तरं सामान्यविशेषभावप्रसङ्गादर्थान्तरन्यासमुक्त्वा गम्यप्रस्तावात् पर्यायोक्तं लक्षयति। यत्रेत्यादि। हेतोः कारणस्येत्यर्थः। यत्र प्रस्तुतकार्यकथनात् प्रस्तुतमेव कारणं गम्यते तत्र कार्यद्वारा कारणस्यैव पर्यायेण भङ्ग्यन्तरेणोक्तत्वात् पर्यायोक्तमित्यर्थः। संगतिमाह। अत्रेति। कार्याभिधानेत्यादिविशेषणवैयर्थ्यमाशङ्क्य शङ्कोत्तरमाह। ध्वन्यमानत्वमिति। व्याघाताभावं व्यनक्ति।

---

१ साधितः G. २ वीप्साफलं D. ३ अयमत्रेत्यादि K. ४ K. drops अर्थान्तरन्यासः

स्यादित्याशयवानाह। कार्याभिधानभङ्गीभिरिति। कार्योपनिबन्धनद्वारेण यत्र कारणमभिधीयते तत्र पर्यायोक्तम्। नेदमप्रस्तुतप्रशंसा। अत्रोभयोः प्रस्तुतत्वात्। तस्याः पुनरप्रस्तुतकार्यात् प्रस्तुतस्य कारणस्य गम्यत्वमित्यनयोर्नैकविषयत्वम्। यत् पुनरिह कार्यस्यैव वर्णनं तत्कारणापेक्षयास्य चमत्कारातिशयकारित्वात्। यथा

[3]अस्पृष्टाञ्जनसंपदः स्मृतिपथावस्थायिलीलास्मिताः
प्रत्याख्यातवतंसदामरचनास्त्यक्ताङ्गरागश्रियः।
दूरोद्धूतकुरङ्गनाभिमकरीभङ्गास्तरङ्गभ्रुवः
संजाता नरसिंह पार्थिव भवत्प्रत्यर्थिपृथ्वीभुजाम्॥

अत्रारिभूपालकलत्रगताञ्जनवर्जनादिरूपकार्यमुखेन विरोधिवधलक्षणं कारणं पर्यायेणोक्तम्। किं चात्रनृसिंहनृपप्रभावस्तावद्वर्ण्यते। स च रिपुकुलकदनलक्षणात् कारणादिव वैरिवधूवृत्तान्तरूपात् कार्यादपि वर्णितो भवतीत्युभयोरपि वर्ण्यमानराजप्रभावजन्यत्वेन प्रस्तुतत्वाद्वर्णनमुचितमेव। तथापि यदत्र कार्यस्यैव

---

कार्येपिनिबन्धनेति। व्यङ्ग्यस्यास्यतः साक्षादभिधानं व्याहतं न तु भङ्ग्यन्तरेणाभिधानमिति भावः। ननु कार्यात् कारणप्रतीतिरूपाप्रस्तुतप्रशंसाप्रभेदादस्य को भेदस्तत्राह। नेदमिति। प्रस्तुतादेवकार्यात् प्रस्तुतकारणप्रतीतौपर्यायोक्तमप्रस्तुतादप्रस्तुतप्रशंसेत्यनयोर्भेद इत्यर्थः। नन्विह कारणं साक्षादेवाभिधीयतां किं भङ्ग्यन्तरेणेत्यत आह। यत् पुनरिति। अस्पृष्टेत्यादि। स्पष्टम्। इह लक्षणार्थे योजयति। अत्रेति। नन्विह कार्यवत् कारणस्यापि प्रस्तुतत्वेन वर्णनार्हत्वात्तदेव किं न वर्ण्यते अत आह।

---

१ गम्यमानत्व° T. २ तत्तत्कारणा° C. ३ अस्पष्टा° D., G. ४ कार्येण T. ५ C., M., and D. drop कारणं ६ पर्यायोक्तम् T. ७ T. and G. omit वधू ८ कार्यस्य T.

वर्णनं तत् कारणापेक्षयास्य[1] चमत्कारातिशयकारित्वात्[2]। यदि पुनरिह प्राधान्येन प्रतिभाति[3] व्यङ्ग्यं तदा भवतु ध्वनेनावस्यान्तर्भावः[4]। न तु ध्वनेरत्रान्तर्भावः। अङ्गित्वेन महाविषयत्वेन च ध्वनेः स्थितत्वात्॥

**यत्र प्रक्रान्तायां स्तुतौ कथंचित् प्रतीयते निन्दा।**
**निन्दायां स्तुतिरथवा सेयं व्याजस्तुतिर्द्विविधा॥३०॥**

---

किं चेत्यादि। कारणापेक्षयेति। कारणस्य साक्षाद्वर्णनात् कार्यमुखेन वर्णनेन चमत्कारातिशय इत्यर्थः। नन्वयं शान्तिकर्मणि वेतालोदयो यद् व्यङ्ग्यविशेषात्मकत्वाद्रसध्वनेरलंकारान्तर्भाव[5] इत्याशङ्क्याह। यदि पुनरिति। सत्यं व्यङ्ग्योपजीव्येवायमलंकारः[6]। किं त्वालोचनायां व्यङ्ग्यस्य प्राधान्ये ध्वनिरेवायमलंकारो मा भूत् अप्राधान्ये स्वयमलंकारः। प्राधान्याप्राधान्ये अगूढापराङ्गत्वादिगुणीभावहेतुसद्भावपर्यालोचनाचतुरचेतसां[7] सुलभः संवाद एवेति भावः। अलंकारानन्तर्भावे हेतुमाह। अङ्गित्वेनेति। अलंकार्यत्वेनेत्यर्थः। तत्रालंकारोऽलंकार्यस्य शेषो न तु विपरीतम्। तथा च प्रधानालंकार्यानुरोधादलंकारस्यैवान्यथाभावो युक्तः। यथैन्द्या गार्हपत्यमुपतिष्ठत इत्यत्र द्वितीयानिर्देशात् प्रधानगार्हपत्यानुरोधेनाप्रधानस्य[8] ऐन्द्रीशब्दस्यान्यथानयनं तद्वदिति भावः। हेत्वन्तरमाह। महाविषयत्वेन चेति। बहुविषयत्वाच्चेत्यर्थः। सर्वत्र लब्धात्मकस्यैकत्र प्राधान्यसंदेहमात्रेण दुरपह्नवत्वादिति भावः॥

पर्यायोक्तम्[9]॥

गम्यत्वविच्छित्तिप्रस्तावात् व्याजस्तुतिमाह। यत्रेति। यत्र प्रक्रान्तया स्तुत्याप्रस्तुतत्वाद्बाधितया प्रस्तुता निन्दा निन्दया वा तादृशया तादृशी स्तुतिः प्रतीयते

---

१ T. omits अस्य. २ चमत्कारावहत्वात् T., C., M. ३ T. drops प्रतिभाति. ४ ध्वनावन्तर्भावः T. ५ °भावं आयात इत्या° D. ६ °पजीव्य एवा° K. ७ °प्राधान्ये त्वगूढा° D. ८ °गार्हपत्यावरोधेना° D. ९ K. omits पर्यायोक्तम्

**कथंचित्** प्रमाणान्तरबाधितत्वेनेति यावत्। अत्र निन्दायां प्रस्तुतायामप्रस्तुता स्तुतिः प्रारभ्यमाणा[1] प्रमाणान्तराद्बाधमनुभवन्ती निन्दापर्यवसायिनी भवति। एवं स्तुतौ प्रस्तुतायामप्रस्तुत[2]-निन्दा प्रक्रम्यमाणा[3] प्रमाणान्तराद्बाधमश्नुवाना स्तुतौ पर्यवस्यति। इयं च स्तुतिनिन्दात्मकविच्छित्तिविशेषावलम्बनेन प्रवृत्तेत्यप्रस्तुतप्रशंसायाः पार्थक्येन स्थिता। अलीकत्वाद् व्याजरूपा स्तुतिः व्याजेन निन्दामुखेन वा स्तुतिरित्यन्वर्थताद्वैविध्यमधितिष्ठन्ती न द्वैविध्यमतिवर्त्तते।

क्रमेण यथा

प्राणेश्वर स्वजनतुल्यसुखस्त्वमेवं
त्वय्यभ्युपेतबहुवल्लभताविलासे।

---

सा व्याजस्तुतिरित्यर्थः। कथंचिच्छब्दविवक्षितमर्थमाह। **कथंचिदिति**। उभयत्र बाध्यत्वे हेतुमाह। **अत्र निन्दायामिति**। अन्यप्रस्तावे प्रक्रान्तत्वमेवोभयत्र बाधहेतुरित्यर्थः। नन्वप्रस्तुतात् प्रस्तुतावगतेरविशेषादप्रस्तुतप्रशंसातोऽस्याः को भेद इत्याशङ्क्याह। **इयं चेति**। यत्र स्तुतिनिन्दयोरेकैकस्य गमकत्वं[4] तदितरस्य गम्यत्वं तत्रेयं व्याजस्तुतिः। ततोऽन्यत्राप्रस्तुतप्रशंसेति[5] भेद इत्यर्थः। संज्ञानिर्वचनमुखेनास्या द्वैविध्यमाह। **अलीकत्वादिति**। व्याजरूपत्वादित्यस्य व्याख्यानमेतत्। व्याजत्वेन वा व्याजेन वा स्तुतिरस्यामिति व्याजस्तुतिरिति द्वेधा व्युत्पत्त्या स्तुतिनिन्दा निन्दास्तुतिश्चेति द्विविधेत्यर्थः। तत्राद्यामुदाहरति। **प्राणेश्वरे**-त्यादि। सखिसमाचाराः[6] कामुका इति स्थिते सत्याह काचित् हे प्राणेश्वर त्वं स्वजने तुल्यसुखस्तुल्यवृत्तिरसीत्यर्थः। कुतः[7]। यत्तस्मादेव त्वय्यभ्युपेतबहुवल्लभताभि[8]-लापेऽङ्गीकृतबहुवाल्लभ्यव्यपदेशे सति भवदाननबन्धुस्त्वन्मुखसख इन्दुरपि पूर्वेद्युः

---

१ प्रारभ्यमाणात् T. २ °प्रस्तुता निन्दा O, M. ३ प्रक्रम्यमाणात् T., G.; प्रक्रम्यमाणा M. ४ गमकत्वे K. ५ °प्रशंसेतिभावः K. ६ सखीसमाचारात् कामुका K. ७ यतः K. ८ °ताभिलाषे D.

यान्निर्विवेश रजनीरमणीः सहस्रं
पूर्वेद्युरेष भवदाननबन्धुरिन्दुः ॥

अत्र भवान् स्वजनतुल्यसुख इति स्तुतिः प्रक्रान्तान्यासक्तो भवानिति निन्दामभिव्यनक्ति।

दिङ्मातङ्गाः कनकशिखरी सप्तयः सप्तसप्ते-
श्चिन्तारत्नं दिविचरतरुः श्रीनृसिंह क्षितीन्द्र।
अद्याप्येतत् सकलमकृथा नार्थिसादित्यपार्थ-
स्तेनायं ते वितरणकलाकौशलेनावलेपः ॥

इह [1]परिगणितपदार्थातिरिक्तमखिलमप्यर्थिसात् [2]कृतवानिति वस्तु वस्तुना व्यज्यते। तेन च व्यज्यमानेन वाच्यमेवो[3]पस्क्रियत इत्यस्योपसर्जनत्वम् ॥

**कमपि विशेषं वक्तुं प्रकृतस्योक्तस्य वक्ष्यमाणस्य।**
**यः प्रतिषेधाभासः कथितः सोऽयं द्विधाक्षेपः॥३१॥**

---

रजन्य एव रमण्यस्तासां सहस्रं निर्विवेश। यद् दृष्ट्वा सोऽपि बहुवल्लभोऽभूदित्यर्थः। एकैव सा रजनी सहस्रकल्पाजनीति भावः। स्तुतिनिन्दां व्यनक्ति। **अत्रेति**। निन्दास्तुतिमुदाहरति। **दिङ्मातङ्गा** इत्यादि। गतमेतत्। अत्र दिङ्मातङ्गादिवितरणनिषेधरूपया निन्दया विशेषनिषेधे शेषाभ्यनुज्ञानमिति न्यायादेतदतिरिक्तमखिलमर्थिसात् कृतमिति स्तुतिर्व्यज्यत इत्येषा निन्दास्तुतिरित्याह। **इहेति**। न चात्र ध्वनिशङ्का कार्येत्याह। **तेन चेति**। अपराङ्गनामा गुणीभूतव्यङ्ग्यभेदोऽयं न ध्वनिरिति निरङ्कुशोऽयमलंकार इति भावः ॥

**व्याज[4]स्तुतिः ॥**

प्रस्तुतगम्य[5]त्वे व्याजस्तुतिरुक्ता तद्विशेषगम्यत्वेनाक्षेपमाह। **कमपीत्यादि**। प्रकृतनिषेधाभासस्तत्कृतविशेषप्रतिपत्त्यर्थं आक्षेपः। स चोक्तविषयो वक्ष्यमाण-

---

१ परिगणितव्यतिरिक्त° C.; व्यतिरेकपरिगणित° M. २ कृतमिति T., C., G., M. ३ °पस्कार्यते T. ४ K. omits व्याजस्तुतिः. ५ °गम्यत्वे इहा° K.

इह प्रकृतस्यार्थस्य प्रकृतत्वादेवाभिधातुमभिमतस्य क्रियमाणः प्रतिषेधो बाधितः सन्नाभासे पर्यवस्यन्[1] विधिमाक्षिपति । स चाभासमानो निषेध उक्तवक्ष्यमाणप्राकरणिकगतत्वेन द्वैविध्यमधितिष्ठन्नाक्षेपमपि द्विविधमुत्थापयति । उक्तविषये च क्वचिद्वस्तु निषिध्यते क्वचन[2] वस्तुनः कथनमित्ययमपि द्विधा भवति । वक्ष्यमाणविषये च कथनमेव निषिध्यते । तत्रापि क्वचन सामान्येन कथयितुमभ्युपगतस्याभिमतस्य भणिति[3]प्रतिषेधो भवति । क्वचन पुनः कियन्तमप्यंशमभिधाय कियतोऽप्यंशस्य प्रतिषेधः स्यादित्ययमपि द्विधा भवति । ततश्चतुर्धायमाक्षेपः । तत्रोक्त[4]विषयो वस्तुप्रतिषेधो यथा

नाहं दूती भवामि प्रथितपृथुगुण श्रीनृसिंह क्षितीन्द्र
ब्रूमः श्रेयस्करं ते शृणु हरिणदृशो जृम्भमाणेऽङ्गतापे ।
उद्बुद्धं[5] पुण्डरीकैः कुमुदकुवलयैर्मीलितं चक्रवाकैः
संतुष्टं किं च जातं ज्वलदनलशिखाभासुरैः सूर्यकान्तैः ॥

---

विषयश्चेति द्विविध इत्यर्थः । अत्र च लक्षणं विभागं च विविच्य[6]न् व्याचष्टे । इहेत्यादि । तत्रोक्तनिषेधो वस्तुनिषेधस्तत्कथननिषेधश्चेति द्विविध इत्याह । उक्तविषये चेति । वक्ष्यमाणविषये तु वस्तुनोऽनुक्तत्वात् कथननिषेध एवेत्याह । वक्ष्यमाणेति । सोऽपि सामान्येन वक्तुमिष्टस्योक्तिमात्रनिषेधोंऽशोक्त्यांशान्तरनिषेधश्चेति द्विविध इत्येवं चतुर्धायमाक्षेप इत्यर्थः । नाहमित्यादि । स्पष्टम् ।

---

१ पर्यवस्येद्विधि° T. २ तत्रापि क्वचन कथन° T. ३ D. omits भणिति ४ अत्रोक्त° T., G. ५ उद्भूतं M. ६ विविच्य D.

अत्रोक्तस्य [1]दूतीत्वरूपस्य वस्तुनो निषेधः कृतः सत्यमृषाभाषितादिरूपं कमपि विशेषमभिव्यनक्ति । स च वाक्यस्यैवोपस्कुरुते ।

वस्तुकथनप्रतिषेधो यथा

किं त्वां ब्रूमः कृपालुं यदरिमृगदृशां दृष्टयो बाष्पदिग्धाः
किं सद्वृत्तं रमन्ते त्वदुरसि यदरिक्ष्माभुजां वीरलक्ष्म्यः ।
आज्ञा किं ते सुधांशोः श्रियम[2]पहरति त्वद्यशः किं मनस्ते
हिंसाशून्यं त्वयास्मिञ्जगति कृपणतोन्मीलिता श्रीनृसिंह ॥

अत्र कृपालुमित्यादिवचनस्योक्तस्य निषेधः कृतो निरतिशयशौर्यादिरूपं विशेषमभिव्यनक्ति ।

वक्ष्यमाणविषय[3]ः सामान्याभ्युपगतस्य भणितिनिषेधो यथा

क्षणं प्रतीक्षस्व वियोगकातरं
विधाय यावत् प्रिय सुस्थिरं मनः ।
अयं जनः किञ्चिदुदीरयिष्यति
व्रजाथवा तावदुदीरणेन किम् ॥

---

किमित्यादि । स्त्रीशोककारिणः पराङ्गनारतस्य चोरनिवारणासमर्थस्य स्त्रीहन्तुः कुतः कृपासद्वृत्ताज्ञासिद्ध्यहिंसा इति तात्पर्यम् । अत्र किं ब्रूम इति कृपालुत्वादिकथननिषेधस्योक्तविषयस्य विशेषगमकत्वमुद्घाटयति । अत्रेति । क्षणमित्यादि । वियोगकातरं मनः सुस्थिरं विधायेत्यनेन महानुपद्रवो वर्तत इति सूचितम् । किञ्चिदुदीरयिष्यतीत्यभिधातुमुद्यतस्य वक्ष्यमाणस्य किमुदीरणेनेति कथननिषेधो

---

१ दूतीस्वरूपस्य C.; दूतीत्वस्वरूपस्य G.; दूतीरूपस्य T. २ °मपहरते D, G.; °मपि हराति T. ३ °विषये C. ४ °मुद्यतं विवक्ष्यमाणस्य D.

अत्र सामान्येनाभिधातुमभ्युपगतस्य भणितिनिषेधः कृतः संनिजनिधननिश्चयात्मानं विशेषमभिव्यनक्ति ।

अंशप्रतिषेधो यथा

कान्तः किं कैरविण्याः कलयति कमलोल्लासने नैष शक्तिं
नाथः किं वासराणामुदयति कुमुदे नैष लक्ष्मीं वितन्वन् ।
किं कृष्णो न द्विजानामधरयति पतिं भूयसोकेन किं वा
ज्ञातः पश्चान्नृसिंह क्षितितलतिलक त्वं चरित्रैर्विचित्रैः ॥

अन्यैरपि दुर्लभं भवतः साम्यमतः कियदभिधास्यामह इति चन्द्रादिरूपतया कियानप्यंश उक्तः कियानपि निषिद्धश्च । अशक्यवचनीयत्वरूपस्तुतिविशेषो व्यङ्ग्यः । अयमत्र फलितोऽर्थः । यत्र प्रतिषेधेन विधिराक्षिप्यते तत्राक्षेपः । यत्र तु विहितः प्रतिषेधस्तत्र नायमलंकारः । यथा

जटाबन्धं वल्काबरणमपि तीव्रातपकृत-
स्थितिं कुर्वन् कल्पद्रुम सुचिरमुग्रं चर तपः ।
अथेदं मा चारीः कथमपि कदाचिन्न भविता
नृसिंह क्षोणिन्दोरिव वितरणं हन्त भवतः ॥

---

जीवितसंशयरूपं विशेषं गमयतीत्याह । अत्रेति । कान्त इत्यादि । गतमेतत् । अत्र चन्द्रार्कादिरूपेण किंचिदुपमामांशमुक्त्वा किं भूयसोक्तेनेत्युपमानान्तरस्य निषेधादयमंशोक्तावंशान्तरानिषेध इति दर्शयंस्तद्व्यङ्ग्यं विशेषं दर्शयति । अन्यैरपीति । अथास्य विषयं विविनक्ति । यत्र विधिपर्यवसायी निषेध आभासो भवति स आक्षेपस्य विषयः । यत्र तु निषेधस्य स्वार्थ एव विश्रान्तिर्न तत्राक्षेप इत्याह । यत्र प्रतिषेधेनेति । जटेत्यादि । अत्र पूर्वार्धे नृसिंहसमवितरणसिद्धये तप-

---

१ °भ्युपगमस्य T. २ स निज° D. ३ °यात्मक C., M. ४ विशेषं व्यनक्ति T. ५ कृष्णोऽयं T., C., M., G. ६ °वस्तुविषयो व्यङ्ग्यः T.; °वस्तुविशेषो व्यङ्ग्यः G. ७ वल्काभरण° D. M.

इह विहितस्य तपसः प्रतिषेध उक्तः।

**अपरस्त्वनिष्टविध्याभासस्तस्याभिधीयते भेदः।**
**यत्रानभिमतपिशुनो विधिर्निषेधं[1] प्रकाशयति॥३२॥**

तत्रानिष्टस्यानिष्टत्वादेव विधिर्बाधितः प्रतिषेधमाक्षिपतीत्यन्वर्थाभिधानोऽयम्। अनिष्टविध्याभासो यथा

त्वं चेद्गच्छसि गच्छ सिध्यतु तवाभीष्टं मृधे वल्लभ
प्रख्यातं तव को न वेद भुजयोरव्याजमोजायितम्।
किं चैतत् कथनीयमस्ति भुवनोत्तुङ्गः कलिङ्गेश्वरः
संग्रामेऽभिमुखान् निहन्ति न पुनर्वैमुख्यमासेदुषः।

अत्रानभिमतमेव प्रियतमप्रस्थानं यदा प्रमुख एवानुमन्यते तदायमनिष्टविधिराभासे पर्यवस्यति। आयोधनोन्मुखविरोधिवधविधानं पुनर्गमननिषेधमेव पिशुनयति। अयं चाक्षेपसमानन्यायेनात्र निरूपितः।

---

अत्रेति विहितस्य तपसः उत्तरार्धे तपसापि तस्य शैलभ्यान्माचारीरिति निषेधस्य विधिपर्यवसानं विनैव राज्ञो लोकोत्तरवितरणव्यञ्जकतया निषेधात्मनैव चमत्कारणादाक्षेपत्वमित्यभिप्रायवानाह। इह विहितस्येति॥

यथेष्टनिषेधाभास आक्षेपालंकारस्तथानिष्टविध्याभासश्चाक्षेपालंकार एवेति तमपि भेदं प्रतिज्ञापूर्वकं लक्षयति। अपरस्त्वित्यादि। यत्र प्रकृतस्यानिष्टस्य विधिरनुपपद्यमानस्तान्निषेधे पर्यवस्यति सोऽनिष्टविध्याभासो नामाक्षेपभेद[2] इति व्याचष्टे। तत्रेति। त्वमित्यादि। स्पष्टम्। संगतिमाह। अयं चेति॥

आक्षेपः[3]॥

---

१ प्रकाशयते M. २ °भासनामा आक्षेपभेद K. ३ K. omits आक्षेपः.

विलसद्विरोधगर्भं ब्रूमोऽलंकारवर्गमधुना तु ।
स्फुरति विरोधाभासे भवति विरोधाभिधो दशधा ॥ ३३ ॥

इष्टनिषेधस्यानिष्टविधेश्च बाधितत्वादाक्षेपे विरुद्धत्वादनुप्रवेशेन विरोधगर्भालंकारनिरूपणस्य संप्रति प्रस्तावः । जात्यादीनां चतुर्णां पदार्थानां मध्ये [1]सजातीयाभ्यां विजातीयाभ्यां वा परस्परसंबन्धे विरोधः । स च यथा प्रमुख [2]एवाभासते तथैव यदि विश्राम्यति तदा प्ररूढो विरोधो दोष एव । यदि तु समाधानमस्ति तदा प्रमुख [3]एवावभासमानत्वाद्विरोधाभासः । तत्र

जातेर्जात्यादिभिः सार्धं चतस्रः प्रथमं भिदाः ।
जायन्ते ताः पुनस्तिस्रो गुणस्य च गुणादिभिः ॥ ३४ ॥
क्रियायाः क्रियया सार्धं द्रव्येण च भिदा द्वयम् ।
द्रव्यस्य तु भिदैकैव द्रव्येणेति भिदा दश ॥ ३५ ॥

---

गतो गम्यप्रधानालंकारवर्गप्रस्तावः । संप्रत्याक्षेपालंकारगतेष्टनिषेधानिष्टविधिषु विरोधप्रसंगाद्विरोधगर्भालंकारवर्गं वक्तुं प्रतिजानीते । विलसदिति । तत्र विरोधालंकारमादौ [4]लक्षयति । स्फुरतीति । विरोधाभासो विरोधालंकारः । स दशविध इत्यर्थः । संगतिमाह । इष्टनिषेधस्येति । विरोधाश्रयं दर्शयति । जात्यादीनामिति । ननु विरोधोऽलंकारश्चेति व्याहतमित्याशङ्क्याह । स चेति । प्ररूढो विरोधो दोषः अप्ररूढस्त्वलंकार इति न किञ्चिद्व्याहतमित्यर्थः । तत्रापि भेदान् श्लोकेन संगृह्याह । जातेरित्यादि । अथोदाहरणान्याह ।

---

१ सजातीयविजातीयाभ्यां C., M.; T. drops वा. २ एवावभासते T., G. ३ एव भासमान° C., M. ४ दर्शयति K.

क्रमेण यथा

यशोनिधे वीर नृसिंह देव
करोऽपि कर्णोऽजनि तावकीनः ।
किं चारिनारीजनतापकारी
धाराधरस्ते करवाल एषः ॥

अत्र पूर्वार्धे करकर्णयोर्जात्योर्विरोधः । उत्तरार्धे धाराधरत्वता-पकारित्वयोर्जातिगुणयोः ।

अश्रान्तविश्राणनकेलिकौतुकः
काम्यो न कस्यैष[1] नृसिंह भूपतिः ।
शौर्योदधे[2]र्यस्य चिराय दन्तिभिः
दिग्दन्तिनोऽष्टावपि वामनीकृताः ॥

अत्र दिग्दन्तिवामनीकरणयोर्जातिक्रिय[3]योः ।

शैलाः सर्वेऽपि कैलासाः सिन्धवः सुरसिन्धवः ।
नरसिंह महीपाल संजातास्तव कीर्तिभिः ॥

अत्र जातिद्रव्ययोः ।

परदारपरोऽपि त्वं परदारपराङ्मुखः ।
नरसिंह महीपाल विचित्रचरितो भवान् ॥

अत्र परदारपरत्वपरदारपराङ्मुखत्वयो[4]र्गुणयोः ।

---

यश इत्यादि । कर्णः श्रोत्रं राधेयश्च । वामनो याम्यदिग्दन्ती ह्रस्वश्च । परदा-रपरः प[5]रदाररतः शत्रुविदारणपरश्च । शेषं सुगमम् । अथास्य विषयं विविनक्ति ।

---

१ कस्येह C., M. २ शौर्योदये यस्य विरोधि° C., M.; कौतूहलं यस्य चिराय D. ३ °क्रिययोर्विरोधः D. ४ T. drops गुणयोः. ५ शत्रुविदारणपरः पराङ्गनारतश्च K.

चापस्थितगुणस्यापि गुणैस्तव जगत्त्रयम् ।
[1]व्याप्यते स्म जगद्वीर नरसिंह नरेश्वर ॥

अत्र गुणक्रिययोः ।

कर्पूरहारनीहारपटीरविशदोऽपि सन् ।
तव वीर यशोराशिः कथं पीताम्बरोऽभवत् ॥

अत्र विशदत्वपीताम्बरत्वयोर्गुणद्रव्ययोः ।

सजयति वीर नृसिंहः प्रतिभटनृपशैलकोटिशतकोटिः ।
यो रञ्जयन्नपि गुणैः सततमुदारं न रञ्जयति ॥

अत्र रञ्जनारञ्जनयोः क्रिययोः ।

विस्मयमसौ नृसिंहः करोति परिपन्थिगन्धगजसिंहः ।
यस्य प्रतापतपनः कुमुदमुदञ्चयति सर्वतोदिक्कम् ॥

अत्र कुमुदोदञ्चनतपनयोः क्रियाद्रव्ययोः ।

आयोधनारम्भविजृम्भमाण-
क्षोणीरजोगत्वरशत्रुलोकः ।
उग्रोऽपि कृष्णस्तव खड्ग एष
विराजते वीर नृसिंह देवे[2] ॥

अत्रोग्रकृष्णयोर्द्रव्ययोः।

एष च तत्र प्रगल्भते यत्र विषयस्याभिन्नत्वम् । भिन्नविषयत्वे त्व[3]सङ्गतिप्रमुखाणां जागरूकत्वात् ॥

---

एष चेति । यत्र धर्मयोः सामानाधिकरण्यनिबन्धो विरोधः स्फुरति तत्र विरोधालंकारः । यत्र तु वै[4]यधिकरण्यनिबन्धो विरोधस्तत्रासङ्गत्यादिरित्यर्थः ॥

[5]विरोधः ॥

---

१ यद्व्याप्तं तदिदं चित्रं D. २ भूप D. ३ त्वसङ्गति° T., °ऽप्यसङ्गति° C., M. ४ वैयधिकरण्ये विरोध° K. ५ K. drops विरोधः.

**असति प्रसिद्धहेतौ कार्योत्पत्तिर्विभावना भवति।**

इह कारणान्वयव्यतिरेकानुविधायित्वात् कार्यस्य कारणाभावे[1] कार्यस्याप्यभाव इति कारणमन्तरेणोपनिबध्यमानायां कार्योत्पत्तौ परिस्फुरतो विरोधस्य परिहाराय प्रसिद्धेतरकारणगतत्वेन[2] वस्तुतोऽस्तित्वमापूरयन्ती[3][4] प्रसिद्धकारणविरहोपनिबन्धनरूपा[5] नियमेन भङ्गिरङ्गीकरणीया। अपरथा विरोधस्य परिहर्त्तुमशक्यत्वात्। अत एव विशिष्टतयास्यां कार्यस्य विभावनादन्वर्थाभिधाना विभावना। किं चात्र कारणविरहेणोपक्रान्तत्वात् कार्यमेव बाध्यत्वेन प्रतीतिगोचरीभवति। न पुनरनेन कारणविरह इत्यस्याः परस्पर-

---

विरोधानन्तरं तन्मूलेषु प्रसिद्धत्वात् कार्यकारणरूपां विभावनामाह। असतीति। प्रसिद्धकारणं विना कार्योत्पत्तिर्विभावनेत्यर्थः। प्रसिद्धविशेषणस्य प्रयोजनं दर्शयन् व्याचष्टे। इहेति। उक्तनियमानङ्गीकारे बाधकमाह। अपरथेति। संज्ञाप्येवमेवान्वर्थेत्याह। अत एवेति। प्रसिद्धकारणविरहोपनिबन्धनियमादेवेत्यर्थः। विशिष्टतया भावनादुत्पादनाद्विभावनेत्यर्थः। ननु प्रसिद्धकारणाभावनिबन्धनस्य विरोधस्याप्रसिद्धकारणभावेनाभासीकरणाद्विरोधालंकार एवायमित्याशङ्क्येह व्यवस्थितबाध्यबाधकभावानुप्राणितो विरोधो विरोधालंकारे तु परस्परबाधकत्वानुप्राणित इति भेदकमाह। किं चात्रेति। कारणविरहेणोपक्रान्तत्वादित्यस्यायमर्थः। इह कारणाभावकार्ययोर्हि विरोधः। तत्र श्रुतेर्जाताधिकारः स्यादिति न्यायावष्टम्भप्रतिप्रहेष्टिन्यायाद्वानुपसंजातविरोधितयोपक्रमगतबलीयस्त्वेन कारणाभाव एव बाधकः कार्यमेव बाध्यं नान्यथा। तदेवमन्यतरबाधकत्वोपलक्षितो विरोधो विभावनायां विरोधालंकारे तु विशेषाभावादन्योन्यबाधकत्वोपलक्षित इत्यनयोर्भिन्नविषयतेति[6]। अथ विभावनोक्तमर्थं विशेषो-

---

१ कारणस्याभावे C. २ °कारणस्यान्तरत्वेन T. ३ वस्तुनो वस्तुत्व° C., M.; वस्तुतोऽस्तिता° G. ४ °माश्रयन्ती C., M., G; °मुदीरयन्ती T., C. ५ °रूपनियमेन C., M. ६ °विषयत्वामिति K.

बाधकत्वानुप्राणितो[1] विरोधः कथमिव विषयापहारमाचरति। एवं बलवत्या कार्यानुत्पत्त्या कारणसत्तायामेव बाध्यमानायां भवन्ती[2] विशेषोक्तिरपीतरेतरबाधकत्वलब्धस्वरूपाद्विरोधाद्विभक्तविषयत्वे-[3][4] न स्थितिमातनुते। उदाहरणम्

अयज्ञः स्वर्लोकः[5] सुकृतमतपःक्लेशसुभगं
सुधासारोऽनभ्रः फलमकुसुमश्रीसहचरम्।
अशौर्यं साम्राज्यं निधिरखननायाससुलभो
नृसिंह क्षोणीन्द्रो नयनपथमस्माकमगमः॥

अत्र स्वर्लोकादेः प्रसिद्धयज्ञादिकारणाभावो निरतिशयसुखजनकत्वेनोपनिबद्धः। यथा वा

भूत्या भासय सर्वतोऽपि विदुषो[6] मुञ्च द्विजिह्वान् वृषं
स्वात्मन्येव निवेशय प्रकटय ज्ञाने तृतीयां दृशम्।

---

क्तावप्यतिदिशति। एवमिति। अत्रापि परिदृश्यमानया कार्यानुत्पत्त्या कारणसामर्थ्यमेव बाध्यते कार्यभावाभावयोः सामग्रीभावाभावव्याप्तत्वात्। अतः प्रतिनियतबाध्यबाधकभावापन्नो[7] विरोधो विशेषोक्तौ विरोधालंकारे तु विशेषाभावादुभयोः परस्परबाधकभावापन्न इत्यनयोरपि भिन्नविषयत्वमेवेत्यर्थः। सा च विभावना मालया कैवल्येन च द्विधा। तत्राद्यामुदाहरति। अयज्ञ इत्यादि। अत्र कारणाभावं व्यनक्ति। अत्रेति। तदुपनिबन्धे निमित्तमाह। निरतिशयेति। एतच्च निमित्तमनुक्तमप्युन्नीयत इति भावः। एतेनोक्तनिमित्तानुक्तनिमित्ता चेति द्विविधा विभावना तत्रेयमनुक्तनिमित्तोक्तनिमित्ता तु स्वयमुदाहार्येत्यनुसंधेयम्। द्वितीयामुदाहरति। भूत्येत्यादि। 'भूतिर्भस्मनि संपदि' इत्यमरः। तयोरभेदाध्यवसायः भूत्या विदुषो भासय न त्वीश्वरवदस्मानमिति भावः। द्विजिह्वान् सर्पान् पिशुनांश्च। वृषो धर्मो वृषभश्च तं स्वात्मन्येव निवेशय। ईश्वरस्तु वृषे स्वात्मानं निवेशयतीति भावः। ज्ञाने इति। न तु ललाटे इति भावः। दृशं दृष्टिं शास्त्रं च।

---

१ °बाधकत्वेनानु° T. २ भवतीति G., D. ३ °बाधकत्वस्वरूपविरोधा° T. ४ °द्विविक्तविषय° C. ५ स्वर्लोक इत्यादि T. ६ विबुधान् O., M. ७ °भावमापन्नो D.

दुर्गाश्लेषरसं जहीहि जहिहि प्रीतिं च दोषाकरे
लोकोत्तुङ्ग कलिङ्गनाथ तदपि ज्ञातो भवानीश्वरः ॥

अत्र परगतत्वेनोपात्तं भूतिकरणकं भासनमीश्वरज्ञानं प्रति न भवति कारणं तथापीश्वरज्ञानमभूदिति विभावनेयम् । श्लेषप्रतिभोत्थापितातिशयोक्तिप्रभावितेति संकरः ॥

## यदि कारणसाकल्ये कार्यासिद्धिस्तदा विशेषोक्तिः ॥ ३६ ॥

इह यदि विद्यमानापि सामग्री न कार्यमाविष्कुरुते तदा सामग्र्येव कथमपि न भवति । अथ कमपि विशेषं प्रकाशयितुं सत्यामेप्येतस्यां कार्यानुत्पत्तिरुपनिबध्यते तदा विशेषप्रतिपादनायोक्ति-

---

दुर्गाणामाश्लेषः प्राप्तिरन्यत्र दुर्गाया आश्लेषस्तत्र रसमनुरागम् । दोषाणामाकरो दोषाकरो दुष्टः । दोषा करोतीति दोषाकरो निशाकरश्च । तत्र प्रीतिं जहिहि त्यज । "आ च हौ" इति चकारादन्यतरस्यामिकारविधानाद् द्वैरूप्यम् । तदपि तथापीत्यर्थः । ईश्वरविरुद्धधर्मोऽपीश्वर इति ज्ञातोऽसीति तात्पर्यार्थः । अत्रापि कारणाभावं दर्शयति । अत्रेति । स्वाङ्गभूतिभासुरीकरणादिकारणाभावेऽपीश्वरत्वज्ञानोत्पत्तेर्विभावनेत्यर्थः । अत्राभ्युच्चयत्वेन विशेषमाह । श्लेषेति । एषा नूक्तनिमित्ता लोकोत्तुङ्गत्वस्यैव निमित्तस्योक्तत्वादिति ।

### विभावना[3] ॥

विभावनाविपर्ययेण विशेषोक्तिं लक्षयति । यदीत्यादि । सामग्रीसद्भावेऽपि कार्यानुत्पत्तिर्विशेषोक्तिरित्यर्थः । ननु सामग्रीसद्भावेऽपि कार्यं नोत्पादयतीति व्याहतार्थनिबन्धात्मनो विशेषोक्तेः कथमलंकारत्वमित्याशङ्क्य यथैतत्तथा व्याचष्टे । इहेत्यादि । सत्यमयं व्याहतोऽप्यर्थो विशेषद्योतनार्थमुच्यतेऽस्यामिति विशेषोक्ति-

---

१ अथापी° C., M. २ °मप्यस्यां C., M. ३ K. omits विभावना.

रिति यौगिकत्वमप्यसावाश्रयति । इयं च निमित्तस्योक्तत्वानुक्तत्वाभ्यां भवन्ती न द्वैविध्यातिवर्तिनी[1] । तत्रोक्तनिमित्ता यथा

अयं[2] स ते वीर नृसिंह देव
प्रतापभानुः प्रथितोदयश्रीः ।
चित्रं न दत्ते रिपुसुन्दरीणां
विकासलक्ष्मीं[3] नयनाम्बुजेभ्यः ॥

अत्र तपनोदये कारणे सत्यम्बुजविकासलक्ष्मीलक्षणं कार्यं नाभूदिति विशेषोक्तिः । रिपुसंबन्धित्वं[4] च निमित्तमुपात्तम् । किं त्वियं रूपकोपजीवनेन प्रवृत्तेत्यनयोरङ्गाङ्गिभावेन संकरः । आश्चर्यस्य रूपकं प्रति साधकत्वात् ।

अनुक्तनिमित्ता यथा

उत्तिष्ठ कन्दखननाय गृहाण चापं
गाहस्व काननमिति प्रहितोऽपि वध्वा ।
आकारितोऽपि सहकेलिसखैः किरातै-
रद्रेर्न वीर विजहाति दरीमरिस्ते[5] ॥

रन्वर्थाभिधानेयमित्यर्थः । एषा चोक्तनिमित्तानुक्तनिमित्ता चेति द्विविधेत्याह । इयं चेति । अयमित्यादि । स्पष्टम् । ननु नयनाम्बुजेभ्य इत्यत्रोपमितसमासाश्रयणे कुतो रूपकसंकर इत्याशङ्क्य रूपकसाधकमाह । आश्चर्यस्येति । भानोरम्बुजविकासप्रदानमाश्चर्यं न तु नयनविकासप्रदानं तच्च रूपकाश्रयणे उत्तरपदार्थप्राधान्यादम्बुजानामेव समासार्थत्वात् संभवतीति चित्रत्वमेव रूपकसाधकमित्यर्थः । क्वचित् संदेहसंकरमाह । उत्तिष्ठेत्यादि । गतम् । अत्रानुक्तनिमित्तमुद्घाटयति[6] ।

१ °तिलङ्घिनी T. २ अयं च ते T. ३ लक्ष्मी नयना° M., D. ४ °संबन्धश्च D.
५ दरीं रिपुस्ते C., M. ६ अत्रानुक्तं निमित्त° D.

अत्र प्रस्थापनाह्वानयोर्वनगमनं प्रति कारणत्वेऽपि तदनुत्पत्तौ नरसिंहकार्मुकस्मरणविजृम्भमाणभयाविह्वलितत्वमनुक्तमपि निमित्तं प्रतीयते । इह च कार्यासिद्धिः कार्यविरुद्धसिद्धिमुखेन क्वचिदुपनिबध्यते विभावनायामिव कारणविरहः कारणविरुद्धमुखेन । तथा सति

ये पतन्ति तव हस्तसीकराः
 पाणिशुक्तिविवरे द्विजन्मनाम् ।
उत्कलेन्द्र नवमौक्तिकावली-
 स्तत्कलत्रहृदये सृजन्त्यमी ॥

इत्यत्र किं विभावना विशेषोक्तिर्वा । तथा हि स्वात्यम्भःकणानां मौक्तिकोत्पत्तिं प्रति कारणत्वं प्रसिद्धम् । अभावेऽप्येषामेषा-

अत्र प्रस्थापनेत्यादि । अथ विभावनाविशेषोक्तिविशेषयोः क्वचित् संदेहसंकरमाह । इह चेत्यादि । तत्र विशेषोक्तिविशेषस्य स्वरूपमाह । कार्येति । कार्यासिद्धिः कार्यानुत्पत्तिः । सिद्धिरुत्पत्तिः । कारणसद्भावे कार्यानुत्पत्तिर्हि विशेषोक्तिस्तत्रानुत्पत्तिर्यथा साक्षान्निबध्यते तथा क्वचित् कार्यविरुद्धोत्पत्तिमुखेनापि निबध्यते । इयमप्येका विशेषोक्तिः । विभावनाविशेषं च दृष्टान्तवशाचष्टे । विभावनायामिवेति । कारणाभावे कार्योत्पत्तिर्विभावना । तत्रापि कारणाभावो यथा साक्षान्निबध्यते तथा कारणविरुद्धमुखेनापि निबध्यते सापि विभावनेत्यर्थः । अनयोः संकरं वक्तुमुदाहरति । ये पतन्तीत्यादि । हस्तसीकराः करसीकरा दानोदबिन्दव इत्यर्थः हस्तनक्षत्रभवा वर्षोदबिन्दवश्च । ते च द्विजपाणिशुक्तिषु पतिताः तत्कलत्रहृदयेषु मुक्तावलीः सृजन्तीति वाक्यार्थः । अत्र विभावनां तावदुद्भावयति । स्वात्यम्भःकणानामिति । स्वातिवर्षबिन्दू-

१ °नयोर्गमनं D. २ नृसिंह° T., C. ३ °स्मरणे जृम्भमाण° D. ४ कार्यासिद्धिः विरुद्धमुखेन D. ५ तथा च सति T., C. ६ °शीकराः T., C., M. ७ इयमेका K. ८ °वदत्राचष्टे K. ९ °शीक° K. १० स्वाती° K.

श्चोपनिबद्धेति[1] कारणाभावे कार्योत्पत्तौ विभावना तावत् कारणाभावश्च हस्तसीकरा[2] इति कारणविरुद्धमुखेनोपन्यस्तः। हस्तसीकराणां[3] मौक्तिकोत्पत्तिं प्रत्यकारणत्वात्। हस्तशब्दस्य द्वैविध्येऽप्यत्राभेदाध्यवसायोऽतिशयोक्त्या[4] सा चास्यामव्यभिचारिणी। किंचात्र हस्ताम्भःकणानां मौक्तिकानुत्पत्तिं प्रति कारणत्वे सत्यपि मौक्तिकानुत्पत्तिर्नाभूदिति[5] कारणसद्भावे कार्यानुत्पत्तिरिति विशेषोक्तिरपि[6]। कार्यानुत्पत्तिश्च मौक्तिकानि सृजन्तीति कार्यविरोधोत्पत्तिमुखेन द्योतिता। अत एवानयोरस्फुटत्वम्। उभयोरपि साधकबाधकप्रमाणविरहिण्योः संदेहेन संकरः। असंगत्या च सहाङ्गाङ्गिभावेन॥

---

नामित्यर्थः। एषां स्वात्यम्भःकणानामित्यर्थः। एषा मौक्तिकोत्पत्तिरित्यर्थः। एवं विभावनास्वरूपं प्रदर्श्य तत्रोक्तकारणाभावस्य कारणविरुद्धमुखेनोपनिबन्धं व्यनक्ति। कारणाभावश्चेत्यादि। हस्तसीकराणां[7] कारणविरुद्धत्वे हेतुमाह। हस्तसीकराणामिति[8]। हस्तनक्षत्रोदबिन्दूनामित्यर्थः। ननु प्रकृते हस्तशब्दः करवाची न तु नक्षत्रवाच्यसंभवादित्याशङ्क्य श्लेषमूलाभेदाध्यवसायातिशयोक्त्या संभवतीत्याह। हस्तशब्दस्येति। अवर्जनीया चेयमिहातिशयोक्तिरित्याह। सा चेति। अथ विशेषोक्तिं चोद्भावयति। किं चेत्यादि। हस्तसीकर[9]रूपकारणसद्भावेऽपि मौक्तिकानुत्पत्तिरूपकार्यस्यानुत्पत्तेर्मौक्तिकोत्पत्तिमुखेनोक्तत्वाद्विशेषोक्तिविशेषश्चात्र प्रतिभातीत्यर्थः। न चेहान्यतरावधारणं शक्यमित्याह। अत एवेति। विरुद्धमुखत्वादेवेत्यर्थः। फलितमाह। उभयोरिति। संकरान्तरमाह। असंगत्या चेति। अनयोरेवं मिथः संदेहसंकरः। अनयोरसंगत्याः सहाङ्गाङ्गिभा-

---

१ °निबद्धा चेति D. २ °शीकरा° T., C., M. ३ °शीकराणां T., C., M. ४ °सायातिशयोक्त्या T. ५ नास्तीति T. ६ विशेषोक्तिर्भवति D. ७ °शीकराणां K. ८ °शीकराणामिति K. ९ प्रकृतहस्त° K. १० °शीकर° K.

**अनयोः समसमयत्वे पौर्वापर्यस्य वा विपर्यासे।**
**कार्याशुभावगमिका द्विविधातिशयोक्तिराख्या-**
**ता ॥ ३७ ॥**

इह कार्यकारणयोर्नियतोत्तरपूर्वकालभावित्वे सत्यप्येतद्रूपान्यथाकरणं कार्यस्याशुभावित्वलक्षणविशेषप्रकाशनैकप्रयोजनम्। यथा

कोशगृहचिरनिषण्णा रिपुनृपलक्ष्मीर्निजासिलतिका च।
उत्कलभूपाल कथं युगपद् भवता समाकृष्टा ॥

अत्र रिपुश्रीसमाकर्षणं प्रत्यसिलतासमाकर्षणं कारणमैककाल्येनोपनिबद्धम्।

द्वितीया यथा

कवीन्द्राणामासन् प्रथमतरमेवाङ्गणभुव-
श्चलभृङ्गासङ्गाकुलकरिमदामोदमधुराः।

---

वसंकर इत्यर्थः। द्विजपाणिशुक्तिषु हस्तसीकरपाते[1] तत्कालचहृदयेषु मौक्तिकोत्पत्तिरिति कार्यकारणयोर्भिन्नदेशत्वादसंगतिरिति ज्ञेयम्। हस्तसीकरान्मौक्तिकोत्पत्तिरिति विरोधश्चेति शेषः॥

विशेषोक्तिः[5] ॥

अथ लक्षितायामतिशयोक्तौ कार्यकारणपौर्वापर्यविध्वंसरूपं तद्भेदमिह कार्यकारणभावमूलालंकारप्रस्तावे संगतिवशेनाह। अनयोरिति। अनयोः कार्यकारणयोरित्यर्थः। यत्र कार्याशुभावप्रतीत्यर्थं कार्यकारणपौर्वापर्यनियमविध्वंसो निबध्यते सातिशयोक्तिः। सा च तद्यौगपद्यनिबन्धना तद्विपर्यासनिबन्धना चेति द्विविधेत्यर्थः। कोशेत्यादि। कोशोऽर्थागारमसिपिधानं च। कवीत्यादि। क्षीरमु-

---

१ °स्खलद्भृङ्गा° T., G., M. २ °शीकर° K. ३ °रापाते K. ४ °शीकरा° K.
५ K. omits विशेषोक्तिः.

अमी पश्चात्तेषामुपरि पतिता वीर भवतः
कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥

अत्र कविकुलैश्वर्यरूपकार्यानन्तरं नृसिंहनृपावलोकनलक्षणं कारणमुपात्तम् ॥

एषासङ्गतिरुक्ता हेतोः कार्यस्य भिन्नदेशत्वे ।

इह न पर्वतनितम्बचुम्बिनं जनयति धूमं महानससंगतो हुतवह इति दृष्टान्तावष्टम्भादभ्युपेतेऽपि कार्यकारणयोर्भिन्नदेशगतत्वेन जन्यजनकत्वविरहे कारणाद् भिन्नाश्रयगतत्वेन कार्यस्योपनिबन्धेन समुचितायाः संगतेरविद्यमानत्वादियमन्वर्थाभिधाना कार्यकारण-विरोधावसरप्राप्तनिर्देशा ।

---

दकं यस्य स क्षीरोदः । "उदकस्योदः संज्ञायाम्" इत्युदादेशः । वीचीसहचरा वीचीसदृशा इत्यर्थः । स्फुटमन्यत् ॥

अतिशयोक्तिः ॥

अथातिशयोक्तिगतकार्यकारणकालनियमभङ्गप्रसङ्गाद्देशानियमभङ्गमूलामसंगतिं लक्षयति । एषेत्यादि । यत्र कार्यकारणयोर्भिन्नदेशत्वं निबध्यते सेयमसङ्गतिरित्यर्थः । इह लोके कार्यकारणभावापन्नानां धूमाग्न्यादीनां समानदेशत्वदर्शनात्तद्विरोधेनेह भिन्नदेशनिबन्धनान्नास्ति कार्यकारणयोरेकदेशतालक्षणसंगतिरस्यामित्यन्वर्थाभिधानेयमित्याह । इहेत्यादि । सुगममन्यत् । विषमहेतुर्नाम हेत्वलंकारभेदः कश्चिदिति भोजराजः । तदुक्तम् ।

'दूरकार्यस्तत्सहजः कार्यानन्तरजस्तथा ।
अयुक्तो युक्तकारी चेत्यसंख्याश्चित्रहेतवः ॥' इति ।

---

१ करिकुलमदामोदमधुरत्वरूप° T. २ नरसिंह° T. ३ महानसे संगतो C. ४ K. drops अतिशयोक्तिः.

यथा

प्रतिभटमुकुटेषु खड्गधारा
परिपतिता भवतो नृसिंह भूप[1] ।
सरभसमगलच्चदङ्गनानां
गुरुकुचभारतटीपटीरपङ्कः ॥

अत्र धारापरिपतनं चन्दनच्यवनस्य भिन्नदेशो हेतुः ।

आयोधने वीर नृसिंह देव
समुद्धृतेयं भवतासिवल्ली ।
म्लाना पुनः शत्रुविलासिनीनां
पयोधरे चन्दनपत्रवल्ली ॥

अत्र म्लानत्वस्य कार्यस्य समुद्धरणं कारणं व्यधिकरणतयो-पात्तम् । राज्ञा त्वङ्गीकृतस्य भिन्नहेतुनाम्नो हेतुभेदस्यात्रैवान्त-र्भावो द्रष्टव्यः ॥

## विषमं विरूपघटना विसदृशकार्यानभीष्टयोर्जन-नम् ॥ ३८ ॥

---

अथ दूरकार्याख्यो यः प्रथमोऽदिष्टो भेदस्तस्यासंगतावन्तर्भाव इत्याह । राज्ञेति । तस्येदमुदाहरणं ।

'त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं यदङ्गने ।
मुक्तं तदन्यतस्तेन सोऽप्यहं मनसि क्षतः ॥'

इत्यत्रान्यत्रास्त्रपातोऽन्यत्र क्षतिरित्यसंगतिरेवेयमित्यर्थः ॥

असंगतिः[2] ॥

विरोधप्रस्तावाद्विषमं लक्षयति । विषममिति । विषमार्थनिबन्धनं विषमं तच्च विरूपघटनं विरुद्धकार्यजननमनर्थोत्पादनं चेति त्रिविधमित्यर्थः ।

---

१ भूप D. २ K. omits असंगतिः.

अस्याप्यत्र विरोधावसर एव निरूपणकारणम्। इदं तु त्रिविधम्। अत्र विरूपयोः सर्वथाननुरूपयोर्घटनादेकं विषमम्।

यथा

क्व तव नृसिंह देव भुवनत्रयलङ्घि यशः
क्व च कविता मम स्वरसवल्गितफल्गुपदा।
इह दिवमारुरुक्षुरहमस्मि तुषारमहः-
किरणपरम्परासु रचितैः पदचङ्क्रमणैः॥

अत्र सर्वथाननुरूपयोर्यशःकवितयोः संघटनं कृतम्।

कारणगुणप्रक्रमेण कार्ये गुणारम्भः कारणानुविधायित्वात् कार्यस्येति स्थितौ सत्यामपि यदि कयापि भङ्ग्यान्यथाभाव उपनिबध्यते तदा विसदृशकार्योत्पत्तिर्द्वितीयं विषमम्।

यथा

राकागर्वितशर्वरीसहचरप्रस्तावसौवस्तिकैः
क्षीराम्भोधितरङ्गकान्तिलहरीवैवर्ण्यकर्णेजपैः।
चित्रं वीर नृसिंह देव भवतः कीर्त्तिविलासैः कृतः
स्वैरं वैरिवधूमुखे कथमहो मालिन्यमुद्रादरः॥

---

संगतिमाह। अस्यापीति। विरूपशब्दार्थमाह। अननुरूपयोरिति। यशःकवितासंघटनयोरित्यर्थः। क्वेत्यादि। स्वरसवल्गितानि स्वशक्तिप्रयुक्तानि फल्गुपदानि निःसारपदानि यस्याः सा। तुषारमहाश्चन्द्रः। पदचङ्क्रमणैः पादन्यासैः। मत्कवितया स्वयशोविषयीकरणमिन्दुकिरणश्रेणीनिःश्रेण्या गगनारोहणप्रायमधिकसाध्यासिद्धेरित्यर्थः। कार्यगुणानां कारणगुणपूर्वकत्वे प्रमाणमाह। कारणानुविधायित्वादिति। कार्ये शुक्लाच्छुक्लं नीलान्नीलमित्यादि कारणगुणानुवृत्तिदर्शनादित्यर्थः। राकेत्यादि। चन्द्रस्य प्रस्तावे प्रमुखे सौवस्तिकैः स्वस्तिप्रश्नकारैस्तत्समानैरिति यावत्। स्वस्ति पृच्छति सौवस्तिकः।

---

१ स्वरसवल्लित° T. २ °प्रवृत्तानि D. ३ कारणगुणदर्शना° D. ४ मुखे D. ५ स्वस्तीत्याह सौवस्तिकः D.

इह धवलतरयशःपूरकर्तृकतया मालिन्यस्य विसदृशस्यैव कार्यस्योत्पत्तिरभेदाध्यवसायसामर्थ्यादुपनिबद्धा ।

कथमप्य[1]भिमतमर्थं निष्पादयितुं यतमानस्य तदनवाप्तिस्तावदास्तां यावदनर्थान्तरमपि परापतति तृतीयं विषमम् ।

यथा

उदितवति प्रतापतपने तव वैरिवधू-
वदनसरोरुहं भवति वीर कलिङ्गपते
अपि कलया कयापि न विकासविलासमुपै-
त्यपि तु[2] विवर्णतां नयनतापकरीं भजते ॥

अत्र सत्यपि प्रतापतपनोदये वैरिवधूवदनसरोरुहस्य विकासविलासलाभो नाभूदिति तावत्तिष्ठतु प्रत्युत नयनतापकरविवर्णतालक्षणोऽ[illegible]ः प्रादुरासीत् ॥

**अस्य प्रथमाभेदायाः सममिति कविभिर्विपर्यये कथितम् ।**

सुस्नातादित्वात् ठञ् । द्वारादित्वात् वृद्ध्यभाव ऐजागमश्च । वैवर्ण्यस्य कर्णेजपैः सूचकैस्ततोऽपि धवलैरिति यावत् । कर्णे जपतीति कर्णेजपः । "स्तम्बकर्णयो रमिजपोः" इत्यच्प्रत्ययः । "हलदन्तात् सप्तम्याः संज्ञायाम्" इत्यलुक् । मालिन्यं वैवर्ण्यं नीलिमा च तयोरभेदाध्यवसायः । तृतीयभेदं[3] व्युत्पादयति । कथमपीति । स्फुटमन्यत् ॥

विषमम्[4] ॥

संगतिसूचनापूर्वकं समं लक्षयति । अस्येत्यादि । संगतिं व्यनक्ति ।

१ कमप्य° T., D. २ च T. ३ तृतीयं भेदं D. ४ K. omits विषमम्.

विषमवैधर्म्यादिहास्याभिधानम् । अस्य विषमस्य विरूपसंघटनारूपायाः प्रथमभिदाया विपर्ययोऽनुरूपसंघटनारूपश्चारुत्वहेतुत्वादलंकारत्वेन गणितः । इतरभेदद्वयविपर्ययस्य तु तदभावान्नालंकारत्वम् । अनुरूपसमागमस्तु प्रस्तूयतेऽत्रेति समम् ।

यथा

कौमुदीव तुहिनांशुमण्डलं
जाह्नवीव शशिखण्डमण्डनम् ।
पश्य कीर्त्तिरनुरूपमाश्रिता
त्वां विभाति नरसिंह भूपते ॥

**कारणविपरीतफलोत्पत्तौ यत्नो विचित्रमित्युक्तम् ॥ ३१ ॥**

यथा

मलिनयितुं खलवदनं विमलयति जगन्ति देव कीर्त्तिस्ते ।
मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥

---

विषमेति । ननु संग्रहे विपर्ययग्रहणाद्विषमविपरीतं सममिति लक्षणं भवति । तथा च समविपरीतं विषममित्यपि सुवचत्वादन्योन्याश्रयता स्यादसंभवि च लक्षणं द्वितीयतृतीयभेदविपर्यासासंभवादित्याशङ्क्य व्याचष्टे । अस्येत्यादि । प्रथमभेदमात्रविपर्ययस्य विवक्षितत्वान्नासंभवो नाप्यन्योन्याश्रयता विपर्ययशब्दस्य संगतिसूचनार्थस्यानुरूपसंघटनं सममित्येतल्लक्षणोपलक्षकत्वादित्यर्थः । ननु प्रथमभेदविपर्ययवदितरभेदविपर्ययोऽपि किं नालंकार इत्याशङ्क्याह । इतरेति । संज्ञां व्युत्पादयति । अनुरूपेति । शेषं सुगमम् ॥

सम[2]म् ॥

विरोधप्रस्तावादेव विचित्रं लक्षयति । कारणेत्यादि । कारणविपरीतकार्योद्योगो विचित्रमाश्चर्यहेतुत्वादित्यर्थः । उदाहरति । विमलयितुमिति । लक्ष्ये

---

[1] T. notices कथितः also. [2] K. omits समम्.

अत्र विमलीकरण[1]लक्षणस्य कारणस्य मलिनीकरणरूपं कार्यं विपरीतमेव प्रयत्नविषयत्वेनोपात्तम्। यदि मलिनयितुमभिलषति [2]किमिति विमलयतीति कारणप्रतिषेधद्वारात्र कार्यवैपरीत्यप्रतीतिः। यदि [3]धवलं कारणं तर्हि कथं जनयति मालिन्यमिति। कार्यवैपरीत्यप्रतीत्या कारणप्रतिषेधस्तु विषयो विषमालंकारस्य ॥

**अधिकमिदं गदितं तद्यत्राननुरूपताश्रयाश्रयिणोः।**

अत्र विरोधस्य प्रक्रान्तत्वमेवैतन्निरूपणकारणम्। [4]अत्राननुरूप्ये हि विरोधस्य जागरूकत्वात्।

---

लक्षणं पातयति। अत्रेति। एवं मित्रसंतापकारिणो मित्रद्रोहस्य तद्विपरीतकार्यमित्राह्लादः प्रयत्नगोचर इति योज्यम्। नन्वस्य विरुद्धकार्यजननरूपाद् द्वितीयविषमभेदात् को भेद इत्याशङ्क्येह कारणप्रतिषेधमुखेन कार्यवैपरीत्यप्रतीतिः विषमप्रभेदे तु कार्यवैपरीत्यप्रतीत्या कारणप्रतिषेध इति भेद इत्याह। यदीत्यादि। इह हि विपरीतकार्यनिष्पादनप्रयत्नोपलक्षणं तत्र मलिनीकर्तुं धवलीकरोतीत्युक्ते प्रवृत्त्यवस्थायामेव नेदं मालिन्यकारणमिति कारणनिषेधः प्रतीयते पश्चान्नेदं धावल्यकार्यमिति कार्यवैपरीत्यं प्रतीयते। विषमे तु विपरीतकार्यजननस्यैव सिद्धावस्थस्य लक्षणत्वात् धवलेन मलिनीकृतमित्युक्ते कथं कृतमिति कार्यवैपरीत्यं प्राक् प्रतीयते पश्चात् धवलस्य कारणत्वप्रतिषेध इति विषमाद्वैषम्यमित्यर्थः ॥

[5]विचित्रम् ॥

अथ विरोधप्रस्तावादेवाधिकं लक्षयति। अधिकमिति। आधाराधेययोरनानुरूप्यमधिकमित्यर्थः। संगतिमाह। अत्रेति। को विरोधस्तत्राह। अनानुरूप्ये हीति। तच्च द्विविधमाधेयाधिक्यादाधाराधिक्याच्चेति। तत्राद्यमुदाहरति।

---

१ °लक्षणकारणस्य T. २ तत् किमिति C., M. ३ धवलं कारणं D.; धवलीकरणं C., M.
४ अतदानुरूप्ये T. ५ K. omits विचित्रम्.

यदिह न दिशां सीम्नि व्योम्नः स्थलेऽप्यमितं यश—
स्तव कथमपि ज्योत्स्नागौरं नृसिंह नरेश्वर ।
तदिदमखिलं चित्रं पञ्चाशता परमक्षरैः
कृतपरिकरे वाग्व्यापारे निवेशयते कविः ॥

अत्र यथा[1] दिगन्ताद्याधारादाधेयस्य यशसो महत्त्वमुपनिबद्धं तथा वाग्व्यापारस्य पारिमित्येऽपि यशसो महत्त्वम् ॥

भवति क्रियोपजननं यद्यन्योन्यं तदान्यो-
न्यम् ॥ ४० ॥

परस्परस्य क्रियाजननस्य विरुद्धत्वादत्र निरूपणावसरोऽस्यालंकारस्य ।

पृथ्वी पूर्वापरगिरिघनोत्तुङ्गवक्षोजनम्रा
भूषा बाहोरजनि भवतः श्रीनृसिंह क्षितीन्द्र ।
बाहुश्चास्याः सुरगजकरस्थूलदीर्घः समग्रां
कान्तिं पुष्णात्यघटघटनाचातुरीयं विधातुः ॥

---

यदिहेत्यादि । यद्दिगन्तादिष्वप्यमितं तत्शतिमिते वचसि निवेशयते तदङ्गुल्यग्रे करियूथशतं वसतीतिवच्चित्रमित्यर्थः । अत्राधेयाधिक्यं दर्शयति । अत्रेति । द्वितीयं तु स्वयमूह्यमिति भावः ॥

अधिकम्[2] ॥

विरोधप्रस्तावादन्योन्यालंकारं लक्षयति । भवतीत्यादि । अन्योन्यक्रियाव्यतिहारोऽन्योन्यालंकार इत्यर्थः । संगतिमाह । परस्परेति । पृथ्वीत्यादि । स्पष्टम् ।

---

१ T. and C. drop यथा. २ K. omits अधिकम्.

अत्र भुजस्य भूमिरभवद्भूषणं तस्याश्चायमित्यनयोर्भूषणक्रियां प्रत्यन्योन्यजनकत्वमुक्तम्। अत एवोपमानोपमेयभावः प्रतीयते। भेदास्तु सरस्वतीकण्ठाभरणे द्रष्टव्याः॥

**आधेयमनधिकरणं युगपद्यद्येकमप्यनेकत्र।**
**यदसंभावितवस्त्वन्तरकरणं च त्रिधा विशेषो-**
**ऽसौ॥ ४१॥**

इह विरोधावसर एवास्य निरूपणमुचितम्। त्रिधा[1] क्रमेण यथा

निपीतोऽयं वीर क्षणमपि विलासस्तव गिरा-
महो यावज्जीवं मनसि विदुषां पल्लवयति।
रसालानां[2] स्वादं कुवलयदलानां परिमलं
प्रसादं ज्योत्स्नानामपि च शरदारम्भसुहृदाम्॥

अत्र गिरां विलासस्याधारस्य श्रवणाञ्जलिपुटपानानन्तरक्षणेऽवस्थानासंभवेऽप्याधेयानां माधुर्यादीनां गुणानामवस्थितिरुक्ता[3]।

रणक्षीवाणक्षीवलयतुमुलोत्प्रेयसुभट-
स्वयंग्राहोद्ग्राहाद्द्रुतमपगतो वीर समरात्।

---

साक्षादन्योन्यजननस्यासंभवेऽपि क्रियाद्वारा न विरोधः। क्रिया चात्र भूषणरूपेत्याह। अत्रेति॥

अन्योन्यम्[4]॥

पूर्विकयैव संगत्या विशेषालंकारं लक्षयति। आधेयमित्यादि। आधारमन्तरेणाधेयस्थितिकथनं परिमितस्यैकस्य वस्तुनो युगपदनेकत्रावस्थानमशक्यवस्तुकरणं चेति त्रिविधो विशेष इत्यर्थः। निपीत इत्यादि। सुगमम्। रणादित्यादि।

---

१ असौ त्रिधा C., M. २ रसानामास्वादं C., M. ३ गुणानां स्थिति C., M. ४ K. omits अन्योन्यम्.

समस्तोऽप्येष त्वां भयविधुरधीरध्वसु वने
घने शैले शैले पुरि पुरि च पश्यत्यरिजनः ॥

अत्रैकस्याप्याधेयस्य वीरस्य यौगपद्येन मार्गादिष्वनेकेषु स्थितिरुपनिबद्धा ॥

मन्दारमालोकयितुं गृहीत-
व्रतं मदीयं नयनं यदासीत् ।
तत् साम्प्रतं वीर नृसिंह देव
त्वदीक्षणेनाजनि पूर्णकामम् ॥

अत्र त्वां पश्यता मम नयनेन सुरतरुर्दृष्ट इति प्रतीतेरसंभावितमेव तद्दर्शनं कृतम् ॥

**किञ्चित् केनापि यथा विहितं तद्वस्तु तत्ततोऽन्येन ।**
**क्रियतेऽन्यथा तथैव व्याघातोऽयं समाख्यातः॥४२॥**

---

वलयत्तुमुलः कङ्कणरवस्तेनोन्नेयः सुभटानां स्वयङ्ग्राह एवोद्वाहो यत्र तस्मात् समरात् । लक्षणार्थे योजयति । अत्रैकस्येति । वीरस्येति । श्लोके वीरेति । संबुद्धिनिर्दिष्टस्य राज्ञो नरसिंहस्येत्यर्थः । अनन्तरोदाहरणेऽत्यन्तासंभावितमन्दारदर्शनं कृतमित्यशक्यवस्तुकरणमित्याह । अत्र त्वामिति ॥

विशेषः ॥

तथैव संगत्या व्याघातं लक्षयति । किञ्चिदित्यादि । यत्र केनचित् कर्त्रा येन साधनेन यद्वस्तु यथा कृतं ततोऽन्येन कर्त्रा तेनैव साधनेन तदेव वस्तु ततोऽन्यथा

---

१ T. drops मम. २ °तुमुलं K. ३ K. omits विशेषः.

येनोपायेन यत् किमपि कार्यं कोऽप्येकः करोत्यपरः पुनस्तेनैवोपायेन तदन्यथा कुरुते तदा कृतस्य कार्यस्य व्याघातहेतुत्वाद् व्याघातनामालंकारः[1]।

यथा

तेजसा जगतस्तापं कृतं किरणमालिना।
नरसिंह महीपाल तेजसैव निरस्यति॥

अत्र तेजोरूपेण येनोपायेन किरणमालिना तापः कृतस्तेनैव त्वयापहृत[2] इति कृतस्य कार्यस्य व्याहतत्वादयं[3] व्याघातः॥

**सौकर्येण निबद्धा कार्यविरुद्धा क्रिया भवेद्यत्र।**
**ख्यातोऽभिमतव्याहतिहेतुर्व्याघात[4] एषोऽपि॥४३॥**

किमपि कार्यं कर्तुं यत् संभावितं भवति कारणं तद्यदि तत्कार्यविरुद्धकार्यकारित्वेन[5] सौकर्यादुपपाद्यते तदा संभाव्यमानकार्यव्याहतिहेतुत्वादयमपि व्याघात एव। कार्यविरुद्धक्रियायाश्चात्र

---

क्रियते स व्याहन्यते कृतं कार्यमनेनेति व्याघातो नामालंकार इति व्याचष्टे। येनेति। उदाहरति। तेजसेत्यादि। स्पष्टम्॥

व्याघातः[6]॥

व्याघातान्तरमाह। सौकर्येणेत्यादि। कस्यचित् कार्यस्य निष्पत्तये संभावितस्य कारणविशेषस्य सौकर्येण तद्विरुद्धकार्यनिष्पादनं यत् सोऽपि संभाव्यमानकार्यव्याहतिहेतुत्वाद् व्याघात इति व्याचष्टे। किमपीत्यादि। ननु कार्यान्तरस्य कथं सुकरत्वमत[7] आह। कार्यविरुद्धेति। नन्वस्य तृतीयाद्विषम-

---

१ व्याघातो नामा° C., M.; °व्याघातनामायमलं° T. २ त्वया परिहृत° T., C., M. ३ व्याघातादयं° T. ४ संभाव्यकार्यव्याहति° C., M. ५ °कार्यस्य विरुद्ध° C., M. ६ K. omits व्याघातः. ७ सुकरतरत्व° D.

सौकर्यं कारणस्य सुतरां तदनुगुणत्वात्। अभिमतेतरस्य पुनरिह कारणस्य सुकरतयोपपद्यमानत्वादभिमतकार्यानुत्पत्तावनभिमत-प्रादुर्भावे च भवतो विषमालंकाराद्भिन्नविषयत्वेन स्थितः।

यथा

जटाबन्धं वल्कावरणमित्यादि[1]।

अत्र नरसिंहदेववितरणसदृशस्य[2] लाभकरणं यत्तपः संभावितं तल्लाभविरुद्धमलाभं प्रति सौकर्यादुपपादितम्। यथा वा

जयश्रियं[3] प्राप्तुमकामयन्त
नृसिंह युद्धात्तव वैरिवीराः।
त्वया तु[4] चक्रीकृतकार्मुकेण
सुरश्रियं[5] संगमितास्ततस्ते॥

**इत्थं निरूप्य कतिचिद्विरोधगर्भानलंकारान्।**
**कथयामो वयमधुनालंकारान् शृङ्खलाका-रान्॥ ४४॥**

---

प्रभेदात् को भेदस्तत्राह। **अभिमतेतरस्येति**। अनभिमतस्येत्यर्थः। **कार्यस्येति** पाठः। इह संभावितकार्यस्य कार्यत्वे हि सौकर्यादनर्थेतरकार्यकारित्वं विषमे तु कार्यस्यानुत्पत्तिरनर्थोत्पत्तिश्चेति भेद इत्यर्थः। अनभिमतप्रादुर्भावोऽनर्थो-त्पत्तिः। उदाहृत्य योजयति। **जटेत्यादि**। उदाहरणान्तरमाह। **जयेत्यादि**। अत्र जयश्रीप्राप्तिकार्यं प्रति संभावितकारणस्य युद्धस्य सौकर्यात् तद्विरुद्धसुरश्रीसं-गमरूपानर्थेतरकार्यान्तरजनकत्वमुक्तम्॥

व्याघातः॥

अथोत्तरालंकारसंदर्भस्य संगतिमाह। **इत्थमित्यादि**। तत्र प्रथमं कारणमालां

---

१ वल्काभरण° D. २ °वितरणस्य लाभ° D.; वितरणसदृशत्वलाभाय कारणं यत्तव संभा° T.; °वितरणसदृशस्य वितरणस्य G. ३ जयश्रियः T., C., M. ४ त्वयाशु चक्री° D. ५ सुरश्रियः T; सुरस्त्रियः C., G, M.

**यद्यत्पूर्वं तत्तद्यथोत्तरं चेत् क्रमेण संश्रयति।**
**हेतुत्वं भवति तदा कारणमालेत्यलंकारः॥ ४५॥**

वितरणे करुणा तव कारणं
वितरणं सुकृतस्य निबन्धनम्।
सुकृतहेतु यशो यशसा न किं
भवति वीर नृसिंह महीपते॥

**यत्र विशेषणभावं पूर्वं पूर्वं प्रति क्रमेणैव।**
**भजति परं परमेषालंकृतिरेकावली कथिता॥४६॥**

राज्ञां सभाः सकवयः कवयो निसर्ग-
सारस्वतप्रसरनिर्मितरम्यकाव्याः।
काव्यानि वर्णितभवच्चरितान्यतीव
चित्राणि वीर भवतश्चरितानि भान्ति॥

---

निरूपयति। यदित्यादि। पूर्वपूर्वस्य क्रमादुत्तरोत्तरं प्रति कारणत्वेन कारणमालेत्यर्थः। वितरण इत्यादि। सुकृतस्य निबन्धनं सुकृतहेतुकमित्यर्थः। किं न भवति। सर्वं सिध्यतीत्यर्थः। अत्र करुणा वितरणं प्रति कारणं तत् सुकृतं प्रतीत्यादि योज्यम्। कार्यकारणक्रम एवात्र चमत्कारहेतुः॥

कारणमाला॥

कार्यकारणभावाश्रितां कारणमालामुक्त्वा संप्रति तद्वैधर्म्येण विशेषणविशेष्यभावाश्रितामेकावलीमाह। यत्रेत्यादि। यत्रोत्तरोत्तरस्य पूर्वपूर्वोपस्कारकत्वं स एकावल्यलंकारः। राज्ञामित्यादि। भवतश्चरितान्यतीव चित्राणि भान्ति चित्रतया भान्तीत्यर्थः॥

एकावली॥

उत्तरोत्तरोपस्कारकत्वेनैकावल्युक्ता, तद्वैधर्म्येण पूर्वपूर्वस्योत्तरोत्तरोपस्कारकत्वेन

**यत्रोत्तरोत्तरगुणावहत्वमुल्लसति पूर्वपूर्वस्य ।**
**तदिदं मालादीपकमित्याम्नातं विपश्चिद्भिः ॥४७॥**

मालारूपविच्छित्तिविशेषावलम्बनेन दीपकप्रस्तावं त्याजयित्वास्य लक्षणमिह दर्शितम् ।

तव क्रियन्ते करुणाकटाक्षैः
श्रियः कवीनां नरसिंह भूप ।
ताभिर्विकासा मनसः पुनस्तैः
सूक्तानि तैस्त्वद्गुणवर्णनानि ॥

अत्र कटाक्षादिभिः क्रमेण श्रीप्रभृतीनामुत्कर्षः करणक्रियानिबन्धनं च दीपकम् ॥

**वस्तुस्पृहणीयत्वे विश्रान्तिं चेद्यथोत्तरं तनुते ।**
**सारो नाम तदानीं कथितोऽलंकारसारज्ञैः ॥४८॥**

---

मालादीपकमाह । **यत्रोत्तरोत्तरमित्यादि** । यत्र पूर्वस्योत्तरोत्तरोपस्कारकत्वं निबध्यते तन्मालादीपकमित्यर्थः। दीपकप्रस्तावातिक्रमेणेह निरूपणे कारणमाह । **मालारूपेति** । तवेत्युदाहरणे लक्षणार्थं योजयति । **अत्र कटाक्षेति** । दीपकांशं दर्शयति । **करणक्रियेति** । तव क्रियन्त इत्याख्यातनिर्दिष्टकरणक्रियानिबन्धनं मालादीपकमित्यर्थः ॥

मालादीपकम् ॥

मालाविच्छित्तिप्रस्तावात् सारालंकारं निरूपयति । **वस्त्वित्यादि** । यत्र पूर्व-

---

१ C. and M. have यथा वा before तव क्रियन्ते°. २ देव T., C. ३ मनसः क्रियन्ते D. ४ T. drops क्रमेण. ५ °मुत्कर्षे एकक्रिया° T.; °मुत्कर्षंकरणमेकक्रिया° C., M.

एके चन्द्रकलावचूडमपरे मौली तदीये स्थितां
स्वर्गङ्गामितरे तदाश्रितपदाम्भोजं मधुध्वंसिनः।
सर्वे तन्मनसि स्थितां श्रियमनुध्यायन्ति सैषापि यद्-
भ्रूभङ्गैकवशंवदा स जयति श्रीमान् नृसिंहो नृपः॥

इह भगवतः खण्डेन्दुचूडस्यापेक्षया सुरसिन्धोरुत्कृष्टत्वं तद-पेक्षया परमपुरुषस्य तदपेक्षया लक्ष्म्यास्तदपेक्षया श्रीमतो नृ-सिंहदेवस्य।

यथा वा

अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते
सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार।
धत्ते खद्योतलीलामयमपि गगने श्रीनृसिंह क्षितीन्द्र
त्वत्कीर्त्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति॥

**वाक्यार्थो यदि हेतुर्भवति पदार्थो विशेषणद्वारा।**
**द्विविधं कथयन्ति तदालंकारं काव्यलिङ्ग-मिति॥ ४१॥**

---

पूर्वापेक्षयोत्तरोत्तरस्य सारत्वं निबध्यते स सारालंकार इत्यर्थः। एक इत्यादि। निगदव्याख्यातम्। अन्तरित्यादि। अत्र त्रैलोक्यादिपूर्वपूर्वापेक्षयोत्तरोत्तरस्य सार-त्वकथनात् कीर्त्तेः सर्वोत्तरत्वसिद्धिः। "कृञ्चानुप्रयुज्यते लिटि" इत्यत्रानुग्रहणस्य व्यवहितप्रयोगभिन्नत्वः। कालिदासादिमहाकविप्रयोगप्राचुर्यादनुमाह्यः॥

सारः॥

एवं शृङ्खलाविच्छित्त्याश्रितानलंकारान् निरूप्य तर्कन्यायमूलालंकारद्वये काव्य-लिङ्गं तावदाह। वाक्यार्थ इत्यादि। यत्र हेतुः कारणं वाक्यार्थगत्या पदार्थगत्या

---

१ °मपरे T., C., M. २ स्थितां श्रियमनु° D. ३ T., C., and M. drop श्रीमतः. ४ °नृपस्य T., C. and M. ५ नभसि T., C., G., and M. ६ बभूव D., G.

नेदमनुमानम् । ज्ञाप्यज्ञापकभावाभावात् । समर्थ्यसमर्थकभावेऽप्यत्र नार्थान्तरन्यासाविर्भावः । समर्थ्यवाक्यार्थस्य समर्थकवाक्यार्थं प्रति सापेक्षत्वात्[1] । यत्रेतरनिरपेक्षस्य वाक्यार्थस्य हेतुत्वं तत्रार्थान्तरन्यासः । ततश्च सामान्यविशेषरूपवाक्यार्थगत एवार्थान्तरन्यासो भवितुमर्हति यत्र संभवतीतरनिरपेक्षत्वम् ।

नापि दृष्टान्तः । सामान्यरूपयोरेव विशेषरूपयोरेव[2] वाक्यार्थयोरेव[3] परस्परनैरपेक्ष्येण हेतुत्वे तस्य संभवात् । यदि तु कार्यकारणरूपयोरेव तयोः परस्परसव्यपेक्षत्वेन हेतुत्वं तदा तावदेकं

---

वा विशेषणद्वाराङ्गत्वेन निबध्यते तद् द्विविधं काव्यलिङ्गं वाक्यार्थहेतुकं पदार्थहेतुकं चेत्यर्थः । अस्यानुमानाद्भेदमाह । नेदमिति । हेतुमाह । ज्ञाप्येति । व्याप्यव्यापेक्षया अप्रतीतप्रत्यायनाभावादित्यर्थः । तर्हि प्रतीतसमर्थकत्वादर्थान्तरन्यासादभेद[4] इत्याशङ्क्याह । समर्थ्यसमर्थकभावेऽपीति । अत्रोपपत्तिमाह । समर्थ्यवाक्यार्थस्येति । समर्थ्यसमर्थकवाक्यार्थयोः सापेक्षत्वे काव्यलिङ्गं निरपेक्षत्वे त्वर्थान्तरन्यास इत्यर्थः । फलितमाह । ततश्चेति । सामान्येन विशेषसमर्थनं विशेषेण सामान्यसमर्थनं चेति द्विविध एवार्थान्तरन्यास इत्यर्थः । कार्येण कारणसमर्थनं कारणेन कार्यसमर्थनं चेति द्वौ भेदावित्युद्भटः । तन्निरासायैवकारः[5] । कुत इत्यत आह । यत्रेति । निरपेक्षत्वस्य[6] तत्रैव संभवात् तद्गत एवार्थान्तरन्यासः कार्यकारणगतं तु काव्यलिङ्गमेवेति भावः । तर्हि दृष्टान्तेऽतिव्याप्तिरित्यत आह । नापि दृष्टान्त इति । केवलसामान्यरूपयोः केवलविशेषरूपयोर्वा निरपेक्षयोर्हेतुत्वेन दृष्टान्त इत्यर्थः । प्रकृते किमायातमत आह । यदिवेति । कार्यकारणरूपयोर्वाक्यार्थयोः सापेक्षयोर्हेतुत्वे वाक्यार्थहेतुत्वे काव्यलिङ्गमित्यर्थः । अत्रायं विवेकः[7] । प्रत्याय्यप्रत्यायकभावेऽनुमानं समर्थ्यसमर्थकभावे तु सामान्यविशेषरूपवाक्यार्थ-

---

१ सापेक्षत्वम्. २ °रेव वा T. ३ T., C., M. omit एव. ४ प्रतीतिसमर्थादर्थान्तर° K. ५ °तन्निनिरासार्थमत्रैवकारः D. ६ निरपेक्षत्वस्यैव K. ७ अयमत्र विवेकः D.

वाक्यार्थवृत्ति काव्यलिङ्गम्। अत्र च[1] वाक्यार्थ एव हेतुरतस्तद्वाचकस्य हिशब्दादेरुपादाने[2] पौनरुक्त्यम्[3]। यदा पुनः पदार्थस्य हेतुत्वं तदा यदि तृतीयान्तं पञ्चम्यन्तं वा पदमुपादीयते[4] तदा हेतुत्वमात्रं नालंकारः। यदा तु विशेषणद्वारा कारणोपनिबन्धस्तदा[5] पदार्थवृत्ति काव्यलिङ्गम्। एवमिदं द्विभेदम्।

क्रमेण यथा

अलं भोः पौलोमीसहचरपुरीवारमहिलाः
कुचाभोगे कालागरुभिरफलस्थासकविधिः।
कलिङ्गेन्दोः कीर्तिस्त्रिदशपरिषद्गीतमहिमा
समन्ताद्गात्रं वः सरसमनुलिम्पत्यविरलम्॥

अत्र कालागरुस्थासकविधेरफलत्वे साध्ये कलिङ्गेन्दोरित्यादि वाक्यार्थो हेतुत्वेनोपात्तः।

---

योर्निरपेक्षयोस्ताटस्थ्येन हेतुत्वेऽर्थान्तरन्यासः। केवलसामान्ययोः केवलविशेषयोर्वा निरपेक्षयोरेव हेतुत्वे दृष्टान्तः। कार्यकारणरूपवाक्यार्थयोस्तु सापेक्षयोर्हेतुत्वे वाक्यार्थहेतुकं काव्यलिङ्गमिति। अत्रापरं विशेषमाह। अत्र चेति। आकाङ्क्षावशेन वाक्यार्थस्य हेतुत्वे सिद्धे हेत्वर्थशब्दप्रयोगः पौनरुक्त्याह इत्यर्थः। पदार्थहेतुकेऽपि काव्यलिङ्गे कंचिद्विशेषमाह। यदा पुनरिति। पदार्थस्य विशेषणगत्या हेतुत्वे चमत्कारकारिहेत्वर्थविभक्तिप्रयोगे तदभावान्नालंकारत्वमित्यर्थः। द्वितीयभेदस्य स्वरूपमाह। यदा त्विति। पदार्थस्येति शेषः। यत्र पदार्थो विशेषणद्वारा हेतुत्वेन निबध्यते तत् पदार्थहेतुकं काव्यलिङ्गमित्यर्थः। अलमित्यादि। स्पष्टम्।

---

१ C and M. omit च. २ वाक्यार्थस्य च हेतुरतातिस्ततस्तद्वाचक° T.; वाक्यार्थ एव हेतुरभिहितस्तद्वाचक° G. ३ पौनरुक्त्यं स्यात् G., ४ °मुदीयते T. ५ कारणोपसंबन्ध° T.

त्वद्वैरिक्षितिपालसौधवलभीरिङ्छोलिशालामधु-
च्छत्रोड्डीनसरोषघोरसरघादंशव्यथाव्याकुलाः ।
मन्दाः स्यन्दनवाजिनः प्रतिपथप्रस्थानदौःस्थ्यं मुहुः
क्षोणीपालनृसिंह देव नितरां कुर्वन्ति भास्वत्प्रभोः ॥

इह रविरथतुरगगमनान्तराये साध्ये मन्दा इति विशेषणरूपः पदार्थो हेतुतया निर्दिष्टो मन्दतायाश्च त्वद्वैरीत्यादिविशेषणरूपः ॥

## अनुमतमनुमानमिदं यत्र स्तः साध्यसाधने कथिते ।

अत्र साध्यसाधनकथनमात्राभिधानं[1] व्याप्त्यादिप्रदर्शनं[2] न कर्त्तव्यमित्युपदेशे[3] पर्यवसितम्[4] । इतरथा कथमेतत् तर्कानुमानतो भेदं भजेत्[5] । किं च पञ्चावयवत्वे सत्यप्यवयवान्तरानुपादानं पौनरुक्त्यपरिहाराय । तथा हि केचिदवयवान्तराभिधानमधिकं

त्वदित्यादि । रिङ्छोलिमधुच्छत्राणि क्षौद्रपटलानि तेभ्य उड्डीना उत्पतिताः सरघा मधुमक्षिकाः । अत्र पदार्थहेतुत्वमुद्भावयति । इहेति ॥

काव्यलिङ्गम्[6] ॥

तर्कन्यायमूलप्रस्तावादनुमानं लक्षयति । अनुमतमित्यादि । साध्यं व्यापकं सिषाधयिषितो धर्म इति यावत् । साधनं व्याप्यं व्याप्तिपक्षधर्मतावल्लिङ्गमिति यावत् । तेन तन्मात्रं यन्निर्दिश्यते सोऽनुमानाख्योऽलंकार इत्यर्थः । तर्कानुमानात् को भेदस्तत्राह । अत्रेति । केवलसाध्यसाधननिर्देशस्येह लक्षणत्वात् व्याप्त्यादिनिर्देशसापेक्षात् तर्कानुमानाद् भेद इत्यर्थः । ननु तर्कानुमानवदत्रापि पञ्चावयवप्रयोगः किं न क्रियते तत्राह । किं चेति । तावतैव साध्यसिद्धेरिति भावः । किं च तर्कानुमानेऽपि पञ्चावयवत्वं न सर्वसंमतमित्याह । तथा हीति । यथाहुः

'त्रीनुदाहरणान्तान् वा यद्वोदाहरणादिकान् ।
मीमांसकाः सौगतास्तु सोपनीतमुदाहृतम्[7] ॥'

१ °साधनाभिधानं T.; °साधनमात्राभिधानं C., M. २ व्याप्त्यादिप्रदर्शनपरमित्युप° C., M.; °व्याप्त्यादि प्रदर्शनं कर्त्तव्यमित्युप° T. ३ °न्युपदेशपर्य° ४ D. पर्यवस्यति T. ५ भजते T.; भजेत G. ६ K. omits काव्यलिङ्गम्. ७ सोपनीतिमुदा° K.

मन्यमानास्तर्कानुमानेऽपि त्रित्रावयवत्वमेवाभ्युपगच्छन्ति। विशेषतश्चमत्काराय श्लेषरूपकापह्नुत्याद्यनुप्राणितत्वेन विच्छित्त्यन्तर-[1] मादरणीयम्[2]।

यथा[3]

> नरसिंह महीपाल[4] विप्रस्त्वां मकरध्वजम्।
> मार्गणास्तव संजाताः कथं सुमनसोऽन्यथा॥

अत्र नरसिंहदेवविषयं मकरध्वजत्वं साध्यम्। तद्विशिष्टश्च धर्मी पक्षः। तत्र तावत् सुमनोमार्गणत्वं हेतुर्वर्त्तते सपक्षेऽन्यस्मिन्नपि मकरध्वजे वर्त्तते मकरध्वजादितरत्र[5] क्वापि न वर्त्तते। तेन त्रिरूपो हेतुर्नरसिंहदेवनिष्ठं मकरध्वजत्वमनुमापयतीत्यत्र[6] पक्षे व्याप्तिः सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिश्चेति हेतोस्त्रिरूपत्वं दर्शितम्। अथ[7] व्याप्यात् सुमनोमार्गणत्वाद् व्यापकस्य मकरध्वजत्वस्य ज्ञानमिहेति[8] श्लेषप्रतिभोत्थापितमिदमनुमानम्। रूपकादिच्छायानुगृहीतम[9]प्यनयैव[10] दिशा द्रष्टव्यम्। शुद्धमप्येतत् संभवति।

यथा

> कार्याणि कारणगुणान् न परित्यजन्ती-
> त्यव्याप्तमाहुरिह वीर नृसिंह देव।

---

इति। अथेह कंचिद्विशेषमाह। विशेषत इति। नरसिंहेत्यादि। मार्गणा अर्थिनः शराश्च। सुमनसो विद्वांसः कुसुमानि च। अत्र साध्यादिकं विविनक्ति। अत्रेति। अत्र हेतोस्त्रैरूप्यं दर्शयति। एवमलंकारानुप्राणितमनुमानमुदाहृत्य शुद्धमुदाहरति। कार्याणीत्यादि। न्यग्गत्वरेण निम्नगामिनेत्यर्थः।

---

१ °प्राणितत्त्वेनापि स्थित्यन्तरमादर° D. २ °मादर्त्तव्यम् C., M. ३ T. C., and M. omit यथा. ४ धराधीश D. ५ °ध्वजादन्यत्र T. ६ °यतीत्यमत्र D. ७ अथवा T. ८ °मिहेति च C., M. ९ रूपकादिकार्यानु° T.; रूपकादिकार्यच्छायानु° C., M. १० D. omits अपि.

न्यग्गत्वरेण तव दानजलेन सूता
मेरोः शिखामपि विलङ्घ्य विभाति कीर्त्तिः ॥

अत्र राजा त्वसंभव[1]मनुमानस्याभिधानमकरोत् ॥

**प्रथमं निर्दिष्टानां यस्मिन्नर्थान्तराश्रयोऽर्थानाम् ।**
**अनुनिर्देशो भवति क्रमेण तत् स्याद्यथासं-**
**ख्यम् ॥ ५० ॥**

आयामश्श्लाघनीयं किमभिमतफलप्रापकं किं प्रियं किं
विस्तीर्णं किं स्थिरं किं विमलमथ च[2] किं श्रूयतां श्री[3]नृसिंह ।
दोस्तम्भस्त्यागलीला मित[4]वचनमुरो राज[5]लक्ष्मीर्यशस्ते
नाहीशो न द्युशाखी न मधु न गगनं ना[6]द्रिनाथो न चन्द्रः ॥

---

मेरुशिखाविलङ्घनेन कीर्त्ते[7]स्तदूर्ध्वगामित्वमुक्तम् । अत्र नीचगामिनो जलादनीचगामिन्याः कीर्त्तेरुत्पत्तिरलंकारान्तरासंकीर्णैव । कार्यस्य कारणगुणानुविधानव्याप्तिभङ्गो लिङ्गमिति युद्धमिति बोद्धव्यम् । अत्र राज्ञो विप्रतिपत्तिरित्याह । अत्रेति ॥

अनुमानम्[8] ॥

एवं तर्कन्यायमूलमलंकारद्वयमुक्त्वा संप्रति न्यायमूलालंकारेषु यथासंख्यालंकारं तावदाह । **प्रथममित्यादि** । यत्रोद्देशिनामनूद्देशिनां चार्थानां क्रमेण संबन्धो निबध्यते स क्रमापरनामा यथासंख्यालंकार इत्यर्थः । प्रथमनिर्दिष्टा उद्देशिनः। पश्चान्निर्दिष्टास्त्वनूद्देशिनः । तेषां प्रथमस्य प्रथमेन द्वितीयस्य द्वितीयेनेत्यादिकः क्रमसंबन्धो न्याय्यः । यथा 'क्रमश्च देशसामान्यात्' इति न्यायादैन्द्राग्न्यादिकाम्येष्टीनां तद्याज्यापुरोनुवाक्यायुगलैः'उभा वामिन्द्राग्नी' इत्येवमादिभिः यथा वा समिदादीनां प्रयाजादीनां तदनुमन्त्रणमन्त्रैः 'वसन्तमृतूनाम्' इत्यादिभिरिति भावः । **आयामेत्यादि** ।

---

१ त्वसंभवित° D. २ पुनः श्रूयतां T. ३ किं नृसिंह D., T. ४ मृदुवचन° C., M. ५ राज्य° D. ६ नो सुमेरुर्न D. ७ कीर्त्तेरूर्ध्वगामि° K. ८ K. drops अनुमानम्.

एकस्मिन् यदनेकं क्रमादनेकत्र वा भवत्येकम् ।
तमलंकारनिरूपणनिपुणाः पर्यायमब्रुवत ॥ ५१ ॥

अत्र क्रमप्रक्रम एवास्य निरूपणकारणम् । यदा यौगपद्येनैकस्या नेकत्र स्थितिरुपनिबध्यते तदा विशेषविषयमप्याक्रामत्ययमित्याशयेनात्र क्रमग्रहणम् । न चैष परिवृत्तिः । विनिमयेन विनैवास्य प्रवृत्तत्वात् । पर्यायक्रमत्वमाश्रित्य [1]प्रगल्भमानत्वादन्वर्थमस्याभिधानम् । क्रमेण यथा

[2]काश्मीरपांसुरुचिरांशुकचारुहारै-
र्या प्राग्बभौ कुचतटी रिपुसुन्दरीणाम् ।

---

अत्र प्रश्नोत्तरत्वेनायामादिगुणविशिष्टतयोद्दिष्टानां दोस्स्तम्भादीनां निर्देश्यतयानूद्दिष्टैरहीश्वरादिभिः क्रमेण संबन्धः ॥

[3]यथासंख्यम् ॥

क्रमप्रस्तावात् पर्यायं लक्षयति । एकस्मिन्निति । यत्रानेकस्याधेयस्य क्रमादेकाधारसंबन्धः एकस्यैवाधेयस्य क्रमादनेकाधारसंबन्धो वा निबध्यते स द्विविधः पर्यायालंकार इत्यर्थः । संगतिमाह । अत्रेति । नन्वेकस्यानेकाधारसंबन्धाविशेषात् द्वितीयपर्यायद्वितीयविशेषयोः को विशेष इत्याशङ्क्य क्रमयौगपद्याभ्यामनयोर्भेद इत्याह । यौगपद्येनेति । ननु क्रमादेकस्यानेकसंबन्धाविशेषात् परिवृत्तेः को विशेष इत्याशङ्क्येह विनिमापितधर्मसंबन्धाभावाद् भेद इत्याह । न चैष इति । मुख्यार्थकथनपूर्वकं संज्ञाप्रवृत्तिनिमित्तमाह । पर्याय इत्यादि । तद्वति तच्छब्दोपचारात् अर्शआदित्वात् पर्यायवान् पर्याय इत्यर्थः । काश्मीरेत्यादि । स्पष्टम् । प्रागित्यादि । गतम् ॥

[4]पर्यायः ॥

---

१ प्रवर्त्तमानत्वा° O., M. २ काश्मीरेत्यादि T. ३ K. omits यथासंख्यम्. ४ K. omits पर्यायः.

सैवाद्य भाति कुपिते त्वयि वीर भूभृ-
ज्ज्ञातुच्छटातरुपलाशकरक्तसूत्रैः ॥

अत्र कुङ्कुमरजःप्रभृतयो गैरिकप्रमुखाश्चैकस्मिन्नाश्रये कुचतटे क्रमवर्तिनः कथिताः ।

प्रागासीन्मकरन्दपिच्छिलतले पद्मस्य गर्भे ततः
शौरेः कौस्तुभकान्तिपूरसुभगाभोगे[1] भुजाभ्यन्तरे ।
आवासस्तव लक्ष्मि संप्रति पुनर्निर्व्याजमूर्च्छत्कृपा-
स्रोतःशीतलिते नृसिंहवसुधानाथस्य नेत्राञ्चले ॥

अत्रैकस्या एव लक्ष्म्याः पद्मगर्भादावनेकस्मिन्नाश्रये स्थितिः क्रमवर्त्तिनी ॥

**अधिकन्यूनसमानां न्यूनाधिकतुल्यवस्तुभिर्यत्र ।
विनिमय एषा कथिता परिवृत्तिः कोविदैस्त्रि-
विधा ॥ ५२ ॥**

विनिमयः किंचिन्मुक्त्वा कस्यचित् स्वीकारः । त्रिविधा अधिकपरिवृत्तिर्न्यूनपरिवृत्तिः समपरिवृत्तिश्च । क्रमेण यथा

---

क्रमादेकस्मिन्ननेकधा संबन्धसाम्यात् पर्यायानन्तरं परिवृत्तिं लक्षयति । अधिकेत्यादि । न्यूनाधिकतुल्यैरधिकन्यूनसमानां विनिमयः परिवृत्तिरिति वाक्यार्थः । विनिमयशब्दार्थमाह । विनिमय इति । अधिकदानेन न्यूनोपादानमधिकपरिवृत्तिः । न्यूनदानेनाधिकग्रहणं न्यूनपरिवृत्तिः । समेन समस्वीकारः समपरिवृत्तिरित्यर्थः । सुगममन्यत् ॥

परिवृत्तिः[2] ॥

---

1 कौस्तुभरत्नकान्तिसुभगा° C., M. 2 K. omits परिवृत्तिः.

नरसिंह महीपाल मदान्धास्तव दन्तिनः[1]।
ददत्यरिनरेन्द्रेभ्यो दिवमाददते भुवम्॥

अत्राधिकाया दिवो दानान्न्यूनाया भुवो ग्रहणम्।

तनौ दत्त्वा[2] पाकोन्मुखशरसखीं कामपि रुचं[3]
रिपुस्त्रीभ्यस्तासां कलयसि[4] कलिङ्गक्षितिपते।
प्रभां ताटङ्कानां श्रवणकुसुमानां विलसितं[5]
स्मितानामालोकं स्तनमलयजानां श्रियमपि॥

इह न्यूनायाः शरपाण्डुराया रुचः समर्पणात् ताटङ्कप्रभाप्रभृती[7]-[8]
नामधिकानामादानम्।

प्रतिभटधरणिपतिभ्यो नाराचपरम्पराः शिता दत्त्वा।
हरसि नृसिंह[9] नरेश्वर तज्जयलक्ष्मीकटाक्षपरिपाटीः[10]॥

अत्र नाराचपरम्परापरित्यागात् तुल्यगुणानां कटाक्षपरिपाटीनां
केलनम्[11]॥

**एकस्यानेकत्र प्राप्तावेकत्र यो भवेन्नियमः।**
**ख्याता सा परिसंख्या संख्यावद्भिश्चतुर्भेदा॥५३॥**

एकानेकाभिधा[न]प्रक्रान्तत्वादिहास्याः कथनम्।

एकानेकप्रस्तावात् परिसंख्यामाह। एकस्येत्यादि। एकस्यानेकत्र युगपत्
प्राप्तावेकतरपरिवर्जनेनैकत्र नियमनं यत्र क्रियते सा परिवर्जनेन संख्यानात् परि-
संख्येत्यर्थः। संगतिमाह। एकानेकेति। तस्याश्चतस्रो विधाः श्लोकेन संगृह्णाह।

१ सिन्धुराः D. २ दत्ते T. ३ रुचिं O., M. ४ हरसि नरसिंह क्षितिपते O., M.
५ नृसिंह T. ६ विकासितं O., M. ७ ताटङ्कप्रभृतीना° D., O., M. ८ °प्रभृतीनामादा-
नम् T., D. ९ नरसिंह O. १० °परिपाटिम् M. ११ स्वीकरणम् O., M.

प्रश्नपूर्वान्यथा [1]चेति सा भवेत् प्रथमं द्विधा ।
वर्जनीयस्य शाब्दत्वादार्थत्वाच्च द्विधा पुनः॥५४॥

क्रमेण यथा

आयामश्लाघनीयमित्यादि ।

इयं प्रश्नपूर्विका वर्जनीयस्य शाब्दत्वे ।

अङ्गेष्वाभरणं नृसिंह नृपते किं किं त्वयाङ्गीकृतं
मौलौ चन्द्रकलावचूडचरणद्वन्द्वं श्रुतं कर्णयोः ।
वक्त्रे वागधिदेवता मधुरिमा कण्ठे भुजे विक्रमः
कारुण्यं हृदये करे वितरणं पादे रिपुक्ष्माभुजः ॥

इयं प्रश्नपूर्विका वर्जनीयस्यार्थत्वे[2] ।

लोकेऽस्मिन् नरसिंहदेवनृपतिर्दाता न कल्पद्रुम-
स्तेजस्वी स न पद्मिनीसहचरः कान्तः स नो चन्द्रमाः ।
गम्भीरः स न वाहिनीपरिवृढस्तुङ्गः स नो मन्दरः
शिल्पज्ञः स न पद्मभूः[3] किमपरं वाग्मी स नो वाक्पतिः ॥

इयमप्रश्नपूर्विका वर्जनीयस्य शाब्दत्वे ।

---

प्रश्नेत्यादि । आयामेत्यादि । यथासंख्ये गतमेतत् । अत्र तथा मश्लाघ्यत्वादिगुणानां दोःस्तम्भादिष्वहीश्वरादिषु च प्राप्तेर्दोःस्तम्भादिष्वेव नियमनात् परिसंख्या । अहीनाधीनां नाहीन इत्यादिना शब्दादेव निषेध इति वर्जनीयस्य शाब्दत्वम् । अङ्गेष्वित्यादि । अङ्गाङ्गाभरणत्वस्य[4] भगवच्चरणयुगलादिषु मुकुटादिषु च प्राप्तस्य चरणयुगलादिषु नियमनं मुकुटादिनिषेधस्यार्थसिद्धत्वाद्वर्जनीयस्यार्थत्वमित्यर्थः । लोक इत्यादि । अत्रापि दातृत्वादिगुणानामुभयत्र प्राप्तौ राज्ञि नियमः कल्पद्रुमा-

---

१ वेति D. २ °स्यार्थत्वात् T. ३ पद्मजः T. ४ अङ्गाभरण° K.

विद्यासु तृष्णा व्यसनं कलासु
दाने विनोदः समरे विहारः ।
कीर्तौ रतिः काव्यकथासु राग-
स्तवैव[1] जागर्ति नृसिंह देव ॥

इयमप्रश्नपूर्विका वर्जनीयस्यार्थत्वे ॥

दण्डापूपिकया यत्[2] स्यादेवार्थान्तरापतनम् ।
अर्थापत्तिरियं सा कथितालंकारपारगैर्द्वेधा ॥५५॥

दण्डापूपयोर्भावो दण्डापूपिका । यथा दण्डभक्षणादपूपभक्षणमर्थादापतति तथा कस्यचिदर्थस्य निष्पत्तौ समानन्यायलक्षणसामर्थ्याद्यदर्थान्तरमापतति सार्थापत्तिः । नेयमनुमानम् । समानन्यायस्य संबन्धरूपत्वाभावात् । असंबन्धेन तु[3] तस्यानुत्थानात् ।

---

दिनिषेधश्च शाब्द एव । विद्यास्वित्यादि । अत्रापि तृष्णाव्यसनादीनां विद्याकलादिषु नियमनादर्थाद्धनद्यूतादिनिषेधप्रतीतेर्वर्जनीयस्यार्थत्वम् ॥

परिसंख्या[4] ॥

परिसंख्यायां वर्जनीयसाधकत्वप्रसङ्गादर्थापत्तिं लक्षयति । दण्डापूपिकयेत्यादि । यत्र कस्यचिदर्थस्य निष्पत्तौ दण्डापूपिकया कैमुतिकन्यायेनार्थान्तरस्य सिद्धिर्निबध्यते सार्थापादनादर्थापत्तिरित्यर्थः । दण्डापूपिकाशब्दं व्युत्पादयति । दण्डापूपयोरिति । मनोज्ञादित्वाद् वुञ्प्रत्ययः । पृषोदरादित्वाद् वृद्ध्यभाव इति केचित् । अन्ये तु दण्डापूपौ यत्र न्याये सा दण्डापूपिका मत्वर्थीयष्ठन्नित्याहुः । दण्डापूपाविव दण्डापूपिका । "इवे प्रतिकृतौ" इति कन्प्रत्यय इत्यपरे । वाक्यार्थमाह । यथेति । यथा दण्डो मूषिकभक्षित इत्युक्ते तत्सहभाव्यपूपभक्षणमर्थसिद्धं[5] तथेत्यर्थः । अनुमानेऽन्तर्भावं[6] परिहरति । नेयमिति ।

---

१ तवैव जाता नरसिंह T. २ यस्मात् C., M. ३ T. drops तु; C. and M. have च in place of it. ४ K drops परिसंख्या. ५ °मर्थात् सिद्धं D. ६ °मानान्तर्भावं D.

इयं च द्वेधा। प्राकरणिकादप्राकरणिकस्यार्थादापतने तावदेका। अप्राकरणिकात् प्राकरणिकस्यार्थादापतने तु द्वितीया।

क्रमेण यथा

अकलङ्कमपि द्विषद्वधू-
वदनेन्दुं मलिनं वितन्वते।
तव वीर नृसिंह कीर्त्तयः
सकलङ्कं किमुतेन्दुमण्डलम्॥

अत्र द्विषद्वधूवदनेन्दुवृत्तान्तः प्राकरणिक इन्दुमण्डलवृत्तान्त-मप्राकरणिकमर्थादाक्षिपति॥

आपातालं निबिडघटितान् कम्पयत्येतदुच्चै-
र्मूर्च्छल्लम्बापटहरटितं स्थावरानप्यशेषान्।
एतांस्तूलीसमभुजबलान् जङ्गमान् भूभृतस्तान्
यात्रारम्भे तव किमु पुनः श्रीनृसिंह क्षितीन्द्र॥

अत्र स्थावरभूभृद्वृत्तान्तोऽप्राकरणिको जङ्गमभूभृद्वृत्तान्तं प्राकर-णिकमर्थादापूरयति॥

## तुल्यप्रमाणशैष्ट्यात् प्राप्तावेकत्र यौगपद्येन।

---

संबन्धो व्याप्तिस्तदेकजीवभूतमनुमानम्। अर्थापत्तिस्तु न्यायरूपेति भावः। अकलङ्कमित्यादि। अकलङ्कं निष्कलङ्कम्। आपातालमित्यादि। लम्बा पटहः। स्थावरभूभृतः पर्वताः। जङ्गमभूभृतो राजानः॥

अर्थापत्तिः॥

वाक्यन्यायमूलमस्तावात् विकल्पं लक्षयति। तुल्येत्यादि। तुल्यबलप्रमाण-विषयत्वात् तुल्यबलयोर्विरोधिनोर्युगपदेकत्र प्राप्तयोः पाक्षिकत्वं विकल्प इत्यर्थः।

---

१ O. drops तु. २ °ल्ल° D.; °ल्ल° O., M. ३ °स्तूलीलवसमबलान् D. ४ °माक्षिपाति O., °मागुरयाति T. ५ °जीवित° D. ६ K. omits अर्थापत्तिः. ७ K. omits विरुद्धयोः. ८ विकल्पो विकल्पः सत्त्वं K.

**उभयोः समानबलयोः स्फुरति विरोधे विकल्प इत्युक्तः ॥ ५६ ॥**

[1]त्वद्विप्रयोगे परितप्यमाना
मृणालमृद्वी[2] मदनज्वरेण ।
इत्थं कथंचिद्गत वेपमाना
ब्रूते सखी वीर नृसिंह देव ॥

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
किमत्र गच्छामि करोमि किं वा
प्रवालशय्याशरणं[3] शरीरम् ॥

**यद्भवति यौगपद्यं गुणक्रियाणां समुच्चयः स स्यात् ।**
**एषोऽदर्शि विकल्पप्रतिभटभूतो द्विधास्माभिः ॥ ५७ ॥**

सर्वत्र ह्यविरुद्धयोस्तुल्यबलयोः समुच्चयः । विरोधे विषमबलत्वे स्वौदुम्बरीसर्पवेष्टनस्पर्शनयोरिव बाध्यबाधकभावः । तुल्यबलत्वे व्रीहियववदगत्या विकल्पस्तत्र समुच्चयनिरासार्थमुक्तं विरोध इति । बाधपरिहारार्थमुक्तं समानबलयोरिति । समानबलत्वे हेतुस्तुल्यप्रमाणवैशिष्ट्यादिति । उदाहरणार्थस्य विषयं तावदाह । त्वदित्यादि । उदाहरति । अस्तीत्यादि । इह दुःसहविरहज्वरप्रतीकारत्वे हिमगिरिगमनप्रवालशय्याशरण[4]योस्तुल्यबलत्वाद्विकल्पः । अत्र परकीयवाक्यगर्भीकारोऽपि चमत्कारकारित्वादलंकार एवेत्याहुः ॥

विकल्पः[5] ॥

---

१ C. and M. insert यथा before त्वद्विप्र° २ °तन्वी C., M. ३ °शयनं C., M.
४ °करणयो° K. ५ K. omits विकल्पः.

गुणानां धवलत्वादीनां क्रियाणां च यौगपद्येन भवन्नेष द्विधा[1] भवति। क्रमेण यथा

अभूद्यशो वीर तवेन्दुसुन्दरं
द्विषां मषीवर्णमभूच्च दुर्यशः।
विरुद्धकार्यद्वयकारि कौतुकं
रजः करोति स्म धुतं तुरङ्गमैः॥

स्वःसिन्धौ विबुधेन्द्रविभ्रमवने खे हाटकाद्रौ दिशां
कण्ठे वीर नृसिंह देव भवतः कीर्त्तेः परिस्फूर्त्तयः।
डिण्डीरप्रकरन्ति फुल्लकलिकाभारन्ति तारावधू-
नाथांशुप्रसरन्ति निर्जरसरित्पूरन्ति हारन्ति च॥

एकेन क्रियमाणं यत्रान्यः स्पर्धयैव तत् कुरुते।
सोऽपि समुच्चयभेदः कथितोऽन्यस्तत्करो द्वै[2]-
धम्॥ ५८॥

विकल्पप्रतिभटतया समुच्चयं लक्षयति। यदित्यादि। धर्मयौगपद्ये समुच्चयः। स च गुणसमुच्चयः क्रियासमुच्चयश्चेति द्विविध इत्यर्थः। अभूदित्यादि। अत्र स्वपरयशोऽपयशसोर्धवलिमनीलिमगुणयोर्यौगपद्यात् गुणसमुच्चयः। स्वरित्यादि। अत्र कीर्त्तिपरिस्फूर्त्तिषु डिण्डीरप्रकरायितत्वाद्यनेकक्रियायौगपद्यात् क्रियासमुच्चयः। गुणक्रियासामस्त्येन तृतीयमपि भेदं केचिदिच्छन्ति॥

समुच्चयः॥

तत्कराख्यं समुच्चयस्य भेदान्तरं लक्षयति। एकेनेत्यादि। यत्रैकेन सिद्धकारणभावेनैव क्रियमाणमन्येऽपि तत्स्पर्धयैव खलेकपोतिकया कुर्वन्ति सोऽपि तत्रैव

१ द्वेधा O., M. २ K. omits समुच्चयः.

एकेन कर्त्तुमुपक्रान्तं यत् कार्यं[1] तस्यैवाहमहमिकया भूयोभिः क्रियमाणत्वात् तत्कर इत्यन्वर्थेयं संज्ञा । यद्यपि समाधेरभिधास्यमानस्य विषयमयं[2]मास्कन्दति तथापि समुच्चय इत्यन्वर्थाभिधानबलादिहा[3]न्यस्य तुल्यकक्ष्यतयैवोपादानम् । अत एव यत्रेतरानपेक्षमेक एव कार्यकरणाय क्षमते इतरस्तु काकतालीयेन तदर्थं संघटते तत्र समाधिरभिधास्यते । यत्र तु खलेकपोतिकया परस्परं स्पर्धमाना इव साधयितुमेकमेव साध्यमवतरन्ति भूयांसस्तत्र तत्करः । भूयसां तु शोभनाशोभनत्वाभ्यां भवन्नेष द्विधा भवति ।

क्रमेण[4] यथा

मूर्त्तिः कन्दर्पदर्पज्वरभरदमनी कीर्त्तिरभिद्रचन्द्र-
ज्योत्स्नाहंकारभङ्गव्यसनकुतुकिनी भूपते श्रीनृसिंह ।

करणात् तत्करनामा करणान्तरसमुच्चयमात् समुच्चयभेदः स च द्विधेत्यर्थः । संज्ञां व्युत्पादयति । एकेनेति । नन्वस्य समाधिसाधर्म्यात् तदानन्तर्यमुचितमित्याशङ्क्य ततो बलीयसा समुच्चयतादात्म्येन समुच्चये निरूपणमित्याह । यद्यपीति । तर्हि समाधेरस्य कोभेदस्तत्राह । अत एवेति । समुच्चयात्मकत्वादेवेत्यर्थः । यत्र निरपेक्षप्रवृत्तकारणे कारणान्तरमपि काकतालीयतया सौकर्याय निबध्यते स समाधिः । यत्र तु[5] समर्थकारणप्रवृत्तौ तत्स्पर्धयैव खलेकपोतिकया भूयसामुपनिबन्धः स तत्कर इति महान् भेद इत्यर्थः । यथा दैवात् पतता तालफलेन काकसमागमो यथा च तेन तस्य वधस्तथा देवदत्तस्य दस्युभिः समागमस्तैश्च तस्य वधः स देवदत्तवधः काकतालीयः । प्रकृते च कार्यस्य यदृच्छासमागतकारणान्तरोत्पादः काकतालीयः । एष एव काकतालीयन्यायः । "समासाच्च तद्विषयात्" इति छप्रत्ययः । खले कपोता इव खलेकपोतिकाः । इवार्थे कन्प्रत्ययः । "हलदन्तात् सप्तम्याः संज्ञायाम्" इति सप्तम्या अलुक्[6] । पृषोदरादिपाठाद्वा । द्वैविध्यं विवृणोति । भूयसां त्विति । आद्यमुदाहरति । मूर्त्तिरित्यादि[7] ।

१ तस्यैव कार्यस्याह° C., M. २ D. drops अयम्. ३ °दिहास्य T. ४ T. drops क्रमेण. ५ K. drops तु. ६ °द्वालुक् K, ७ स्वित्यादि K.

लक्ष्मीर्जागर्त्ति लक्ष्मीपतिमदद्मनी तासु गर्वाय पुंसा-
मेकापि स्यात्त्वेताः किमिदमुपशमारम्भमुज्जृम्भयन्ते ॥

अत्रोक्तरूपा मूर्तिरेव गर्वहेतुस्तत्रापि कीर्त्तिस्ततोऽपि लक्ष्मी-रिति बहूनामहंकारकारणत्वं स्पर्धया निबद्धम् । अपि च लाव-ण्यादिभिः शोभनैर्मूर्त्यादीनां योगः । किं च गर्वकारणसद्भावेऽपि गर्वो न जात इति विशेषोक्तिरप्यस्तीत्यनया सहास्य संकरः ।

कार्पण्यैकनिकेतनं नृपतयो दौर्जन्यभाजो बुधाः
सन्तः क्षीणधनाः कृपानभिमुखो लोकः कठोरः कलिः ।
शक्यन्ते विपदः किमत्र कविभिः सोढुं भवेयुर्यदि
स्वैरं वीर नृसिंह देव भवता नैताः समुन्मीलिताः ॥

अत्राशोभनैः कार्पण्यादिभिर्नृपतिप्रभृतीनां योगः ॥

## हेत्वन्तरसंबन्धात् स्फूर्जति कार्यस्य यत्र सौकर्यम् ।
## स समुच्चयसादृश्यात् समाधिनामात्र निर्दिष्टः ॥५१॥

यत्र खलेकपोतिकान्यायेनैकमेव कार्यं कर्तुमनेकेषामवतारस्तत्र तत्करः कथितः । यत्र काकतालीयेनापतनमपरस्य तत्रायमलं-

---

अत्र लक्षणार्थं योजयति । अत्रेति । शोभनानां ध्वनन्ति । अपि चेति । अभ्युच्चयमाह । किं चेति । द्वितीयमुदाहरति । कार्पण्येत्यादि । अत्रापि नृपतिकार्पण्यमेकमेव विपदां हेतुस्तथापि भूयसां स्पर्धया हेतुत्वेन निबन्धात् तत्करः सन् वाक्यार्थहेतुकेन काव्यलिङ्गेन संकीर्यते । अशोभनानामुद्घाटयति । अत्राशोभनैरिति ॥

तत्करः ॥

तत्करसाधर्म्यात् समाधिं लक्षयति । हेत्वन्तरेत्यादि । यत्र केनचित् का-रणेनारब्धं कार्यं काकतालीयन्यायेन सौकर्यात् कारणान्तरेण निष्पादितं निब-

---

१ °मथिनी D. २ 'स्तत्रापि लक्ष्मीरिति बहूना' D., C., M. ३ सह संकरः T. ४ समाधिर्नामात्र C. M. ५ स्पर्धाहेन° K.

कारः। अत एव केनचित् कर्त्तुमुपक्रान्तस्य कारणान्तरव्यतिकरतः सौकर्यं सम्यगाधीयते इति यथार्थाभिधानः समाधिनामायमलंकारः समुच्चयसादृश्यात् तदनन्तरं निर्दिष्टः। यथा

लावण्यमेव सहजं तव मानिनीनां
चेतः प्रसादयति वीर नृसिंह देव।
तन्वन्ति पञ्चमचमत्कृतिकोमलानि
साहायकं किमपि कोकिलकूजितानि॥

निर्णीयालंकारान् कतिचिदिमांस्तर्कवाक्यनयमूलान्।
लोकन्यायाश्रयिणःकेचिदिदानीं निरूप्यन्ते॥६०॥

बलिनं जेतुमनीशः कोऽपि तदीयं कृशं तिरस्कुरुते।
अन्यं कमपि जघन्यो यत्राहुः प्रत्यनीकमिदम्॥६१॥

---

ध्यते स समाधिरित्यर्थः। तदेतत्लक्षणं दर्शयन् व्याचष्टे। यत्रेत्यादि। समाधि संज्ञां व्युत्पादयति। अत एवेति। श्लोके समुच्चयसादृश्यादिति संगतिकथनपरं न लक्षणान्तःपातीति व्याचष्टे। समुच्चयेति। समुच्चयभावानन्तरोक्तलक्षणाश्रयः। लावण्यमित्यादि। सहायस्य कर्म साहायकम्। "योपधाद्गुरूपोत्तमाद्वुञ्" । अत्र लावण्येन कारणेनारब्धस्य मानिनीमनःप्रसादनकार्यस्य काकतालीयैः कोकिलकूजितैः सौकर्येण निष्पादनं समाधिरित्यनुसंधेयम्॥

समाधिः[1]॥

उत्तरालंकारकाण्डस्य संगतिमाह। निर्णीयेत्यादि। लोकन्यायाश्रितेषु प्रथमं प्रत्यनीकालंकारं लक्षयति। बलिनमित्यादि। प्रबलप्रतिपक्षप्रतीकाराक्षमस्य

---

१ K. omits समाधिः.

अनीकं सैन्यं तस्य प्रतिनिधिः प्रत्यनीकम् । तत्सादृश्यादलंकारोऽपि प्रत्यनीकमिति व्यपदेशमलभत । यथानीकमभिभवितुमनीश्वरेण केनापि तत्प्रतिनिधिभूतमन्यद् व्यामोहादभिभूयते तथात्र बलवति परिपन्थिनि तदीयमल्पबलं कमपि कोऽपि परिपन्थयतीत्यर्थः । अत्र च प्रत्यर्थिप्रकर्षः प्रयोजनम् ।

यथा

सुधाकरो वीर नृसिंह देव
यशोविलासैर्ग्लपितानुभावः ।
तवाननस्य प्रियबान्धवाना-
मपाकरोति श्रियमम्बुजानाम् ॥

अत्र नरसिंहदेवः सुधाकरेण दुर्जयस्ततस्तद्वदनबान्धवानां दुर्बलानां कमलानां श्रियो हरणात् सुधाकरप्रत्यर्थिनो नरसिंहदेवस्य प्रकर्षः प्रतीतः ॥

**उपमानस्याक्षेप स्यादुपमेयत्वकल्पनं यद्वा ।**
**यत्र प्रतीपमेतद्विबुधैरभिधीयते द्विविधम् ॥ ६२ ॥**

---

तदीयदुर्बलपीडनं प्रत्यनीकमित्यर्थः । प्रत्यनीकशब्दं व्युत्पादयति । अनीकमिति । प्रत्यनीकं प्रतिपक्षं तत्सादृश्यादलंकारेऽपि लक्षणया प्रत्यनीकव्यपदेश इत्यर्थः । लक्षणायाः प्रयोजनमाह । अत्र चेति ॥ सुधेत्यादि । स्पष्टम् ॥

प्रत्यनीकम् ॥

प्रातिकूल्यसाम्यात् प्रत्यनीकानन्तरं प्रतीपं निरूपयति । उपमानस्येत्यादि । यत्रोपमेयस्य सर्वोत्तरतयोपमानस्याक्षेपः क्रियते उपमेयत्वं वा कल्प्येत स प्रतीपालंकारो द्विविध इत्यर्थः । तत्राद्यभेदं विवृणोति । यत्रेति । आक्षेपशब्दार्थमाह ।

---

१ तत्र प्रत्यर्थि° C., M. २ °विलासैः क्षपिता° T. °बान्धवानां पराकरोति T. ४ नृसिंह° C. ५ श्रियोऽपहरणात् C., M. ६ प्रतीतः प्रकर्षः T.; प्रकर्षः प्रतीयते C., M. ७ तत्र T. ८ K. drops प्रत्यनीकम्. ९ द्विविधेत्यर्थः K.

अत्रोपमेयमेव लोकोत्तरतयोपमानधौरेयमिति यदुपमानस्याक्षेपः कैमर्थक्यालोचनमाचर्यते तत्तावदेकं प्रतीपम्।

यथा

कान्तिः स्वभावसुभगैव तवाङ्गरागः
प्रत्यग्रकुङ्कुमरसः खलु मङ्गलाय।
आसीः कलिङ्गनृपते भुवनोत्सवाय
प्रीणातु कैरवकुलानि परं सुधांशुः॥

अत्र स्वभावसुभगया कान्त्यैवाङ्गरागकार्यस्य भूषणस्य सिद्धत्वात् कुङ्कुमानुलेपनेन किं प्रयोजनमिति प्रतीतिः। यथा वा

दानैस्त्वयि प्रीणितजीवलोके
मुधायमासीन्नरसिंह देव।
इत्यालवालस्य मिषेण वेधाः
कल्पद्रुमं कुण्डलनामनैषीत्॥

अत्र मुधायं किमनेन कल्पद्रुमेणेत्युपमानविषयकैमर्थक्यालोचनरूपस्याक्षेपस्य विद्यमानत्वात् प्रतीपम्। किं च तदुपजीवनेन प्रवृ-

---

कैमर्थक्येति। किं प्रयोजनमिति विचारः क्रियत इत्यर्थः। उदाहरति। कान्तिरित्यादि। अत्रोपमानस्याक्षेपं योजयति। अत्र स्वभावेति। एवं द्वितीयार्धेऽपि कलिङ्गेन्द्रस्यैव भुवनानन्दकरत्वादिन्दोः कैमर्थक्यमालोच्यम्। आद्य-स्यैवोदाहरणान्तरमाह। दानैरित्यादि। कुण्डलानां कुण्डलीकरणम्। यथाधि-कासरस्य वर्ज्यत्वज्ञानाय कुण्डलाकारा रेखा क्रियते तद्वदिति भावः। अत्रा-प्याक्षेपं दर्शयति। अत्र मुधेति। अभ्युच्चयत्वेन कंचिद्विशेषमाह। किं चेति।

---

१ कैमर्थ्यालोचन° D., C., M. २ प्रत्यङ्ग° T. ३ प्रीणाति C., M. ४ °सुभगयैव कान्त्या T. ५ निबद्धत्वात् C., M. ६ वृथाय° T. ७ मुधायितमनेन T. ८ °क्षेपरूपत्वस्य C., M. ९ आद्यस्योदा° D. १० कुण्डलनीकरणं D.

त्वां प्रतीयमानामुत्प्रेक्षामपेक्ष्य[1] प्रवृत्तापह्नुतिरित्येषामलंकाराणामि-ह्राङ्गाङ्गिभावेन संकरः[2] । तेन प्रतीपप्रतिभाभावितोत्प्रेक्षानुप्राणितापह्नुतिरत्रास्तीति मन्तव्यम्[3] ।

उपमानस्य न्यक्करणायोपमेयत्वकल्पनायां[4] द्वितीयं प्रतीपम् ।

यथा

त्वद्दोर्दण्डधुरन्धरः फणिपतिस्त्वन्नेत्रमित्रं श्रियः
क्रीडापङ्करुहं त्वदाननरुचिस्पर्धी सुधादीधितिः ।
त्वद्गाम्भीर्यनिधिः[5] पयोनिधिरसौ त्वत्कीर्तितुल्या वियत्-
सिन्धुर्वीर नृसिंह देव महिमा सर्वोपमानं तव ॥

अत्र फणिपतिप्रमुखाणामुपमानत्वेन प्रसिद्धानामुपमेयीकरणं दोर्दण्डाद्यपेक्षयापकर्षाभिव्यञ्जनाय । अस्य चालंकारस्योपमानं[6] प्रति प्रतिकूलत्वात् प्रतीपमिति व्यपदेशः ॥

**स्वाभाविकमागन्तुकमथवा वस्त्वन्तरं तिरोधत्ते ।**
**यस्मिन् किञ्चन वस्तु ज्ञेयं तन्मीलितं द्विविधम् ॥ ६३ ॥**

---

द्वितीयभेदं विवृणोति । उपमानस्येति । उदाहरति । त्वदित्यादि । लक्षणार्थं योजयति । अत्र फणिपतीत्यादि । अथापि संज्ञां व्युत्पादयति । अस्येति ॥

प्रतीपम्[7] ॥

मीलितालंकारं लक्षयति । स्वाभाविकमित्यादि । यत्र वस्तुना वस्त्वन्तरनिगूहनं क्रियते स मीलनालंकारः । स च सहजेनागन्तुकतिरोधानमागन्तुकेन

---

१ °मवेक्ष्य T. २ प्रवृत्तोऽपह्नव इत्ये° C., M. ३ प्रतीपभावितो° D. ४ °कल्पनाद्वितीयं T.; कल्पनया द्वि° C., M. ५ °गाम्भीर्यनिभः D. ६ अस्य चेति K. ७ K. omits प्रतीपम्.

यत्र साधारणगुणसंभेदाद् भेदानुपलम्भः स विषयः सामान्यालंकारस्य । यत्र तु सहजमागन्तुकं वा किमपि निरतिशयं वस्तु वस्त्वन्तरं तिरयति तत्र सार्थकाभिधानं मीलितं द्विविधम् । क्रमेण यथा

विश्राणनैः कालकलानभिज्ञै-
  र्विनोद्यमानस्य निसर्गसिद्धैः ।
नृसिंह भूपाल न [1]तेऽधिगन्तुं
  पात्रेषु शक्याः [2]परितोषलीलाः ॥

अत्र स्वाभाविकैरेव वितरणैः परितोषतरङ्गितानि वितरणानि तिरोधीयन्ते ।

आलिङ्ग्यमानस्य वधूजनस्य
  प्रतापभूपस्य नृसिंह [3]देव ।
त्वत्सैन्यघोष[4]श्रवणेन जाता
  सवेपथोर्नैव विभाविता भीः ॥

अत्रागन्तुकेन कान्तापरिरम्भसंभवेन वेपथुना [5]भयजनितो वेपथुस्तिरोहितः ॥

सहजतिरोधानं चेति द्विविध इत्यर्थः । सामान्यालंकारादस्य भेदमाह । यत्र साधारणेति । समानगुणयोरेकताप्रतिपत्तिः सामान्यं सहजागन्तुकयोर्वस्तुनोरेकेनेतरातिरोधानं मीलनमिति महाननयोर्भेद इत्यर्थः । सहजेनागन्तुकातिरोधानमुदाहरति । [6]विश्राणनैरिति । कालकलानभिज्ञैरविच्छिन्नैरित्यर्थः । इह सहजवितरणेनागन्तुकवितरणतिरोधानमित्याह । अत्रेति । वितरणान्यागन्तुकानीति शेषः । आगन्तुकेन सहजतिरोधानं चोदाहरति । आलिङ्ग्यमानस्येत्यादि । अत्रागन्तुना सहजतिरोधानमित्याह । अत्रेति । वेपथुः सहज इति शेषः ॥

मीलनम् [7] ॥

१ तेऽभिगन्तुं T. २ परितोषलाभाः D. ३ भूप C. M. ४ °श्रवणोपजाता C., M. ५ भयभवो वेपथु° C, M. ६ विश्राणनैरित्यादि K. ७ K. drops मीलनम्.

साधारणगुणयोगाद्यत्र प्रकृतस्य वस्तु संवलितम् ।
न विभावयितुं शक्यं तत् सामान्यं समाख्यातम् ॥ ६४ ॥

नेदमपह्नुतिः । किंचिदपह्नुत्यै कस्याप्यनारोप्यमाणत्वात् । प्रकृतस्याप्रकृतेन समानत्वसंबन्धादौपचारिकोऽस्य सामान्यमिति व्यपदेशः

धराधिप श्रीनरसिंह देव
यशोविलासे तव जृम्भमाणे ।
विधुन्तुदो वेत्ति न शीतभानुं
नागाधिनाथं च न वैनतेयः

अधिकगुणाङ्गीकरणं स्वगुणत्यागेन तद्गुणः कथितः ।

---

किञ्चिन्मीलनसाम्यात् सामान्यमाह । साधारणेत्यादि । यत्र गुणसाम्यादप्रस्तुतस्य प्रस्तुततादात्म्यं निबध्यते स सामान्यालंकार इत्यर्थः । अस्यापह्नुतेर्भेदमाह । नेदमिति । सामान्यसंज्ञाप्रवृत्तिनिमित्तमाह । प्रकृतस्येति । उदाहरति । धराधिपेत्यादि । अत्राप्रस्तुतयोश्चन्द्रशेषयोः प्रस्तुतेन यशसा धावल्यगुणसाम्यादेकताप्रतिपत्तिः ॥

सामान्यम् ॥

गुणसाम्यसाम्यात् सामान्यानन्तरं तद्गुणालंकारमाह । अधिकेत्यादि । स्वगुणत्यागेन संनिहितोत्कृष्टान्यगुणस्वीकारस्तद्गुण इत्यर्थः । तद्गुणशब्दं निब्रूते ।

---

१ किंचिदप्यपह्नुत्य T., C. २ °त्यान्यस्य कस्या° C., M. ३ °प्रस्तुतेन C., M.
४ नागाधिराजं T. ५ K omits सामान्यम्.

सान्निध्यमध्यासीनस्य निरतिशयगुणस्य तस्याप्रकृतस्य गुणोऽस्त्यस्मिन्निति तद्गुणः। नायं मीलितम्। इह वस्त्वन्तरगतास्तोकलोकोत्तरगुणान्तरव्यतिकरपरिणतस्वरूपस्य प्रस्तुतस्य वस्तुनः प्रतिभासमानत्वात्[1]। मीलिते च प्रस्तुतस्य वस्तुनो वस्त्वन्तरातिरोहितत्वेन प्रतीयमानत्वादित्यनयोः स्फुटमेव भिन्नविषयत्वम्।

यथा

वीर त्वद्रिपुरमणी परिधातुं पल्लवानि संस्पृश्य।
न हरति वनभुवि निजकररुहरुचिखचितानि[2] पाण्डुपत्रधिया॥

अत्रारुणानां पल्लवानां धवलिमस्वीकारः[3]।

यथा वा

नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभि-[4]
धीवल्यं नीयमाने त्रिजगति परितः श्रीनृसिंह क्षितीन्द्र।
नेदृग्यद्येष नाभीकमलपरिमलः प्रौढिमासादयिष्य-
द्देवानां नाभविष्यत् कथमपि कमलाकामुकस्यावबोधः॥

अत्र भगवता कृष्णेन यशःसंबन्धात् धवलिमा स्वीकृत इति

---

सांनिध्यमिति। मीलनादस्य भेदमाह। नायमिति। इह प्रस्तुतस्याप्रस्तुतगुणावच्छिन्नस्वरूपत्वं[5] मीलने त्वप्रस्तुतसंछन्नस्वरूपत्वमित्यनयोर्महान्[6][7] भेद इत्यर्थः। उदाहरति। वीरेत्यादि। पाण्डुपत्रधिया जीर्णपर्णभ्रान्त्येत्यर्थः। अस्यैवोदाहरणान्तरमाह। नृत्यदित्यादि। ईदृगेवं धवल एष कमलाकरजः। नाभीक-

---

१ प्रतिभासमानत्वम् C., M. २ °संचितानि D. ३ T. notices पाण्डुत्व° for धवलिम°
४ °यशोभिः सावर्ण्य D. ५ °रूपत्वं K. ६ °रूपत्व K. ७ °नयोरस्ति महान् K.

तद्गुणत्वम् । किं चात्रासंबन्धे संबन्ध इत्येवंरूपातिशयोक्तिस्तद्गुणानुप्राणितेति संकरः ॥

**सति हेतौ तद्रूपाननुहारोऽतद्गुणः कथितः ॥६५॥**

अत्र सातिशयगुणं प्राकरणिकं वस्तु सान्निध्यलक्षणे कारणे सत्यपि यदि नाप्राकरणिकगुणस्यानुहरते तदा तस्याप्राकरणिकस्य गुणो नास्त्यस्मिन्नित्यतद्गुणः । तद्गुणवैधर्म्येणात्र प्राप्तनिरूपणावसरः ।

यथा

गण्डाभोगे विहरति मदैः पिच्छिले दिग्गजानां
वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि ।
यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते
कीर्तिर्दिक्षु स्फुरति तदपि क्ष्मापते श्रीनृसिंह ॥

इह मदाञ्जनसंपर्केऽपि यशःश्रियो मलिनिमा न जात इत्यतद्गुणः॥

---

मलपरिमलाभिज्ञानात् कृष्णप्रत्यभिज्ञा देवानां न तु कार्ष्ण्यादिति भावः । अभ्युच्चयमाह । किं चेति ।

[3]तद्गुणः ॥

तद्गुणवैपरीत्येनातद्गुणमाह । सतीत्यादि । उत्कृष्टगुणसंनिधानेऽपि तद्रूपासंस्पर्शित्वमतद्गुण इत्यर्थः । तदेतद्विवृण्वन्नतद्गुणशब्दं निर्ब्रूते । यत्रेत्यादि । संगतिमाह । तद्गुणेति । गण्डेत्यादि । हिमकरकराद्वैतस्य सौवस्तिकी स्वस्तिवादिनी ज्योत्स्नासदृशीत्यर्थः । स्वस्तीत्याह सौवस्तिकी । सुस्नातादित्वात् ठक् । द्वारादित्वादैजागमः ॥

[5]अतद्गुणः ॥

---

१ सातिशयगुणितं O., M. २ T., O., M. drop कारणे. ३ K. omits तद्गुणः. ४ तद्गुणेत्यादि K. ५ K. drops अतद्गुणः.

**यत्र प्रश्नपुरःसरमेवासंभाव्यमुत्तरं किमपि ।**
**असकृद्भवति निबद्धं तदुत्तरं तावदत्रैकम् ॥ ६६ ॥**

अत्र प्रश्नपुरःसरस्य बाढं गूढत्वादसंभावनीयस्यानेकधैवोपनि-बध्यमानत्वं चमत्कारकारणम् । किं च व्यवच्छेद्यव्यवच्छेदक-तामन्तरेणैव प्रवृत्तमिदमिति न गोचरः परिसंख्यायाः ।

'का विसमा देव्वगई किं दुल्लहं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥'

**यत्र त्वनुपनिबद्धः प्रश्नः स्यादुत्तरोन्नेयः ।**
**कमपि तदीयं भेदं द्वितीयमाचक्षते सुधियः ॥ ६७ ॥**

---

अथोत्तरालंकारं लक्षयति । यत्र प्रश्नेत्यादि । यत्र प्रश्नपूर्वकमसंभाव्यमुत्तरम-सकृन्निबध्यते तदेतदुत्तरमित्यर्थः । सकृन्निबन्धे चमत्काराभावादसकृद्ग्रहणमित्याहं । अत्रेति । परिसंख्यातो भेदमाह । किं चेति । परिसंख्यायामितरनिषेधपरत्वं यथा पञ्च पञ्चनखा भक्ष्या इत्यत्र गोधादिपञ्चकातिरिक्तपञ्चनखानां मार्जारादीनां भक्ष-णनिषेधः । इह तु स्वार्थविधिपरत्वमेवं नेतरनिषेधपरत्वमिति भावः । चकारादुपा-ध्यायनिर्देशादनुमानतोऽपि भेद इति सूचितम् । का विषमेति ।

का विषमा दैवगतिः किं लभ्यं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः ॥

द्वितीयमुत्तरं लक्षयति । यत्र त्वित्यादि । यत्रोत्तरोन्नेयः प्रश्नस्तदपरमुत्तरमित्यर्थः ॥

उत्तरम्[5] ॥

---

१ °नीयस्यैवानेक° T.; °नीयस्यैवानेकधोपनिबध्य° C., M. २ C., and M. drop इदम्. ३ D. omits अ. ४ °मेवं चेतर° K. ५ K. omits उत्तरम्.

यथा

तावत् कुतश्चन्द्रमयूखभूषाः
सौधाङ्गणे प्रेयसि नः प्रदोषाः ।
तस्योत्कलक्षोणिपतेः प्रतापो
जागर्त्ति यावत् ककुभां मुखेषु ॥

इह तुहिनकरकिरणभूषान् सौधाङ्गणे प्रदोषान् कदा निर्वेक्ष्याम इति प्रियायाः प्रश्नः कुतोऽस्माकमुक्तविशेषणाः प्रदोषा इति प्रतीप[1]महीपतेरुत्तरादुन्नीयते ॥

**यत्र प्रश्नःपुरःसरमुत्तरमुभयोर्मिथः[2] समुल्लसति ।**
**प्रश्नोत्तरिकासंज्ञं तमलंकारं विदुर्विबुधाः ॥ ६८ ॥**

यथा

पीतः केनासि[3] रत्नाकर कथय बलान्मूर्ध्नि कालिन्दि कृष्टा
केन त्वं मां च[4] कोपीः कुतुकमभिदधे वर्ण एवं वदामि ।
धावन्त्येते नृसिंहक्षितिपतिपृतनादग्धविद्वेषिवेश्म[5]-
ज्वाला[6]हेवाकहेलाहृत[7]कनकगिरिस्यन्द[8]वारां प्रवाहाः ॥

---

प्रश्नोत्तरप्रसङ्गात् प्रश्नोत्तरिकालंकारं लक्षयति । यत्रेत्यादि । यत्र द्वयोर्मिथः प्रश्नोत्तरे निबध्येते सा प्रश्नोत्तरिकेत्यर्थः । पीत इत्यादि । कालिन्दीसागरयोः प्रश्नोत्तरिकेयम् । कालिन्दी सागरं पृच्छति पीत इत्यादि । पीतः पीतवर्णः । हेवाकः स्वाच्छन्द्यमिति संजीवनकारः ॥

प्रश्नोत्तरिका ॥

---

१ °भूपते° T. २ T. drops मिथः. ३ केनालि C., M. ४ मे च कोपीः M.; वाचको बः T., ५ देश° C., M. ६ °ज्वाला संदोह° C., M. ७ °गत° T. ८ °स्यन्दि° C., M.

अत्र कनकगिरितरङ्गिणीभिः सिन्धोरसंबन्धेऽपि संबन्धः कविप्रौढोक्त्या सिद्धत्वेनोक्तः । इदं तु वाकोवाक्यमिति मतान्तरे प्रसिद्धम् ॥

अथ वल्गद्गूढार्थप्रतीत्यलंकारलक्षणं भावि ।
गदितमिदं संलक्षित[1]सूक्ष्मार्थस्य प्रकाशनं
सूक्ष्मम् ॥ ६९ ॥

नवेषु कान्तेषु कृताभिलाषाः
स्वर्गाङ्गनाः प्रेक्ष्य मरीचिमाली ।
नृसिंह भूपाल तवाहवेषु
कम्पाकुलं दर्शयति स्वबिम्बम् ॥

इह भाविभेदतया[2] भयानुभावकम्पाकुलमात्ममण्डलं दर्शयता दिवाकरेण नवनवप्रियतम[3]लाभाभिलाषिणीः स्वर्गाङ्गनाः प्रति नरसिंहनरपतिहनिष्यमाणसमरोद्भटप्रतिभटागमनं प्रकाशितम् ॥

यत्रोद्भिन्नं किंचिद्वस्तु कुतश्चिन्निगूह्यते भूयः ।
वस्त्वन्तरनिक्षेपाद् व्याजोक्तिं तामुशन्त्येताम् ॥ ७० ॥

---

अथ सङ्गतिपूर्वकं सूक्ष्मं लक्षयति । अथेत्यादि । यत्र स्थूलबुद्धिभिरसंलक्ष्यस्य स्वयं विदग्धतया कयाचिदिङ्गितेनाकारेण वा संलक्षितस्य सूक्ष्मार्थस्य विदग्धं प्रति प्रकाशनं निबध्यते स सूक्ष्मालंकार इत्यर्थः । उदाहरति । नवेष्वित्यादि । अत्र स्वर्गाङ्गनाभिलाषः सूक्ष्मोऽपि तच्चेष्टासूचितो मरीचिमालिना स्वमण्डलकम्पनेन ताः प्रति प्रकाशित इति व्याचष्टे । इहेत्यादि ॥

सूक्ष्मः[4] ॥

सूक्ष्मवैपरीत्येन व्याजोक्तिं लक्षयति । यत्रेत्यादि । निगूहितवस्तुकेवलं सूक्ष्म-

---

१ संरक्षित° T., D. २ °भेदभयानुभाव° D.; °भेदतयानुभाव° T. ३ °प्रियतमाभिलाष° T.
४ K. drops सूक्ष्मः.

अत्र निगूढं वस्तु कुतश्चित् कारणादुद्भिन्नं प्रकटतां प्र स्त्वन्तरनिवेशनेन निगूह्यते गोप्यते । अत एव वस्त्वन्तर पस्य व्याजस्योक्तिर्वचनमिह वर्त्तत इत्यस्याः सार्थकमभि यत्र सादृश्याय प्रकृतमपह्नूयते तत्रापह्नुतिर्जागर्त्ति । यत्र वाय सादृश्यमुपनिबध्यते तत्रेयम् ।

आकर्ण्योत्कलभूपते जलमुचां निर्घोषमाकस्मिकं
त्वत्सेनापटहभ्रमेण सहसा संजातकम्पाकुलैः ।
अन्तर्भीतिपराहतोऽपि दयिताकण्ठग्रहक्रीडया
सान्द्रानन्दमयीं दशामभिनयत्यङ्गैः शकाधीश्वरः ।

अत्र नरसिंहनरपतिवरूथिनीपटहभ्रमाविर्भूतेन कम्पेन शिता भीतिः प्रियतमोपगूहनेनापलपिता ॥

**वाक्यं यदन्यथोक्तं केनाप्यन्येन योज्यतेऽपरथा ।**
**तत् काकुश्लेषाभ्यां यदि वक्रोक्तिस्तदा स्फुरति ॥ ७१ ॥**

---

इत्युक्तम् । इहोद्भिन्नवस्तुनिगूहनं व्याजोक्तिरिति व्याचष्टे । अत्रेति । नामधेयं निब्रूते । अत एवेति । अपह्नुतिप्रभेद एव व्याजोक्तिर्न पृथगलंकार इत्युद्भटः । तन्निरासार्थं भेदमाह यत्र सादृश्यायेति । यत्रापह्नवमुखेन सादृश्यं प्रतिपाद्यते तत्रापह्नवः । यत्र सादृश्योपजीवनेनापह्नवः क्रियते तत्र व्याजोक्तिरित्यनयोरस्तु-द्भटस्याप्युद्भटैरप्यपह्नवगन्धमात्रात्पृथुरपह्नवो भेदोऽन्यथातिप्रसंगादित्यर्थः । उदाहरति । आकर्ण्येत्यादि । अत्र रतिभीत्योः कम्पजनकत्वसादृश्योपजीवनेनानन्दप्रकटन-व्याजाद्भयापह्नवोक्तेरियं व्याजोक्तिरित्याह । अत्रेति ॥

व्याजोक्तिः ॥

उक्तस्यान्यथात्वसाम्याद् व्याजोक्त्यनन्तरं वक्रोक्तिं लक्षयति । वाक्यमि-त्यादि । यत्राभिप्रायान्तरेणोक्तवाक्यमन्येनान्यथा योज्यते सा वक्रोक्तिः । सा

---

१ T. drops गोप्यते. २ प्रस्तुत° C., M. ३ C. and M. have यथा preceding आकर्ण्यो° ४ जलमुचो D. ५ सकाशीश्वरः C., M. ६ व्याजोक्तिरिति न पृथ° K. ७ इत्युद्भटमतनिरासार्थं K. ८ K. drops व्याजोक्तिः.

उक्तिव्यपदेशसामर्थ्यात् व्याजोक्त्यनन्तरं निरूपणमुचितमेतस्याः।

काकुप्रयोगेण यथा

सर्वार्थिनामर्थितपूरणार्थे[1]
परिस्फुरद्यागमहोत्सवेषु।
त्वयि स्थिते वीर नृसिंह देव
न लज्जते संप्रति पारिजातः॥

श्लेषप्रयोगेण यथा

किं मे रोषं करोषि प्रियतम किमहं तोयराशेस्तनूजा
न क्रोधस्ते विधातुं भवति समुचितः प्राप्यते[2] कुत्र नक्रः।
इत्थं वक्रोक्तिभङ्ग्या हिमगिरिसुतया लम्भितो मूकभावं
देवश्चन्द्रार्धचूडस्तव दिशतु मुदं भूपते श्रीनृसिंह[3]॥

अत्र मे इति पदं संप्रदानाभिप्रायेण प्रयुक्तं देवेन। अर्थश्लेषभङ्ग्या तु भगवतीसंबोधनपरतया समर्थितवती। क्रोधस्तव कर्त्तुं

च काक्वा श्लेषेण चेति द्विविधेत्यर्थः[4]। संगतिमाह। उक्तीति। काकुमुदाहरति। सर्वेत्यादि। अत्र न लज्जत इति निषेधोक्तौ काक्वा लज्जत एवेत्यन्यथा योज्यते। श्लिष्टोक्तिमुदाहरति। किमित्यादि। मे ममेत्यर्थः। संबन्धसामान्ये षष्ठी न तु "क्रुधद्रुह—" इत्यादिना चतुर्थी। यं प्रतिकोप इति विशेषणात्। देव्याह। प्रियतमेति। देव आह। न क्रोध इति। पुनर्देव्याह। प्राप्यत इति। इह श्लेषो द्विविधोऽभङ्गः सभङ्गश्च। तत्र म इत्यभङ्गश्लेषः न क्रोध इति सभङ्ग इत्यभिप्रेत्य व्याचष्टे। अत्रेत्यादि। संप्रदानाभिप्रायेणेति। षष्ठ्यर्थसंबन्धसामान्याक्षिप्तविशेषाभिप्रायेणोक्तमन्यथा पूर्वोक्तानुशासनविरोधात्। संबोधनपरतयेति लक्ष्मीसंबोधनपरतयेत्यर्थः॥

वक्रोक्तिः[5]॥

१ °पूरणार्थमित्यादि T. २ भाषते D.; प्रोच्यते T. ३ श्रीनृसिंह क्षितीन्द्र noticed by T.
४ द्वेधेत्यर्थः D. ५ K. drops वक्रोक्तिः.

न समुचित इत्याशयेन प्रयुक्तं देवेन। अधस्तव कर्त्तुं नक्रः समुचित इति देव्या शब्दश्लेषभङ्ग्यान्यार्थघटनया योजितम्॥[१]

**वस्तुस्वभाव उच्चैर्यः स्यात् सूक्ष्मो यथावदेतस्य।**
**यद्वा वर्णनमेषा कथिता कविभिः स्वभावोक्तिः॥७२॥**

अस्या अप्यत्रोक्तिक्रम[२] एव निर्देशकारणम्[३]। वस्तुस्वभाववर्णनमात्रस्यालंकारत्वाङ्गीकारेऽतिप्रसङ्गः स्यात्। वस्तुस्वभाववर्णनामात्ररहितस्य काव्यस्यैवाभावात्। अत एवोक्तमुच्चैरतिशयेन सूक्ष्मः कविमात्रेण द्रष्टुमशक्यो यो वस्तुस्वभावः क्रियावर्णसंस्थानात्मकस्[४]तस्या न्यूनानतिरिक्तत्वेन यद्वर्णनं सा स्वभावोक्तिः।

ऊर्ध्वं भुजाभ्यां परिरभ्य जानु-
द्वयं तदन्तश्चिबुकं निवेश्य।

उक्तिसाम्यात् स्वभावोक्तिं लक्षयति। वस्तुस्वभाव इत्यादि। जातिप्रयुक्तधर्मो वस्तुस्वभावस्तस्य सूक्ष्मस्य यथावद्वर्णनं यत् सा स्वभावोक्तिरित्यर्थः। संगतिमाह। अस्या अपीति। सूक्ष्मपदव्यावर्त्यमाह। वस्तुस्वभावेति।

'द्विहस्तं च द्विकर्णं च द्विनेत्रं चैकनासिकम्।
गुरुदैवं शिरः पायात् सशिरस्त्रवृषणोदरम्॥'

इत्यादीनामप्यलंकारत्वप्रसङ्ग इति भावः। फलितमाह अत एवेति। उच्चैःशब्दार्थमाह। अतिशयेनेति। सूक्ष्मपदार्थमाह। कविमात्रेणेति। वस्तुस्वभावशब्दार्थमाह। क्रियेत्यादि। क्रिया चेष्टा। वर्णः शुक्लादिः। संस्थानमवयवसंनिवेशः। उदाहरति। ऊर्ध्वमित्यादि॥

[५]स्वभावोक्तिः॥

१ After this O. and M. insert यथा वा नैषधे काव्ये। स्फुटति हारमणौ मदनोष्मणा हृदयमप्यनलंकृतमद्य ते (°मात्मना M.)। ननु हतास्मि तथा यदि हृद्यपि प्रियतमः सममाल्यपवाहितः॥ अत्र सख्यालंकृतं नेत्यभिप्रायेणोक्तं वाक्यं दमयन्त्या नलरहितं कृतमित्यभिप्रायेण योजितम्। २ °त्रोक्तिप्रस्ताव एव T. ३ कारणं निर्देशस्य T. ४ °संस्थात्मक° C.,M. ५ K. drops स्वभावोक्तिः.

नृसिंह झञ्झानिलवेपितः सन्
वने रिपुः सीदति तावकीनः ॥

**भूतस्य भाविनो वा प्रत्यक्षायमाणतार्थस्य ।**
**विलसति सुतरा[1]मेतन्निगद्यते भाविकं कविभिः॥७३॥**

भावः कवेराशयः श्रोतरि प्रतिबिम्बितत्वेनास्तीति भाविकम् । नेदं भ्रान्तिमान् । भूतभाविनां भूतभावितयैव प्रकाशनात् । नाप्यतिशयोक्तिः । अन्यस्यान्यत्वेनाध्यवसायवैधुर्यात् । न हि भूतभाविनावभूतभावित्वेनाध्यवसीयेते ।

यथा[2]

वामं बाहुं विधाय द्विगुणितमुरसि स्पष्टमाबद्धमुष्टिं
धृत्वा शङ्कुं[3] करेण स्फुरदधरपुटस्ताम्रनेत्राञ्चलश्रीः ।
क्षिप्त्वा क्षिप्त्वा घरट्टे परुषकटकटत्कारशौर्यंत्करोटीश्
छत्रून् पक्ष्मान्निषान्तः स्फुरसि भुजभृतां भूपते श्रीनृसिंह ॥

---

विदग्धजनवेद्यार्थत्वसाम्यात् स्वभावोक्त्यनन्तरं भाविकं लक्षयति । भूतस्येत्यादि । यत्र भूतस्य भाविनो वार्थस्य चारुत्वद्योतकवाग्रचनाकुल[4]संदर्भसमर्थितत्वाद्य प्रत्यक्षायमाणता प्रत्यक्षवदुपलम्भनं निबध्यते तद् भावो भावना भाविकानां चेतसि निवेशनमस्मिन्नस्तीति व्युत्पत्त्या भाविकमित्यर्थः । व्युत्पत्त्यन्तरमाह । भाव इति । क्रमाद् भ्रान्तिमदतिशयोक्त्योरतिव्याप्तिं परिहरति । नेदमित्यादि । उदाहरति । वाममित्यादि । करेणेति । दक्षिणेनेत्यर्थः । वामस्य बद्धमुष्टेर्वक्षसि निक्षिप्तत्वात् । घरट्टो गोधूमचूर्णनशिलायन्त्रभेदः । अत्रैकस्यैव नरसिंहस्यातिमानुषाद्भुतपौरुषविशेषभीषणतया यैर्दृष्टो यैश्च द्रक्ष्यते तेषामपि चेतसि भूतत्वेन भावित्वेन च

---

१ नितरा° T. २ D. drops यथा. ३ शल्यं T. ४ °नाकुले संदर्भे सम° D.

अत्र यैस्त्वं दृष्टो द्रष्टव्यश्च समरसीमनि तेषामेवंविध एव हृदये प्रतिभासस इति वर्त्तमानतयोपनिबन्धात् प्रकारद्वयेऽप्येतदेवोदाहरणम् ॥

## अभिमतमेतदुदात्तं[1] समृद्धिमद्वस्तुवर्णनं यत्र ।

कविप्रतिभोत्थापितासंभाव्यमानवैभवविभूषितवस्तुवर्णनात्मकमिदं[2] यथास्थितवस्तुवर्णनात्मकाभ्यां स्वभावोक्तिभाविकाभ्यां भिन्नम् ।

यथा

दासीभिः प्रतिसारितानि परितस्त्वन्मार्गणप्राङ्गण-
क्षोणिस्वस्तिकमौक्तिकानि वणिजामादाय वृन्दैर्मुदा ।
विक्रीतानि नृसिंह देव तरसा देशेषु देशेषु ते
मूर्त्तानीव यशांसि राजरमणीकण्ठे लभन्ते स्थितिम् ॥

---

भिन्ना भाव्यमानस्य प्रत्यक्षायमाणतया निबन्धनादिदमेवोभयविधभाविकोदाहरणमित्याह[3] । अत्रेत्यादि[4] ॥

भाविकम्[5] ॥

अद्भुतवस्तुवर्णनाप्रस्तावादुदात्तं लक्षयति । अभिमतमित्यादि । समृद्धिमद्वस्तुवर्णनमुदात्तमित्यर्थः । उदात्तस्य भाविकस्वभावोक्तिभ्यां भेदमाह । कवीति । तयोर्यथावद्वस्तुवर्णनमिह तु तद्वैपरीत्येनारोपितं वस्तुवर्णनमिति भेदसंगतीत्यर्थः । दासीभिरित्यादि । मार्गणं मार्गः । स्वस्तिको रङ्गवल्लीरचनाविशेषः । अत्र राजरमणीकण्ठधारणयोग्यानि मौक्तिकानि एतस्सञ्चारपथरङ्गवल्लीविनियोगैः[6] पुष्पोपहारवन्निर्माल्यभावं भजन्तीति समृद्धिमद्वस्तुवर्णनात्मकोऽयमुदात्त उन्नेयः ।

---

१ °मेवमुदात्तं T. २ °वैभवभूषित° T. ३ निबन्धनादेवोभय° K. ४ अत्रेति K. ५ K. omits भाविकम्. ६ °वल्ली° D. ७ मौक्तिकान्येव संचारपथि D.

**यत्र महापुरुषाणामङ्गतया चरितवर्णनं भवति ॥ ७४ ॥**

तदप्युदात्तं स्यादित्यर्थः ।

यथा

वेलाकाननमग्रतः कलयत श्लाघ्यं कलिङ्गेशितुः
प्रौढैर्यत्र चमूभटैः प्रतिभटाहंकारकूलङ्कषैः ।
वीरश्रीपुलकैः शिलीमुखशतैराचान्तरोदस्तटैः
कीर्त्तेरर्णवलङ्घनाय घटितः सान्द्रक्रमः सङ्क्रमः ॥

अत्र वेलावने वर्णनीये नरसिंहदेवचरितमङ्गत्वेन वर्णितम् ॥

---

अथोदात्तान्तरं लक्षयति । यत्रेत्यादि । लक्षणमध्याहारेण पूरयति । तदपीति । यत्र [2]प्रकृताङ्गतयोदात्तपुरुषचरितं निबध्यते सोऽप्युदात्तालंकार इत्यर्थः । एतेनोदात्तैश्वर्ययोगादुदात्तः प्रागुक्तः । [3]अयं तूदात्तपुरुषचरितयोगादुदात्त इति पूर्वस्मादन्य एवायमलंकारोऽर्थभेदात् । परं तु शब्दसाम्यादस्यैव निरूपणमित्यलंकारसर्वस्वकारोक्तं तदपीत्यनेन सूचितमित्यनुसंधेयम् । उदाहरति । वेलेत्यादि । कलयत पश्यत इत्यर्थः । कीदृक् काननमित्यपेक्षायामाह । [4]कलिङ्गेशितुरिति । इह लक्षणं योजयति । अत्रेति । ननु वीररस एवायं विजयतां किमु[5]दात्तेनेत्यत आह । अङ्गत्वेनेति । सत्यमाङ्गित्वे रस एव भवेत् । किं त्विह वीरस्याङ्गत्वादुदात्त एव विजयत इति भावः । ननु तथापि रसवदाद्यलंकाराणामयं वि[6]षयो न द्वितीयोदात्तस्य । तथा हि रसनिबन्धे रसवदलंकारो भावनिबन्धे प्रेयोऽलंकारस्तदुभयाभासनिबन्धे तूर्जस्वी भावप्रशमनिबन्धे तु समाहितालंकारो भावोदयभावसंधिभावशबलतास्तु स्वतन्त्रालंकारा इत्यलंकारसर्वस्वकारः । अत्रोच्यते । इह

---

१ कलयतः T., D., C., M., G.   २ प्रस्तुताङ्ग° K.   ३ यत्तूदात्त° K.   ४ कलिङ्गेति K.   ५ °मुदात्तेनेत्याह D.   ६ विषयः स्यान्न D.

अथ सर्वेषामेषामन्योन्याश्लेषपेशलावधुना[1] ।
कथयामोऽलंकारौ[2] सहृदयचेतश्चमत्कृतये ॥७५॥
एषां तिलतण्डुलवन्मिश्रत्वेनाभ्यधायि संसृष्टिः ।

नन्वमीषामनुप्रासोपमादीनां शब्दार्थालंकाराणां दैवगत्या यदि क्वचिदपि यौगपद्येनावस्थानं[3] भवेत् तथापि[4] पृथक्पर्यवसायितैव तेषाम् । किं तु कटककेयूरादीनामिव पृथक् कामनीयकहेतुत्वे सत्यपि संघटनोपपादितं किमपि रामणीयकमुन्मिषतीति[5] । तिलतण्डुलन्यायस्तु संयोगन्यायः । स्फुटप्रतिभासनत्वमलंकाराणामिति यावत् ।

---

भामहादीनां मते रसादीनां वाच्यतया वाक्यार्थीभूतानामङ्गित्वे रसवदादयोऽलंकारा अङ्गत्वे द्वितीय उदात्तः । येषां दर्शने रसादयो व्यङ्ग्यास्तत्र तेषामङ्गित्वे ध्वनित्वाङ्गत्व रसवदादिविषयत्वं द्वितीयोदात्तस्य तु विषयो नावशिष्यत इत्यलंकारसर्वस्वकारः । उदात्त एवात्र सविषयो रसवदादय एव निर्विषया इति त एव मा भूवन्निति काव्यप्रकाशकारः । तन्मतानुसारिदं च रसवदाद्यंनादरेणोदात्तमेवास्मिन् विषये वर्णयांचकारेत्यशेषमनवद्यम् ॥

उदात्तम्[6] ॥

तदेवं केवलालंकारकाण्डं समाप्य संप्रति तदाश्रितौ मिश्रालंकारौ संसृष्टिसंकरौ निर्णेतुं प्रतिजानीतेऽथेत्यादि । तत्र लघुत्वात् संसृष्टिलक्षणं तावदाह । एषामिति । यत्रैषामनुप्रासोपमादीनां तिलतण्डुलवन्मिश्रणं निबध्यते सा संसृष्टिरित्यर्थः । ननु संसृष्टिसंकरयोः कुतः पृथगलंकारत्वमनुप्रासोपमादीनां कटकमुकुटादीनामिव पृथक्शोभाकरत्वादित्याशङ्क्य तथापि तेषामिवैतेषामपि[7] मेलनादन्यैव शोभेति संसृष्टिसंकरयोरलंकारत्वमवसेयं कार्यभेदेऽपि कारणभेदानङ्गीकारेऽतिप्रसङ्गादिति परिहरति । नन्वित्यादिनोन्मिषतीत्यन्तेन । तिलतण्डुलन्यायं विवृणोति । तिलतण्डुलेति । संसृष्टिरपि सजातीयविषया विजाती-

---

1 °पेशलानधुना T. 2 °लंकारान् T. 3 योगो भवेत् C., M. 4 तदपि D. 5 °षतीति T. 6 K. drops उदात्तम्. 7 तेषामिवैषामपि K. 8 °रलंकारान्तरत्व° D.

तत्र सजातीयसंसृष्टिर्यथा

उत्तुङ्गा गिरिराजवत् सुवितताः क्ष्माचक्रवत् पावना
गङ्गावारिवदुज्ज्वला[1] स्फटिकवत्तापच्छिदश्चन्द्रवत् ।
गम्भीरा जलराशिवत् त्रिभुवनव्याप्तिक्षमाः शंभुवद्
राजन्ते नरसिंह देव भवतः प्रोद्दामकीर्तिक्रमाः ॥

अत्र सजातीयानामुपमादीनां संसृष्टिः ।

विजातीयसंसृष्टिर्यथा

मन्दारस्य मदच्युतिं दिनमणेरौद्धत्यनिर्मूलनं[2]
मेरोर्मानविमर्दनं रतिपतेरुत्सेकनिष्कासनम्[3] ।
अम्भोभर्त्तुरहंकृतिप्रशमनं शक्रस्य गर्वक्षतिं
सृष्ट्वा त्वां नरसिंह देव गुणिनं किं किं न धात्रा कृतम् ॥

अत्र विजातीययोः वृत्त्यनुप्रासविशेषालंकारयोः संसृष्टिः ॥

---

यविषया चेति द्विविधा । तत्राद्यामुदाहरति । उत्तुङ्गा इत्यादि । सर्वत्र "तेन तुल्यम्-" इत्यादिना तुल्यार्थे वतिप्रत्ययः । अत एवैताः सप्तापि तद्धितगा आर्थ्यः पूर्णोपमा एव संसृष्टा इति सजातीयसंसृष्टिरित्याह । अत्रेति । मन्दारस्येत्यादि । अत्र मन्दारमदच्यवनादिरूपणैः षड्भिरपि मन्दाराद्यतिशायितौदार्यप्रतापौन्नत्यसौन्दर्यगाम्भीर्यैश्वर्याणि व्यज्यन्ते । अत्रानियतसंख्याक्रमकारादिवर्णावृत्त्या वृत्त्यनुप्रासः शब्दालंकारः । किं न कृतमिति सर्वकरणाभिधानादशक्यवस्तुकरणात्मा विशेषालंकारप्रभेदोऽर्थालंकारः । तयोस्तिलतण्डुलवन्मिश्रणाद्विजातीयसंसृष्टिरिति व्याचष्टे । अत्रेति । रूपकस्याप्युपलक्षणमेतत् ॥

संसृष्टिः ॥

---

१ °दुज्ज्वलाः D. २ °निर्धूननं D. ३ °निष्काशनं D.

**कथितस्तु संकरोऽयं त्रिविधो यः क्षीरनीरवद्भवति ॥७६॥**

क्षीरनीरवदिति क्षीरनीरन्यायेन । समवायन्यायेनेति यावत् । अनौत्कट्येन वर्त्तनात् । त्रिविधोऽङ्गाङ्गिभावेन संशयेनैकवाचकानुप्रवेशेन च ।

क्रमेण यथा

एतावन्तमनेहसं सकुतुकं संवर्धिता यैर्वयं
क्वैते नः प्रभवो गता इति नभश्चूडास्पृशः शाखिनः ।
औत्सुक्यान्मकरन्दबाष्पभरितैः पुष्पेक्षणैस्त्वद्रिपु-
क्षोणीन्द्राजिरसीह देव नृपते पश्यन्ति सौधाद्बहिः ॥

अत्र दर्शनानुगुण्येन प्रसूनानामीक्षणत्वेन रूपणात् पादपानां दर्शनोचितपुरुषत्वेन रूपणं सिद्धं प्रतीयमानोत्प्रेक्षां[1] प्रति हेतुत्वमव[2]लम्बत इत्यनयोरङ्गाङ्गिभावेन संकरः ।

---

अथ संकरं लक्षयति । कथित इत्यादि । यत्रैषामलंकाराणां क्षीरनीरवन्मिश्रणं निबध्यते स संकरः । स च वक्ष्यमाणभङ्ग्या त्रिविध इत्यर्थः । क्षीरनीरवदित्येतद्विवृणोति । क्षीरनीरवदित्यादि । क्षीरनीरवद्भावे युक्तिमाह । अनौत्कट्येन वर्त्तनादिति । मिश्रणस्यानुत्कटभेदत्वेन वर्त्तनात् क्षीरनीरवद्भाव इत्यर्थः । त्रैविध्यं विवृणोति । त्रिविध इत्यादि । एतावन्तमित्यादि । अनेहसं कालम् । अत्यन्तसंयोगे द्वितीया । नभश्चूडास्पृशोऽभ्रकषा इत्यर्थः । बहिरिति । स्थितानीति शेषः । पश्यन्तीति । पश्यन्तीवेत्यर्थः । अत एव व्यञ्जकाप्रयोगात् प्रतीयमानोत्प्रेक्षा । अयास्याः पुष्पेक्षणैः शाखिन इत्येकदेशविवर्त्तिरूपकेण सहाङ्गाङ्गिभावं विविनक्ति । अत्रेत्यादि । रूपकसाधकमाह । दर्शनेति । रूपकस्योत्प्रेक्षाङ्गत्वे निमित्तमाह । हेतुत्वमिति । तद्धेतुत्वेन तच्छेषत्वात्तदङ्गमित्यर्थः । हेतुत्वे योग्यतामाह । सिद्धमिति । संदेहसंकर-

---

१ °नोत्प्रेक्षणं T. २ हेतुतामव° C., M.

एष चिन्तामणिः किं नु किन्वयं कल्पपादपः ।
किं न्वसौ कामधेनुर्वा न चेत्त्यागः किमीदृशः ॥

अत्र एष इति यदि विशेष्यं तदानीमनेन नरसिंहदेवं निर्दिश्य चिन्तामणित्वेन रूपणाद्रूपकमिदम् । अथ विशेषणं तदा पुरोवर्तिचिन्तामणिरित्यनेन सह नरसिंहदेवस्यैकतयाध्यवसितत्वादतिशयोक्तिरित्यनयोरन्यतरनिश्चयाभावात् संदेहेन संकरः ।

प्रतिभटकान्ताकुचतटमकरीलुण्टाकचापटङ्कारः ।
वीर नृसिंह इवाजौ वीरनृसिंहश्चिरं जयति ॥

अत्र लाटानुप्रासेन सहानन्वयस्यैकवाचकानुप्रवेशेन संकरः ॥*

इति श्रीमतो महामाहेश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनाम्न्यलंकारशास्त्रेऽर्थालंकारनिरूपणं नाम अष्टम उन्मेषः ॥

---

मुदाहरति । एष इति । इह संदेहमुद्घाटयति । अत्रेत्यादि । किं चात्र नुशब्देन चिन्तामणित्वादिसंदेहात् संदेहालंकारः प्रधानं तस्योक्तसंकरोत्थापितत्वात्तेन सहास्याङ्गाङ्गिभावेन संकर इति विशेषश्च । तृतीयं भेदमुदाहरति । प्रतिभटेत्यादि । इह वीरनृसिंह इत्येकस्मिन् वाचकेऽनन्वयलाटानुप्रासयोरनुप्रवेशादेकवाचकानुप्रवेशलक्षणसंकरोऽयमित्याह । अत्रेति ॥

संकरः ॥

जगति विविधविद्यासिन्धुमुष्टिन्धयानां
व(प)रभणितिपरीक्षा युज्यते सज्जनानाम् ।

---

१ यद्विशेष्यं T. २ तदायं पुरो° D. ३ पुरोवर्त्ती T. ४ लुण्ठाक° D. ५ D. has श्रीमतो विद्याधरस्य° ६ महेश्वरस्य C., M., G. ७ वेकावलिनामन्यल°D. ८ एष इत्यादि K.

* T., C. and M. have the following verses after the close of the work. G. has only the first of them:—

तदिह मम निबन्धे दूषणं भूषणं वा
भवति यदि विदग्धैस्तद्ध्रुवश्यं विमृश्यम् ॥
पारीणाः परसागरस्य कतिचित् तन्त्रे स्वतन्त्राः परे
केचित् कर्कशतास(तर्क)वक्रभणितिप्रौढिप्रियंभावुकाः ।

---

एकामेकावलीमेव कण्ठे धत्त कवीश्वराः ।
भ्राः किमन्यैरलंकारैरसारैर्भारदायिभिः ॥

उपमा सोपमेयोपमा स्यात्तद्वदनन्वयः ।
स्मरणं रूपकं चापि परिणामस्तथा मतः ॥ १ ॥

संदेहो भ्रान्तिमांस्तद्वदुल्लेखोऽपह्नुतिस्तथा ।
उत्प्रेक्षातिशयोक्ती च तुल्ययोगितादीपके ॥ २ ॥

प्रतिवस्तूपमा चैव दृष्टान्तश्च निदर्शना ।
व्यतिरेकः सहोक्तिश्च विनोक्तिश्च तथा स्मृता ॥ ३ ॥

समासोक्तिः परिकरश्लेषौ परिकराङ्कुरः ।
अप्रस्तुतप्रशंसार्थान्तरन्यासस्तथा मतः ॥ ४ ॥

पर्यायोक्तं तथा चैव व्याजस्तुतिरपि स्मृता ॥
आक्षेपश्च मतोऽनिष्टविध्याभासो विरोधकः ॥ ५ ॥

विभावना विशेषोक्त्यतिशयोक्ती तथा स्मृते ।
असङ्गतिश्च विषमं समं चैव विचित्रकम् ॥ ६ ॥

अधिकं तद्वदन्योन्यं विशेषोऽपि तथा मतः ।
व्याघातस्तावदपरस्तथा कारणमालिका ॥ ७ ॥

एकावली तथा चैव मालादीपकमेव च ।
सारश्च काव्यलिङ्गं चाप्यनुमानं तथैव च ॥ ८ ॥

यथासंख्यं च पर्यायः परिवृत्तिस्तथा स्मृता ।
परिसंख्या मता तद्वदर्थापत्तिर्विकल्पकः ॥ ९ ॥

अन्ये सत्कवितामृताब्धिलहरीमुद्रांशमुष्टिंधया
नैते केऽपि वयं तु किं तु त इमे सर्वे बहूकुर्वते ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायामेकावलीव्याख्यायां तरलाख्यायामर्थालंकारनिरूपणाख्योऽष्टम उन्मेषः ॥

---

समुच्चयस्तत्करश्च समाधिः प्रत्यनीककः ।
प्रतीपं मीलितं चैव सामान्यं च तथा स्मृतम् ॥ १० ॥

तद्गुणातद्गुणावुत्तरं प्रश्नोत्तरिका तथा ।
सूक्ष्मं व्याजोक्तिवक्रोक्ती स्वभावोक्तिस्तथा मता ॥ ११ ॥

भाविकं तद्वदपरमुदात्तं च तथा स्मृतम् ।
संसृष्टिः संकरश्चेति प्रोक्तालंकारसन्ततिः ॥ १२ ॥

इत्यलंकारसूचिकानि पद्यानि ॥

समाप्तोऽयं ग्रन्थः ॥

# NOTES.

## UNMESHA I.

### Pages 3-4.

संनिपत्योपकारकत्वेनेदमभिमतमारादुपकारकत्वेन वा ।—

संनिपत्योपकारक and आरादुपकारक are technical terms of the Mîmaṁsâ philosophy and mean 'assisting the main action directly or indirectly.' A '*Vidhi*' or injunction enjoins a new rite which has some purpose in view. It is defined as 'विधिः प्रयोजनवदर्थविधानेनार्थवान् । स चाप्राप्तमर्थं विधत्ते । यथा अग्निहोत्रं जुहुयात् स्वर्गकाम इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते अग्निहोत्रहोमेन स्वर्गं भावयेदिति । यत्र तु कर्म प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रविधानम् । यथा दध्ना जुहुयादित्यत्र होमस्य अग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं दध्ना होमं भावयेदिति । यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते । तदुक्तम् । न चेदन्येन शिष्टा इति । शिष्टा उपदिष्टा इत्यर्थः । यथा सोमेन यजेतेत्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टयागविधानं सोमवता यागेनेष्टं भावयेदिति ।. '*Vidhi* is divided into four kinds, उत्पत्तिविधि, विनियोगविधि, अधिकारविधि and प्रयोग. दध्ना जुहोति is an instance of the second kind. It teaches us the connexion between what is principal and what is subordinate, दधि being subservient to होम. It is thus defined:—'अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीति । स हि तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति ।. This *Vidhi* is authentically known from six assistants. 'एतस्य विधेः सहकारिभूतानि षद् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि ।'. The *Aṅgas* of a *Vidhi* are what is subservient to it. 'एतत्सहकृतेन ( *i. e.* श्रुत्यादिप्रमाणसहकृतेन ) विनियोगविधिना समिधादिभिरुपकृत्य

दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपेण यानि विनियुज्यन्ते तान्यङ्गानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि गुणकर्माणि प्रधानकर्माणि चेति । एतान्येव संनिपत्योपकारकाणि आरादुपकारकाणीति चोच्यन्ते । तत्र कर्माङ्गद्रव्योद्देशेन विधीयमानं कर्म संनिपत्योपकारकम् । यथावघातप्रोक्षणादि । तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च । दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशयागादि । तत्र द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । इदमेव सामवायिकं कर्मेत्युच्यते । '. संनिपत्योपकारक कर्म is then divided into two classes. 'तच्च संनिपत्योपकारकं द्विविधम् । उपयोक्ष्यमाणार्थमुपयुक्तार्थं चेति । तत्रावघातप्रोक्षणाद्युपयोक्ष्यमाणार्थम् । व्रीहीणां यागे उपयोक्ष्यमाणत्वात् । प्रतिपत्तिकर्मेडाभक्षणादि उपयुक्तपुरोडाशसंस्कारकम् । उपयुक्तस्याकीर्णकरणतानिवर्त्तकं कर्म प्रतिपत्तिकर्म ॥. ' आरादुपकारक कर्म is further on thus defined:—'द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् । यथा प्रयाजादि ॥ '.

For a fuller description of these terms and how संनिपत्योपकारक कर्म is more powerful than आरादुपकारक कर्म, the student is referred to आपोदेवीमीमांसान्यायप्रकाश. See also मीमांसादर्शन for the division of कर्म into गुण ( संनिपत्योपकारक ) and प्रधान ( आरादुपकारक ). 'यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ' (२-१-७) and 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ' (२-१-८ ).

'प्रत्यक्षं यजेत इत्येवमादिभिर्द्रव्यं न चिकीर्ष्यते तस्मात्तानि प्रधानकर्मणो वाचकानि द्रव्यस्य गुणभूतत्वात् । पिनष्टि इत्येवमादिभिर्द्रव्यं संस्क्रियते तस्मात्तानि गुणकर्मवचनानि ।' शाबरभाष्यम्.

## Page 4.

लौकिक is what depends upon the will of people as opposed to अलौकिक, which is not voluntary, but enjoined by S'âstras. नमस्कार, or salutation in the beginning of a work, is अलौकिक, while the composition of a work is लौकिक. The relation of

principal and subordinate ( अङ्गाङ्गिभाव or शेषशेषिभाव ) cannot subsist between what is लौकिक and what is अलौकिक. Salutation therefore cannot be indirectly subservient ( आरादुपकारकाङ्ग ) to the composition of a work. प्राकृत or प्रकरण means a passage in which a principal sentence depends for its meaning upon subordinate sentences. It is अङ्गवाक्यसापेक्षं प्रधानवाक्यम्. 'उभयाकाङ्क्षा प्रकरणम् । यथा प्रयाजादिषु समिधो यजतीत्यत्र हि इष्टविशेषस्यानिर्देशात् समिद्यागेन भावयेत् किमित्यस्त्युपकार्याकाङ्क्षा । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र दर्शपूर्णमासयागैः स्वर्गं कुर्यात् कथमित्यस्त्युपकारकाङ्क्षेत्युपकार्योपकारकाकाङ्क्षारूपोभयाकाङ्क्षालक्षणप्रकरणेन प्रयाजानां दर्शपूर्णमासाङ्गत्वं सिध्यति ॥'. आपो० मी० न्या०. This shews how प्रकरण is one of the six assistant proofs of a विधि. *Vide* note supra. *S'abarasvâmin* defines it as 'कर्त्तव्यस्य इतिकर्त्तव्यताकाङ्क्षस्य वचनं प्रकरणम् । प्रारम्भो हि स तस्या वचनक्रियायाः । स एष विध्यादिर्विध्यन्तापेक्षः ।' *Vide* भाष्य on 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' ३-३-१४.

Page 5.

नित्यमिदं नैमित्तिकं काम्यं वा—

Sacrificial rites are either नित्य, or नैमित्तिक, or काम्य. A नित्य rite is one which is regularly prescribed and the omission of which at the time prescribed causes sin. *Vide* याज्ञवल्क्य. "यदकरणे प्रत्यवायस्तन्नित्यम् । अहरहः संध्यामुपासीत इत्यादौ संध्योपासनादा नित्यत्वम् ।". न्यायकोश pp. 381-2. अकरणे is explained to mean 'विहितनत्कालीनाकरणं तेन अन्यदा संध्यावन्दनाकरणेऽपि न क्षतिः ।". A sacrificial rite which is to be performed when a certain event occurs is नैमित्तिक. Its performance is obligatory. "अनियतनिमित्तकं नैमित्तिकम् । यथा ग्रहणश्राद्धादि । तत्र राहूपरागस्यानियतस्यैव निमित्तत्वात् ॥". "पुत्रजन्माश्रित्य विहितस्य जातेष्ट्यादेः ग्रहणादिनिमित्तमाश्रित्य

विहितस्य स्नानादेश्च नैमित्तिकत्वम् ।". न्यायकोश p. 408. A काम्य rite is one which is performed with some object in view. "काम्यं तु फलकामनाधीनकर्त्तव्यताकं कर्म । यथा स्वर्गोद्देशेन कृतमश्वमेधयागादि ।" न्याय० p. 193.

A sacrifice is performed with the object of fulfilling a certain desire and when the performance of that sacrifice is supposed to bring about the fulfilment of that desire, the rite is called काम्य.

**Page 7.**

**नीतिनेत्राचार्याः—**

*Nîtinetra* is quoted in *Somadeva's Yaśastilakachampu Kâvya*. The following verses are given there:—

नीतिनेत्रस्य—

राज्यवृद्धिस्ततोऽमात्यायो न कुक्षिंभरिः स्वयम् ।
अस्ति स्थाल्येव चेद्भक्तं भोक्तुर्भुक्तिर्भवेत् कुतः ॥

यः स्याद्भुजगवद्रूपो बहिरीक्षितमोहितः ।
तं खादन्ति न किं नाम लज्जिका इव सेवकाः ॥

परैरबाधनं स्वस्य परेषां बाधनं स्वयम् ।
प्रजाप्रकृतिकोशानां श्रीश्च मन्त्रात् फलं विदुः ॥

कोशोद्वासी प्रजाध्वंसी तन्त्रक्षोभविधायकः ।
यो विद्वेष्टा विशिष्टानां शत्रुर्मन्त्रिमिषादसौ ॥

यश० च० p. 417.

**Page 8-9.**

अयं च ग्रन्थकारः———प्रत्यूहशमनेनैव सिद्धिः—

C. F. 'स्वयमविच्छिन्नपरमेश्वरनमस्कारसंपत्तिचरितार्थोऽपि व्याख्यातृश्रोतॄणामविघ्नेनाभीष्टव्याख्याश्रवणलक्षणफलसंपत्तये समुचिताशीःप्रकटनद्वारेण परमेश्वरसांमुख्यं करोति वृत्तिकारः———स्वेच्छेति । मधुरिपोर्नखा वो युष्मान्

व्याख्यातृश्रोतॄणामायुष्मताम्। तेषामेव संबोधनयोग्यत्वात्। संबोधनसारो हि युष्मदर्थः। प्राणं चाभीष्टलाभं प्रति साहायकाचरणम्। तच्च तत्प्रतिद्वन्द्विविघ्नापसारणादिना भवतीति। इयदत्र प्राणं विवक्षितम्।'. *Abhinavagupta's Lochana* on *Dhvanâyloka.* p. 1.

निर्विघ्नव्याख्यानश्रवणसंपत्समासादनसमुचिताशीःप्रकाशनद्वारा seems to be the reading of *Mallinâtha.*

Page 10.

तेन चाद्भुतरूपेण मध्यनिवेशितेन शृङ्गाररौद्रयोर्नैरन्तर्यकृतविरोधपरिहारः—The opposition of sentiments results in two ways. Some sentiments, such as those of heroism and fear (वीर and भयानक), are opposed to each other, when they are found in one and the same person or have the same generating cause (आलम्बनविभाव). The opposition between such sentiments can be removed by representing them as existing in different persons, as for instance by representing the sentiment of heroism in the hero and of fear in his opponent (प्रतिनायक), or as having different generating causes. Again some sentiments are opposed to each other, when one follows the other immediately. Such are the erotic and the quietistic sentiments (शृङ्गार and शान्त), when the latter is described as immediately following the former. The opposition in this case may be removed by placing between them a sentiment which is not opposed to them. Thus the opposition between the sentiments of love and tranquillity can be done away with by representing between them the marvellous sentiment (अद्भुतरस).

'आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः।
रसान्तरेणान्तरितः नैरन्तर्येण यो रसः॥'

*Vide Kâvyaprakâśa* VII. *Ullâsa.* pp. 50–6.

The first line of the benedictory stanza ( प्रालेयाचल° ) describes God *S'iva* as a lover (कामिन्) and the second line ( प्रेङ्खज्ज्वाल° ) describes him as an enemy of the God of Love (कामरिपु). The first line represents the sentiment of love and the second that of anger, and these two sentiments are opposed, when both are described as found in the same person at the same time or when one follows the other immediately. Here the opposition implied by *S'iva* being a कामिन् and a कामरिपु suggests the fact that his extraordinary greatness is inconceivable and this implied matter of wonder ( वस्तुध्वनि ), being thus placed between the sentiments of love and anger, removes their opposition. In नैरन्तर्यकृतविशेषपरिहारः, विशेष appears superfluous and विरोध has to be supplied. नैरन्तर्येण अव्यवधानेन कृतस्य ( विरोधस्य ) परिहारः.

कृतं विरोधं or कृतविरोधं परिहरता is the reading of most of the Mss. This is a good reading as far as विरोधपरिहार is concerned, but the instrumental तेन चाङ्गरूपेण will, in that case, have to be construed with संभोगात्मा शृङ्गारः ध्वन्यते and the sentence will be hard to explain.

**Page 11.**

विधुर=overpowered ( विवश ).

बिन्दुद्वन्द्व°——

This verse ought to have been printed in small letters with inverted commas. It occurs among the four concluding verses at the end of the *Nâtikâ* कर्णसुन्दरी of बिह्लण. *Vide* कर्णसुन्दरी, printed in the *Kâvyamâlâ* Series p. 56. *Bihlaṇa* is the author of चौरपञ्चाशिका, विक्रमाङ्कदेवचरित, and कर्णसुन्दरी and a fourth work not yet known, as some of the verses ascribed to him in

शार्ङ्गधरपद्धति and सूक्तिमुक्तावली are not found in any of these three works. He was a native of *Kâśmîra*, but left it in his youth and wandered in foreign cities of मथुरा, वृन्दावन, कान्यकुब्ज, काशी, प्रयाग, अयोध्या, धारा, सोमनाथ, सेतुबन्ध, and in Gujarat. He finally visited कल्याण and obtained the title of विद्याधिपति conferred upon him by कुन्तलेन्दु or त्रैलोक्यमल्ल, or by his son विक्रमाङ्कदेव. He flourished in the eleventh century. *Vide* दुर्गाप्रसाद's Intro. to कर्ण०.

**Page 12—**

किं चास्य वाक्यार्थीभूतत्वात्——————सूचित एव ध्वनिः——

The suggestion of the emotion of the poet's attachment to *S'iva* ( भावध्वनि *i. e.* कवेर्देवताविषयकरतिरूपभावध्वनि ) is the final and consequently predominant idea in the verse ' प्रालेयाचल°——'; and this is helped on by the suggestion of three sorts, matter, figure, and sentiment ( वस्तुध्वनि, अलंकारध्वनि, and रसध्वनि ), the erotic sentiment being suggested by *S'iva's* painting figures on the breasts of *Pârvatî*, the furious sentiment by his burning *Kâma* by the fire of his third eye on his forehead, and the apparent opposition between these sentiments, the erotic and the furious, which suggests the figure विरोधाभास, being removed by the suggestion of the marvellons matter, viz. the extraordinary greatness of *S'iva* ( अलौकिकमहिमस्वरूपाद्भुतवस्तुध्वनि ). The suggestion of the emotion being helped ( उपस्कार्य ) by the threefold suggestion of वस्तु, अलंकार, and रस which is the helper ( उपस्कारक ), there is what is known as संकर or fusion of suggestions.

**Page 14.**

अर्थवादरूपत्वात्——

अर्थवाद is defined by *Laugâkshi* as प्राशस्त्यनिन्दान्यतरपरं वाक्यम्. It recommends a precept by putting forth the good arising from its observance and the evils resulting from its omission and gives historical instances in support of it. *Gautama's Sùtra* about it is 'स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ।'. स्तुति is explained in the *Bhâshya* as विधेः 'फलवादलक्षणा या प्रशंसा सा स्तुतिः ।'. The instance given for it is,——'सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयतीत्येवमादिः'. 'अनिष्टफलवादो निन्दा ।', as 'स एष वा प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजते गर्त्ते पतत्ययमेवैतज्जीर्यते वा इत्येवमादि.' 'अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः ।', as 'हुत्वा वपामेवाग्रेऽभिधारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिधारयन्ति । अग्नेः प्राणाः पृषदाज्यमित्येवमभिदधति इत्येवमादि.' The last पुराकल्प is thus defined and explained:—' ऐतिह्यसमाचरितो विधिः पुराकल्पः इति ।, as 'तस्माद्वा एतेन पुरा ब्राह्मणा हविः पवमानं सामस्तोममस्तौषत यज्ञं प्रतनवामहे इत्येवमादिः ॥' गौत० न्याय० pp. 106-7.

**Page 16.**

विश्वोल्लङ्घन°——

The stanza follows exactly *Mammaṭa*'s well-known stanza

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥'

which is quoted by *Mallinâtha* in his commentary on the first stanzas of all the five *Mahâkâvyas*, commented upon by him. कान्तासंमितत्व is shown by our poet in the 7 th stanza.

The second stanza quoted by *Mallinâtha* to show the purposes that poetry serves is from the सेतुबन्धमहाकाव्य of

प्रवरसेन, p. 9.

The following is the छाया of the Prâkṛita verse :—

'परिवर्धते विज्ञानं संभाव्यते यशोऽर्ज्यन्ते गुणाः ।
श्रूयते सुपुरुषचरितं किं तद्येन न हरन्ति काव्यालापाः ॥'

It is also quoted by *Vidyânâtha* in his *Pratâparudrayas'obhûshaṇa.*

Compare also the following stanza from *Bhâmahâlaṅkâra*:-

'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
प्रीतिं करोति कीर्तिं च साधुकाव्यनिबन्धनम् ॥'

*Rudraṭa* too has a similar stanza :—

'अर्थमनर्थोपशमं शमसममथवा मतं यदेवास्य ।
विरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः ॥' काव्यालं॰ p.4.

**Page 18.**

**बन्धोऽर्धनारीश्वरश्लाघालङ्घनजाङ्घिकः——**

The unity of composition, more graceful than the unity of *S'iva* and *Pârvatî. Sarasvatîkaṇṭhâbharaṇa* gives in one verse the definition of poetry and the advantages of composing it :—

'निर्दोषं गुणवत् काव्यमलंकारैरलंकृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति ॥'

सरस्वती॰ परिच्छेद 1st, 2nd verse.

**Pages 18-19.**

**कृत्वा काव्य॰——**

*S'rîharsha,* son of *Hîra,* king of *Kâśmîra,* is the author of नैषधीयचरित and खण्डनखण्डखाद्य. He is generally placed in the 12 th century.

हरिहर and अर्जुन——

हरिहर, मदनकीर्त्ति, and सोमेश्वरदेव author of कीर्त्तिकौमुदी and सुरथोत्सव were contemporaries. In सुभाषितरत्नकोष of the poet कृष्ण, हरिहर and मदन are described as under:——

'हरिहर परिहर गर्वं कविराजगजाङ्कुशो मदनः ।
मदन विमुद्रय वदनं *स्मर हरचरितं पुरातीतम् ॥'

*Vide* Dr. Bhâṇḍârakar's Report on the Search of Sanskrit Mss. for 1883-4. pp. 56-7.

हरिहर and सोमेश्वर were contemporaries as appears from a verse in सोमदेव's सुरथोत्सव. *Vide* Canto XIV.

Arjuna was the son of Malwâ, whose latest known date is Vikrama 1272 ( *Vide* Dr. Bhâṇḍârakara's Report for 1883-4 pp. 103-5 ).

Pandit Durgâprasâda has the following note on अर्जुनदेव in his Introduction to अमरुशतक——

'अर्जुनवर्मदेवः सुप्रसिद्धस्य मालवाधिपतेर्भोजनरेन्द्रस्य वंश्यः सुभटवर्मसूनुरासीदिति तत्कृतटीकाप्रारम्भश्लोकेभ्यः काव्यमालायां १ लेखे मुद्रितात्तदीयदानपत्राच्च ज्ञायते । तच्च दानपत्रं १२७२ मिते विक्रमाब्दे लिखितमिति ख्रिस्ताब्दीयत्रयोदशशतकपूर्वार्धेऽर्जुनवर्म आसीदित्यपि सुव्यक्तम् । अर्जुनवर्मदेवश्च टीकायां 'यदुक्तमुपाध्यायेन बालसरस्वत्यपरनाम्ना' इति वदंस्तत्तत्स्थलेषु मदनोपाध्यायप्रणीतान् बहूञ्श्लोकान् प्रमाणत्वेनोपन्यस्तवान् । दानपत्रसमाप्तौ 'रचितमिदं राजगुरुणा मदनेन' इत्यस्ति । तस्मात् कस्यचनालंकारनिबन्धस्य प्रणेता अर्जुनवर्मगुरुर्मदनोपाध्यायोऽपि तत्समय आसीत् । तत्प्रणीतग्रन्थस्तु नाद्यापि दृक्पथं गतः ।

"हरिहर गर्वं परिहर कविराजगजाङ्कुशो मदनः ।
मदन विमुद्रय वदनं हरिहरचरितं स्मरातीतम् ॥"

इति प्राचीनं पद्यमपि कदाचिदस्यैव मदनोपाध्यायस्य वर्णनपरं स्यात् ॥'

---

* हरिहरचरितं स्मरातीतम् is the reading in Durgâprasâda's Intro. to अमरुशतक.

**Page 19.**

**प्रतिभा बहुशास्त्रदर्शिता**———

This stanza closely follows the following stanza of *Mammaṭa* :—

> शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
> काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥

The singular कारणम् follows the singular हेतुः of *Mammaṭa* and shews thât the three things, viz. प्रतिभा or poetic genius ( 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।' 'अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा' ध्वन्या० p. 29. ) which is the most important of all the causes and therefore placed first, बहुशास्त्रदर्शिता or proficiency in many branches of learning, and अभ्यास or practice, form conjointly the cause of the production of poetry. 'दण्डचक्रादिन्यायेन परस्परसापेक्षास्त्रयः कारणं न तु तृणारणिमणिन्यायेन प्रत्येकं कोर्योत्पादकाः ।'.

*Rudraṭa* and *Daṇḍin* consider the same three qualities essential in one who aspires to be a poet :———

> 'तस्यासारनिरासात् सारग्रहणाच्च चारुणः करणे ।
> त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः ॥' काव्यालं० १-४.
>
> 'नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम् ।
> अमन्दश्चाभियोगोऽस्याः कारणं काव्यसंपदः ॥' काव्याद० १.१०३.

Some are of opinion that poetic genius ( प्रतिभा or शक्ति ) is the only essential cause of the production of poetry and that the other two causes व्युत्पत्ति and अभ्यास are not indispensably necessary,— for we sometimes find even a child composing poetry,— but that they simply go to bring about a higher order of poetry.

'त्रिकं समुदितमेव हेतुरित्येके । डिम्भेनापि काव्योत्पादनाच्छक्तिरेव केवलेत्यपरे'। 'अन्यद् द्वयं तु प्रकर्षायैवेति भावः । शक्तिः खल्वनन्यथासिद्धनियतपूर्ववर्त्तिकारणम्। परयोस्तु न तथात्वमिति भावः । न च डिम्भेऽपि पूर्वजन्मार्जितयोर्निपुणताभ्यासयोः प्राचीनयोस्तयोः सत्त्वान्न व्यभिचारः । अत एव " जन्म जन्म यदभ्यस्तम्" इत्याद्युक्तिरिति वाच्यम् । परस्पराश्रयापत्तेः। तथा हि । सिद्धे कारणत्वे तयोः कल्पनम् । तस्मिंश्च सति कारणत्वमिति । तस्मान्मतद्वयमिदं परीक्षणीयं सुधीभिः ॥' *Vide Sâhityakaumudî* and the commentary on it. p.4.

*Cf.* also

'कवित्वं जायते शक्तेर्वर्धतेऽभ्यासयोगतः।
तस्य चारुत्वनिष्पत्तौ व्युत्पत्तिस्तु गरीयसी ॥'
'प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम्।
भृशोत्पत्तिकृदभ्यास इत्याद्यकविसंकथा ॥'

*Vâgbhaṭâlaṅkâra* I. 3.

and

" न विद्यते यद्यपि पूर्ववासना
गुणानुबन्धि प्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ ' काव्यादर्श १-१०४.

**Page 20.**

अकवितैव वरं कुकवितायाः———

Compare the following stanzas form *Bhâmahâlaṅkâra* :—

सर्वथा पदमप्येकं न निगाद्यमवद्यवत् ।
विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते ॥
नाकवित्वमधर्माय व्याधये दण्डनाय वा ।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥

**Page 21.**

काव्यं कर्तुं विदन्ति———महिम्नाभिधीयन्ते———

काव्यविदाम् in verse 12 means—of those who know how to compose poetry and of those who know how to appreciate it.

According to the maxim सकृदुच्चरितः शब्दः सकृदर्थं गमयति, a word, uttered once, can convey only one meaning: it can not convey two meanings. When therefore we have one word signifying two things, we must necessarily assume that there are two words of the same form, which convey two different meanings. But the two words are not perceived to be different, because they are pronounced at one and the same time by the same effort. This is what constitutes the figure श्लेष ( coalescence ). The roots विद् to know ( 2 nd Conj. Par. ) and विद् to think ( 7 th Conj. Atm. ) have क्विप् added and we have the word काव्यविद् conveying the two senses of 'a composer and an appreciator of poetry.' This is known as प्रकृतिश्लेष or coalescence of the crude forms of roots. The instance of प्रकृतिश्लेष given by *Mammaṭa* is:—

अयं सर्वाणि शास्त्राणि हृदिज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥

Here सामर्थ्यकृत् means सामर्थ्यं करोतीति when construed with मित्राणाम् and सामर्थ्यं कृन्ततीति when construed with अमित्राणाम्.

सहृदयाः=Appreciators. ' येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते हृदयसंवादभाजः सहृदयाः । यथोक्तम्—

" योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥ " ध्वन्या॰ p. II.

**Page 22.**

पाकः———

*Vidyânâtha* defines it as under:—

' रसास्वादप्रभेदाः स्युः पाकाः पाक इव स्थिताः । '.

शब्दार्थौ वपुरस्य———

*Cf.* the following stanza from the *Dhvanyâloka* :—

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥

## Page 23.

शब्दार्थवपुस्तावत् काव्यं——

*Ânandavardhana* says, ' शब्दार्थशरीरं तावत् काव्यम् and *Abhinavagupta* has the following note on तावत्——

तावद्ग्रहणेन कस्याप्यत्र न विप्रतिपत्तिरिति दर्शयति ।

लोकायतिकाः=The Chârvâkas, Materialists. लोकेषु आयतं विस्तीर्णमनायाससाध्यत्वात् लोकायतं चार्वाकमतसिद्धधर्मः सोऽस्यास्तीति लोकायतिकः । " प्रायेण सर्वप्राणिनस्तावत्

'यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः' ॥ "

इति लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्वाकमतमनुवर्तमाना एवानुभूयन्ते । अत एव तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम् ॥' सर्वदर्श० p. 2.

According to their views the soul is no other than the body possessed of the vital power, the happiness and the misery experienced in this world constitute heaven and hell, and the destruction of the body is salvation. Their god is no other than the highest king on this world. " चैतन्यविशिष्टदेह एवात्मा देहातिरिक्त आत्मनि प्रमाणाभावात् प्रत्यक्षैकप्रमाणवादितया अनुमानादेरनङ्गीकारेण प्रामाण्याभावात् । अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । कण्टकादिजन्यं दुःखमेव नरकम् । लोकसिद्धो राजा परमेश्वरः । देहोच्छेदो मोक्षः ॥ ".

Their views are embodied in the following verses :—

" अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥

किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥

देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ।
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥

यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ "

*Vide* सर्वदर्शनसंग्रह pp. 4 and 6.

*Siddhântachandrodaya* thus explains the views of the followers of *Chârvâka* :——

'चार्वाकास्तु ब्राह्मणोऽहं गौरोऽहं स्थूलोऽहं जानामीत्यादिसामानाधिकरण्यप्रतीतेः ब्राह्मणत्वादिधर्मवति शरीर एव ज्ञानात् सुखाद्याश्रयत्वं सिध्यतीति शरीरमेवात्मा । अत्र श्रुतिरप्याह । स वा एष पुरुषोऽन्नरसमय इति । ननु शरीरस्य पार्थिवत्वे घटादिवन्न चेतनं स्यादिति चेन्मैवं मंस्थाः । केवलनागवल्लीदलस्य रागानुत्पादकत्वेऽपि नागवल्लीदलखदिरचूर्णक्रमुकसमुदायात्मकताम्बूलस्य रागोत्पादकत्ववत् केवलपार्थिवस्य चैतन्यानुत्पादकत्वेऽपि भूतचतुष्टयसमुदायात्मकशरीरस्य तदुत्पादकत्वे किं बाधकमित्याहुः ।

चार्वाकैकदेशिनस्तु काणोऽहमहं जानामीति इन्द्रियधर्मसामानाधिकरण्यदर्शनात् सुषुप्तिदशायां सत्यपि शरीरे चक्षुराद्युपरमे घटाद्यनुपलब्धेश्चेन्द्रियमेवात्मेत्याहुः ।

अपरे चार्वाकास्तु सुषुप्तिदशायां चक्षुरादीनामुपरमेऽपि मनसा सर्वव्यवहारदर्शनात् तस्य नित्यत्वाच्च मन एवात्मा । अत्र श्रुतिरप्याह । अन्योऽन्तरात्मा मनोमय इति मन्यन्ते ।

इतरे चार्वाकास्तु प्राणेन विना व्यवहारादर्शनात् पिपासावानहमित्याद्युपलब्धेश्च प्राण एवात्मा । अत्र श्रुतिरप्याह । अन्योऽन्तरात्मा प्राणमय इति कलयन्ति ।'

The following is from *Sadânanda's Vedântasâra* :——

चार्वाकस्तु "स वा एष पुरुषोऽन्नरसमय" इत्यादि श्रुतेः प्रदीप्तगृहात् स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात् स्थूलोऽहं कृशोऽहमित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति । अपरश्चार्वाकः "ते ह प्राणाः प्रजापतिमेत्य ब्रूयुः" इत्यादिश्रुतेरिन्द्रियाणामभावे शरीरचलनाभावात् काणोऽहं बधिरोऽहमित्याद्यनुभवाच्चेन्द्रियाण्यात्मेति वदति । अपरश्चार्वाकः "अन्योऽन्तर आत्मा प्राणमय" इत्यादिश्रुतेः प्राणाभाव इन्द्रियादिचलनायोगादहमशनायवानहं पिपासावानित्याद्यनुभवाच्च प्राण आत्मेति वदति । अन्यस्तु चार्वाकः "अन्योऽन्तर आत्मा मनोमयः" इत्यादिश्रुतेर्मनसि सुप्ते प्राणादेरभावादहं संकल्पवानहं विकल्पवानित्याद्यनुभवाच्च मन आत्मेति वदति ॥ pp. 32-3.

**Page 24.**——

भाक्तम्=लाक्षणिकम्; derived from लक्षणा or Implication. *Abhinavagupta* has the following ingenious note upon it:——

' भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यते इति भक्तिर्धर्मोऽभिधेयेन सारूप्यादिः । तत आगतो भाक्तो लाक्षणिकोऽर्थः । यदाहुः——

अभिधेयेन सारूप्यात् सामीप्यात् समवायतः ।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता ॥

इति । गुणसमुदायवृत्तेः शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः । तत आगतो गौणोऽर्थो भाक्तः । भक्तिः प्रतिपाद्ये सामीप्यतैक्ष्ण्यादौ श्रद्धातिशयः। तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च । मुख्यस्य चार्थस्य भङ्गो भक्तिरित्येवं मुख्यार्थबाधननिमित्तप्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति ॥ लोचन, p. 9.

अभाववादिनः——

Those who maintain that there is no such thing as *Dhvani*, that the suggested sense is no other than the expressed

sense, in as much as it simply goes to adorn it. *Bhâmaha* says:—

'शब्दश्छन्दोऽभिधानार्थ इतिहासाश्रयाः कथाः ।
लोको युक्तिः कलाश्चेति मन्तव्या काव्यधर्मशी ( काव्यधूर्वहाः ? )'

**Page 25.**

किं च प्रतीतः प्रतिषिध्यते—कारणत्वात् ।———

This is the argument put forth before those who are अभाववादि's, that is, who deny the existence of *Dhvani* :—

Is *Dhvani* denied, though it is apprehended, or because it is not apprehended? In the first case, is it denied because it does not exist in some places or because it is found no where ? If it is denied because it is not found in some places, your argument is open to the fault of ( सिद्धसाधन ) proving what is already proved ; because we too admit that *Dhvani* does not exist in some places ( in *Chitrakâvya* ). If it is denied (though apprehended) because it is not found anywhere, then you commit the fault of व्याघात or contradicting yourself; for you admit that it is apprehended and say that it is not found anywhere. In the second case, that is, if you deny *Dhvani* because it is not apprehended, then too you are wrong since nothing can be denied without being conceived in the mind. A thing cannot be denied, unless it is conceived in the mind.

सिद्धसाधनम्—"सिषाधयिषाया असत्त्वे प्रमाणान्तरेणावगतार्थसाधनमनुमानम् । यथा पर्वते वह्निनिश्चयानन्तरमपि पुनस्तत्साधनाय विहितं 'पर्वतो वह्निमान् धूमात्' इत्यनुमानम्" *Vide* न्यायकोश, pp. 937-8.

क्वाचित्कत्वनिषेधप्रतियोगित्वस्य———

यस्य अभावः स तस्य प्रतियोगी, as घट is the प्रतियोगिन् of घटाभाव. *Dhvani* is denied in some cases. ध्वनि is then the प्रतियोगिन् of its क्वाचित्कनिषेध, and there is प्रतियोगित्व in ध्वनि. D.'s reading ध्वनौ for ध्वनेः is also good.

प्रतियोगिप्रतीतेः प्रतिषेधं प्रति कारणत्वात्—

The प्रतीति (apprehension) of *Dhvani* is denied ; प्रतीति therefore becomes the प्रतियोगिन् of प्रतिषेध and as the apprehension precedes the denial, प्रतीति becomes the कारण of प्रतिषेध ( तस्य पूर्वभावित्वात् ).

**Pages 26-7.**

गुणातिक्रमेणोपजातमहिमानः कथमपि न भवन्ति रीतयः———

रीति's are styles, 'गुणविशिष्टरचनात्मिका,' as defined by Mallinâtha. They are treated of in the text at the end of the fifth *Unmesha*. *Sarasvatîkaṇṭhâbharaṇa* defines, derives and divides it as under :—

'वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।
रीङ्गताविति धातोः सा व्युत्पत्त्या रीतिरिष्यते ॥
वैदर्भी साथ पाञ्चाली गौडीयावन्तिका तथा ।
लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥' सर०कण्ठा० pp. 147-8.

*Abhinavagupta* has the following gloss upon रीति——

'तेषां ( i. e. गुणानां ) च समुचितवृत्त्यर्पणे यदन्योन्यमेलनक्षमत्वेन पानक इव गुडमरिचादिरसानां संघातरूपतागमनं दीप्तललितमध्यमवर्णनीयविषयं गौडीयवैदर्भपाञ्चालदेशहेवाकप्राचुर्यदृशा तदेव त्रिविधं रीतिः ॥' ध्वन्या० लो० p. 6.

रीति's cannot thus be contemplated apart from *Guṇas* and are therefore included in *Guṇas*. This is the argument of the पूर्वपक्षिन्.

**Page 27.**

**वृत्तयस्तावदलंकारान्तर्भूता एव**———

**वृत्ति**'s are styles of dramatic composition. They are included under different sorts of *Anuprâsa;* as they are formed by a special arrangement of letters to convey different sorts of meanings agreeable to different sentiments.

" वर्त्तन्तेऽनुप्रासभेदा आस्विति । "
' सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक्पृथगनुप्रासमुशन्ति कवयस्तथा ॥ '

**इति । पृथक्पृथगिति परुषानुप्रासः उपनागरिकानुप्रासः कोमलानुप्रास इति वृत्तयोऽनुप्रासजातय एव ॥**' *Abhinavagupta* on *Dhvanyâloka*, pp.5–6.

**वृत्ति** is thus defined aud divided in **सरस्वतीकण्ठाभरण**—

" या विकासेऽथ विक्षेपे संकोचे विस्तरे तथा ।
चेतसो वर्त्तयित्री स्यात् सा वृत्तिः सापि षड्विधा ॥
कैशिक्यारभटी चैव सात्वती भारती तथा ।
मध्यमारभटी चैव तथा मध्यमकैशिकी ॥ " pp. 151–2.

It is generally taken to be of four kinds :———

' भारती सात्वती चैव कैशिक्यारभटी तथा ।
चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम् ॥ '

**नाट्यशास्त्र १-२५.**

**वृत्ति**'s are **नाटकरचनाविशेषाः** and are favourable to the development of sentiments as under :—

' शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ॥ '

*Vide* **साहित्यदर्पण ४-१०.**

## Pages 27-8.

**जातिस्तु जातिमतो नातिरिच्यते**——

As the *Mîmaṁsakas* who place संकेत in जाति derive व्यक्ति by आक्षेप, so is जाति to be taken to mean जातिमत्. This is the solution of the difficulty as to how वृत्ति which is an अनुप्रास-जाति is to be included in अलंकार's. bf. 'जातिर्जातिमतो नान्या समुदायश्च समुदायिभ्यो नान्यः इति वृत्तिरीतयो न गुणालंकारव्यतिरिक्ताः' *Abhinavagupta* on *Dhvanyâloka*, p. 6.

## Pages 28-9.

**तस्मादभिधाव्यापार——को वेद किं निमित्तम्**——

This exactly follows the passage of the *Dhvanyâloka* below:—

'किं च वाग्विकल्पानामानन्त्यात् संभवत्यपि वा कस्मिंश्चित् काव्यलक्षणविधायिभिः प्रसिद्धैरप्रदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति यदलीकसहृदयत्वभावनामुकुलितलोचनैर्नृत्यते तत्र हेतुं न विद्मः ॥' ध्वन्या॰ p. 8.

The पूर्वपक्षिन् now sums up his argument in these words :—

Who can say the reason why you bestir yourself, parading so much proficiency in subtlety of reasoning, giving a technical name *Dhvani* to a certain suggested sense which at the most is no other than a *Guṇa* or an *Alaṅkâra* and is not represented as a separate thing by old *Âlaṅkârikas*, such as *Bhâmaha* and others, because it comes under the general definition of producing a charm (*Guṇa*, *Alaṅkâra* and *Dhvani* being all included under the definition of what produces a charm) even where it is possible on account of the endlessness of the varieties of the literal power or denotation of words.

**Pages 29-30.**

**यत्र तु समासोक्त्यादिषु स्फुटैव प्रतीतिः———तदन्तर्भावो न भङ्गुरः———**

*Cf.* 'यत्र तु प्रतीतिरस्ति यथा समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुतिदीपकसंकरालंकारादौ तत्र ध्वनेरन्तर्भावो भविष्यति।' ध्वन्या॰ p. 35.

Pages 29-31.

**गुणेषु तावन्न ध्वनेरन्तर्भावो——त्रिविधस्य ध्वनेरलंकारत्वं तावत् प्रत्याविष्टम्—**

The *Siddhântin* meets the arguments of the *Pùrvapakshin* as under :——

*Dhvani* cannot be included under *Guṇas*; because *Guṇas* are the properties of *Rasa* ( *Vide Unmesha* V. ). As bravery and other properties reside in the soul, so do *Mâdhurya* and other *Guṇas* reside in sentiment (रस) which is the soul of poetry. Since properties cannot be identified with substances in which they reside by intimate relation ( समवायसंबन्ध ), so cannot *Guṇas* be comprehended under *Guṇins* or *Dhvani.* Nor can *Dhvani* be placed under *Alaṅkâras.* For certain *Alaṅkâras,* such as *S'lesha,* have no connection whatever with the suggested sense, they being concerned only with the expressed sense. *Dhvani* therefore cannot be included under such *Alaṅkâras.* Nor can it be included under those *Alaṅkâras* like *Samâsokti* in which there is a clear apprehension of the suggestion of matter ( suggestion of matter being included by *Bhâmaha* and others under *Alaṅkâras* ); because a poem is called *Dhvani* when the suggested sense is predominant in it, and a poem full of *Guṇas* and *Alaṅkâras* in which the

suggested sense is subordinate to the expressed sense is called *Chitra.* The predominance of the suggested sense thus constituting *Dhvani* and the subordination of it to the expressed sense constituting *Samâsokti* and other *Alaṅkâras,* it is clear that *Dhvani* cannot be included under *Alaṅkâras.* Nor is the suggestion of *Alaṅkâras* included under *Alaṅkâras.* The figure *Upamâ* is no doubt suggested by the figures *Rûpaka, Dîpaka, Tulyayogitâ* and others and it adorns the expressed meaning. But as the suggestion of *Upamâ* is subordinate to the expressed sense, there is no *Dhvani. Rasa, Bhâvâ, Rasâbhâsa, Bhâvâbhâsa,* and *Bhâvaśânti* ( which are treated of in the 3rd *Unmesha )* are also suggested in the figures *Rasavat, Preyas, Ûrjasvin,* and *Samâhita* ; but the suggestion of *Rasa* &c. cannot be included in the figures *Rasavat* &c.; because the figures *Rasavat* &c. are constituted only when *Rasa* &c. are subordinate. When they are predominant, there is *Dhvani.* How can *Rasa* which constitutes the soul of poetry, and which is fit to be adorned ( अलंकार्य ), be an ornament ( अलंकार )? Moreover the argument that *Dhvani* is not different from *Guṇa* and *Alaṅkâra* because it produces a charm is vitiated by the fallacy called असिद्धहेतु (where the middle term is not proved); because *Dhvani* is not the adorner (चारुत्वहेतु) but the adorned.

*Cf.* the following explanation and refutation of the views of *Bhâmaha* and others by *Râjânaka Ruyyaka* in his *Alaṅkârasarvasva* :——

**इह हि तावद्भामहोद्भटप्रभृतयश्चिरन्तनालंकारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतयालंकारपक्षनिक्षिप्तं मन्यन्ते । तथा हि पर्यायोक्ताप्रस्तुतप्रशंसासमासो-**

समयाक्षेपरुयाजस्तुल्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन 'स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम्' इति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः। रुद्रटेन तु भावालंकारो द्विधैवोक्तः। रूपकदीपकापह्नुतितुल्ययोगितादावुपमाद्यलंकारो वाच्योपस्कारकत्वेनोक्तः। उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता। रसवत्प्रेयःप्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः। तदित्थं त्रिविधमपि प्रतीयमानमलंकारतया ख्यापितमेव। . . . . . . . . . .

. . . . . . . । तस्माद्विषय एव व्यङ्ग्यनामा (Scil. न तु व्यापारो भट्टनायकरीत्या) जीवितत्वेन वक्तव्यः। यस्य गुणालंकारकृतचारुत्वपरिग्रहसाम्राज्यम्। रसादयस्तु जीवितभूता नालंकारत्वेन वाच्याः। अलंकाराणामुपस्कारकत्वाद्रसादीनां च प्राधान्येनोपस्कार्यत्वात्। तस्माद् व्यङ्ग्य एव वाक्यार्थीभूतः काव्यजीवितमित्येष एव पक्षो वाक्यार्थविदां सहृदयानामावर्जकः। व्यञ्जनव्यापारस्य सर्वैरनपह्नुतत्वात् तदाश्रयेण च पक्षान्तरस्याप्रतिष्ठानात्॥' अलं० सर्व०, pp. 3-6 and 11-12.

*Dhvanikâra* says, "यदप्युक्तम्–'कामनीयकमनतिवर्तमानस्य तस्योक्तालंकारादिप्रकारेष्वन्तर्भावः' इति तदप्यसमीचीनम्। यतो वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूता न तु तदेकरूपा एवेति प्रतिपिपादयिष्यमाणत्वात्। परिकरश्लोकश्चात्र——

'व्यङ्ग्यव्यञ्जकसंबन्धनिबन्धनतया ध्वनेः।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः॥'" ध्वन्या०, p. 34.

Pages 32-35.

यत् पुनरनुमानतो——तयोराविर्भावदर्शनात्————

In this passage are refuted the views of *Mahimabhaṭṭa*, the author of *Vyaktiviveka*. *Mahimabhaṭṭa's* statement, that *Dhvani* is not different from *Anumâna*, is worthless. For *Vyâpti* is a constituent part of *Anumâna*. There can be no

*Anumâna* without *Vyâpti.* It is the invariable concomitance of the *Sâdhana* (middle term) with the *Sâdhya* (major term). In the case before us ध्वनि is the साध्य and शब्दार्थौ the साधन put forth by the पूर्वपक्षिन्. Now the invariable concomitance of the middle term with the major term is ascertained by अनुपलब्धि (non-cognition, as when the absence of knowledge is to be proved by the absence of what is fit to be known, the व्याप्ति, यत्र यत्र ज्ञेयाभावस्तत्र तत्र ज्ञानाभावः, being proved by the non-cognition of what is fit to be known), or by तादात्म्य (identity, as when *S'ims'apâ* is to be proved a tree, the व्याप्ति between शिंशपात्व and वृक्षत्व is ascertained by their identity), or by तदुत्पत्ति (production from it, as when the existence of fire is to be proved from the existence of smoke, the व्याप्ति between धूम and वह्नि is decided by धूम being produced from वह्नि). As stated above, ध्वनि is the साध्य, and शब्दार्थौ, साधन of the पूर्वपक्षिन्. Now अनुपलब्धि cannot prove the साध्य in this case; for it can prove only that साध्य which consists of absence of some thing, as the absence of a jar (कुम्भाभाव) can be proved from अनुपलब्धि. The fact, that there is no jar here, can be proved from the fact that it is not cognised here; since, had it been here, it would have been cognised. If the पूर्वपक्षिन् were to argue that he is going to prove ध्वन्यभाव from अनुपलब्धि, the हेतु is vitiated, it being असिद्ध (inconclusive). When the cognition of ध्वनि is evident, how can its non-cognition be accepted? The सिद्धान्तिन् does nor prove the absence of ध्वनि from its non-cognition, but the existence of ध्वनि from its cognition. Nor can ध्वन्यभाव be proved from the non-cognition of words and their sense. For the

noncognition of a jar cannot prove the absence of a pillar. The non-cognition of one thing cannot prove the absence of another and therefore the non-cognition of words and their sense cannot prove the absence of ध्वनि. Thus अनुपलब्धि cannot establish the व्याप्ति between साध्य and साधक (ध्वनि and शब्दार्थ). Let us now see whether तादात्म्य can establish the व्याप्ति. The following is the syllogism in which it establishes the व्याप्ति. This is a tree, because it is a *S'ims'apâ.* Whatever is a *S'imśapâ* is a tree, as this one which is admitted by all. This is a *S'imśapâ.* Therefore it is a tree. Here the व्याप्ति between *S'ims'apâ* and a tree is established by identity between them. Though one might say that there is no व्याप्ति in the form, whatever is a tree is a *S'imśapâ,* because sandal and *Champaka* are not *S'imśapâs,* yet there is a व्याप्ति in the form, whatever is a *S'imśapâ* is a tree. Therefore, this is a tree because it is a *S'imśapâ,* is a correct अनुमान. For though the हेतु, वृक्षत्व, cannot prove the साध्य, शिंशपात्व, the हेतु, शिंशपात्व, proves the साध्य, वृक्षत्व. There is no व्यभिचार of the हेतु, or no instance in which हेतु is found where साध्य is not found, there being no शिंशपात्व in वृक्षत्वाभाववत् (where there is no वृक्षत्व). Thus the व्याप्ति between शिंशपा and वृक्ष being established by their identity, the हेतु, शिंशपात्व, proves the साध्य, वृक्षत्व. But तादात्म्य cannot establish the व्याप्ति in the case before us. As the हेतु, शिंशपात्व, proves the साध्य, वृक्षत्व, by its identity with it, so neither words nor sense, whatever is taken as *Hetu,* can prove the suggested sense by identity; because there can be no identity between the suggested meaning and that which suggests it (words or their primary

signification). On the contrary the suggested meaning comes out prominently, keeping words and their primary signification in a subordinate position. Thus तादात्म्य cannot be व्याप्तिप्रयोजक. It now remains to see whether the व्याप्ति between साधन and साध्य can be established by तदुत्पत्ति (साधन being produced from the साध्य). But this view also does not stand the test. For this is the instance of तदुत्पत्ति—This region has fire, because it has smoke. Smoke being produced from fire is able to serve as a हेतु in proving the existence of fire, its producer. But in the case in question, words and their sense which are admitted as हेतु (in proving the साध्य, ध्वनि) by the पूर्वपक्षिन् (who considers ध्वनि as included in अनुमान) are not accepted even by him as produced from the suggested sense. Because words and their sense (expressed sense) manifest themselves from their generating causes even before the suggested sense arises. Thus as neither अनुपलब्धि, nor तादात्म्य, nor तदुत्पत्ति can establish the व्याप्ति between the middle term, शब्दार्थौ, and the major term, ध्वनि, there is no व्याप्ति and consequently the view that ध्वनि is included under अनुमान, propounded by *Mahimabhaṭṭa* in his व्यक्तिविवेक, is unsound.

*Jayaratha*, in his commentary *Alaṅkâravimarshiṇî* on *Alaṅkârasarvasva*, gives the following verse embodying the views of *Mahimabhaṭṭa*:—

'वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ।
संबन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥'

This view is thus touched upon in *Alaṅkârasarvasva*:—

यस्तु व्यक्तिविवेककारो वाच्यस्य प्रतीयमानं प्रति लिङ्गतया व्यञ्जनस्यानुमानान्तर्भावमाख्यत् तद्वाच्यस्य प्रतीयमानेन सह तादात्म्यतदुत्पत्त्यभावादविचारिताभिधानम्। तदेतत् कुशाग्रधिषणैः क्षोदनीयमातिगहनगहनमिति नेह प्रतन्यते॥ अलं॰ स॰, pp. 12-13.

The commentary of *Jayaratha* on this is worth perusal:——

इह लिङ्गलिङ्गिनोस्तादात्म्यतदुत्पत्तिभ्यामेव तावत् प्रतिबन्धो निश्चीयते। तन्निश्चयेनैव च साध्यसिद्धिः। अन्यथा हि साध्यसिद्धिर्न स्यात्। व्यभिचारात्। तत्र तादात्म्यं यथा कृतकत्वानित्यत्वयोः। तदुत्पत्तिर्यथा वह्निधूमयोः। वाच्यप्रतीयमानयोः पुनस्तादात्म्यतदुत्पत्ती न स्तः। तथा हि——'निःशेषच्युतचन्दनं स्तनतटम्——' इत्यादौ विधिना निषेधो निषेधेन वा विधिः प्रतीयते। न तस्य वाच्येन सह तादात्म्यम्। विरुद्धत्वात्। न ह्यभावो भावात्मा भवति भावोऽप्यभावात्मा। नापि तदुत्पत्तिः। अभावस्य जन्यजनकत्वानुपपत्तेः। नापि निःशेषच्युतचन्दनादीनां विशेषणानां तदन्तिकगमनानुमापकत्वं युक्तम्। तेषां स्नानादावपि सद्भावादनैकान्तिकत्वात्॥ p. 13.

तादात्म्य and तदुत्पत्ति are put forth as व्याप्तिप्रयोजक by the बौद्ध's as under:————

'तदुत्पत्तिनिश्चयेन अविनाभावो निश्चीयते। तदुत्पत्तिनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः। कार्यस्योत्पत्तेः प्रागनुपलम्भः कारणोपलम्भे सत्युपलम्भः उपलब्धस्य पश्चात् कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते। तथा तादात्म्यनिश्चयेनाप्यविनाभावो निश्चीयते। यदि शिंशपा वृक्षत्वमतिपतेत् स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः। अप्रवृत्ते तु बाधके भूयः सहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता। शिंशपावृक्षयोश्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते। न ह्यत्यन्ताभेदे तत् संभवति। पर्यायत्वेन युगपदपि प्रयोगायोगात्। नाप्यत्यन्तभेदे। गवाश्वयोरनुपलम्भात्। तस्मात् कार्यात्मानौ कारणमात्मानमनुमापयत इति सिद्धम्॥" *Vide* सर्वदर्शनसंग्रह of माधवाचार्य, p. 8.

व्यञ्जनावृत्ति is established by *Mammaṭa* in the fifth *Ullâsa*, at the end of which he refutes the view of *Mahimabhaṭṭa* by shewing how व्यञ्जना cannot be included in अनुमान. For the अनुमान in such cases is vitiated by fallacies. He shews how in the well known instance 'भ्रम धार्मिक विस्रब्धो——' the अनुमान is vitiated by the fallacies अनैकान्तिकत्व, विरुद्धत्व and असिद्धि.

## Page 36.

अभिहितान्वयवादिनः———

They are *Mîmâṁsakas* of the *Bhaṭṭa* school, *i. e.* followers of *Kumârila* or *Tutâta* who are both known as *Bhaṭṭa*. They are *Naiyâyikâs*. They maintain that words have a general meaning. The logical connection of words that form a sentence is not known from the import of words, but from आकाङ्क्षा, संनिधि and योग्यता. In गामानय, गो means सास्नादिमान् पदार्थ generally, अम् shews कर्मत्व generally, आ hitherward generally, नी motion generally, and हि, मध्यमपुरुषकर्ता and आज्ञा generally. गो does not express the गो meant there, viz. the आश्रय of the कर्मत्व denoted by अम्, nor does अम् mean कर्मत्व residing in गो and with reference to the क्रिया, आनयन, and so with आ and नय. 'एतेषामभिहितान्वयवादिनामयमाशयः। घटं करोतीत्यत्र घटवृत्ति-कर्मत्वानुकूला कृतिरित्यर्थो बोध्यते। तत्र घटशब्दस्य घटोऽर्थः अम्प्रत्ययस्य च कर्मता। वृत्तिता तु न कस्यापीत्यपदार्थोऽपि वृत्तिता तात्पर्यवशात् अनयोः संसर्ग-विधया भासते ॥'. The connection between the पदार्थ's is known from आकाङ्क्षा, संनिधि and योग्यता, and when the connection (अन्वय) is known, a special sense arises, which was not experienced before. This is तात्पर्यार्थ or वाक्यार्थ. It is पदार्थातिरेक,

because पद's have only a general meaning. According to this view the purport of a sentence arises not from the sense of the words themselves, but from the logical connection among the several notions belonging to them. *Pradīpakāra* thus puts forth this view:———

'लाघवात् पदानां पदार्थमात्रे शक्तिः न त्वन्वयांशेऽपि । गौरवादन्यलभ्यत्वाच्च । संसर्गो हि तात्पर्यार्थो वाच्याद्यर्थविलक्षणशरीर आकाङ्क्षायोग्यतासत्तिवशाद्-पदार्थोऽपि प्रतीयते । न चापदार्थप्रतीतावतिप्रसङ्गः । स्वरूपसतः शक्यान्वयस्यस्य नियामकत्वादित्यभिहितान्वयवादिनां मतम् ॥' काव्यप्र०, p. 20.

अभिहितानां ( साधारण्येन पदशक्त्या प्रतिपादितानां ) पदार्थानामन्वय इति वादिनः अभिहितान्वयवादिनः.

**Page 38.**

यत्र स्वस्वपदार्थमात्राभिधानाय———प्रत्याशा———

The author refutes the views of the *Mīmāṁsakas* who do not accept ध्वनि ( 'प्रतीयमानं प्रति विवदमानान्' as he puts them, *Vide* p. 36 ). They hold that there is no व्यञ्जनावृत्ति and that the व्यङ्ग्य sense is conveyed by अभिधावृत्ति. But when according to their views words have only the power of conveying a general meaning and when they cannot express the sense of a sentence which is no other than connected notions belonging to themselves, in other words, when the अभिधावृत्ति of words is not competent to explain to us the logical connection of the ideas conveyed by them and thus to enable us to arrive at the meaning of a sentence, but has to take in the help of आकाङ्क्षा, योग्यता, and संनिधि for the purpose, it can surely not be expected that it can take us to the ध्वनि or

